THE

# CHATURVARGA CHINTÁMANI

BY

## HEMÁDRI.

## Vol. I.

## DÁNAKHANDA

*Part I.*

PUBLISHED BY
PRÁBHÁKARI & Co., BENARES CANTT.

REVISED AND ENLARGED BY

PANDITA SADÁSHÍVA ÁCHÁRYA DIKSHITA.



BENARES:
PRINTED AT THE MEDICAL HALL PRESS.

1902.

# भूमिका।

भो भोः सहृदयधुरीणा धीमज्जनमुकुटमणयो विद्वत्प्रवरा भवद्भि-रवसितमेव प्राचीनेतिहासशास्त्रान्तरात् किलास्मिन् भारते वर्षे पुरा मी-मांसा-स्मृति-पुराण-व्याकरण-तर्क-योग-साङ्ख्य-वेदान्ता-दिनिखिलदर्शननिर्मातारस्त्रिकालज्ञा बहुलाः पारासर-जैमिनिप्रभृतयो महर्षय आविर्बभूवुरिति।

ते सर्वे महर्षिवराः समलोष्टाश्मकाञ्चना अपि प्रायशोऽशेषजनो-पकारकारकाणि नानाप्रकाराणि दर्शनानि प्रादुश्चक्रुः। विनयसौजन्यादि-गुणग्रामभूषिताः कुशाग्रधिषणा उपदिष्टग्रहणपटवस्तेषां शिष्यवटवस्तानि दर्शनानि तेभ्यः सम्यगधीत्य तन्महर्षिगणयशश्चन्द्रमरीचिभिर्दशदिग्मण्ड-लानि प्रकाशयामासुः। तस्मिन् समये निजयशश्चन्द्रचन्द्रिकाविमलिता-शेषदिक्चक्रवालानां बहुयज्वनां दण्डनीत्येककुशलानामुदारतरप्रभावश-मिताशेषलोकोपद्रवाणां मनुमुखानां राज्ञां पृथिवीपालनसौष्ठवं जागर्त्त्येव।

यन्महिम्ना द्विगुणितोत्साहगरिमाणस्तैर्मन्वादिसम्राड्भिर्दानमानस-त्कारैश्च यथार्हं तर्पिता महर्षयो लोकान् शिक्षयन्तो द्यावापृथिवीं विच-रन्ति स्म। तथा युधिष्ठिर-नृपादीनां राज्यपालनकालेऽपि तेषां शिष्यप्र-शिष्यपरम्परया सन्ततमुन्नतेः परां काष्ठामधिगतः संस्कृतविद्याप्रकाशो भारत-भूमिमतीत्य त्रिभुवनं विद्योतयन्नदरीदृश्यत। तदनन्तरमपि पा-णिनि-पतञ्जलि-कात्यायन-कालिदास-गुणाढ्य-क्षेमेन्द्र-वो-पदेव-प्रभृतयो भूयांसो विद्वांसश्चन्द्रगुप्त-भर्त्तृहरि-विक्रमादित्य-

भोज-श्रीहर्ष-महादेव-हेमाद्रि-विद्वद्वरादिराजवरैः संपूजितास्तेषां राज्यसमयेऽपि नानाविधान् प्रख्यातकीर्त्तिकविवर्णितवैभवान् गद्यपद्यात्मकान् सुरसान् काव्य-नाटकानि श्रुति-स्मृत्या-शयबोधकानितर-संग्रहग्रन्थांश्च ग्रन्थयामासुः।

तेषु च विद्वच्चक्रचूडामणिः श्रीमान् वोपदेवो* देवगिरिस्थयादववंशीयश्रीमन्-महादेव-भूपतेर्यः प्राड्विवाकापरपर्यायधर्माधिकरणपण्डितो हेमाद्रिः, तस्य सभापण्डित आसीत्। तेन हेमाद्रि-प्राड्विवाकप्रीतये तन्नाम्ना चतुर्वर्गचिन्तामणि-नामको ग्रन्थो निरमायीति निखिलजनविश्रुता किंवदन्तिः।

तस्य व्रतखण्ड-दानखण्ड-कालखण्ड-श्राद्धखण्ड-परिशेषखण्डा-भिधाः पञ्च विभागाः, केषां चिन्मते व्रतखण्ड-दानखण्ड-तीर्थखण्ड-मोक्षखण्ड-परिशेषखण्डाः समुज्जृम्भन्ते। तेषु च दानखण्डो-ऽयं विभागः पञ्चभिः प्रकरणैर्युक्तः पूर्वं कलिकाता-याम् आसियाटिक-सोसायटी (Asiatic Society of Bengal) सभाध्यक्षानुमत्या श्रीमत्पण्डितवर-भरतचन्द्रशिरोमणि-ना संशोध्य गणेश-यन्त्रालये मुद्रितः।

संप्रति तत्पुस्तकालाभेनातिविकलैर्बहुभिर्जनैर्भूयोभूयः संप्रार्थ्यमानैः प्राभाकरीकम्पन्य-धिपतिभिः शोधनाय प्रेरितोऽहं पूर्वमुद्रितपुस्तक-

---

* अयं वोपदेवः कदा समुत्पन्नः, कतरां गौडजातिं द्राविडजातिं वा जन्मनाऽलङ्कृतवान्, देवगिरिः को देशः, महादेवभूपतिः कः, कदा समुत्पन्नश्चेत्यादिनिर्णयेऽन्वेषितेऽपि संप्रति नोपलब्धः। यदि कुतश्चिदुपलप्स्यते द्वितीयखण्डभूमिकायां स्थापयिष्यते।

मध्येऽशुद्धिशेषमवकलय्य पुस्तकान्तरान्वेषणायाभ्यर्थितैस्तत्कम्पन्यधिपतिभि-नैपाल-देशादानीतं लिखितपुस्तकमशुद्धप्रायमपि प्राप्य तेन बहुत्र साहाय्यदानेनामोदितोऽभवम् ।

अत्र खलु पूर्वमुद्रितपुस्तकस्थटिप्पणीर्यथावत् संरक्ष्य नेपालानीतपुस्तकस्थटिप्पणीनवीनप्रथमपुस्तकनामद्योतनेनान्वयुजम् । तद्व्यतिरिक्ताश्च मदीयाष्टिप्पण्यो बुद्धिमद्भिर्विभाव्याः ।

इह पुस्तके प्रकरणस्थलेऽध्यायनाम स्थापितमवलोक्यापि ग्रन्थकर्त्रा प्रकरणमेव स्थापितमित्यनुसंधाय मह्यमपि तदेवारोचत ।

एवं परिष्कृतोऽयं **दानखण्ड**-स्य षट्प्रकरणात्मकः **प्रथमो भागः** शुभावसरे लब्धभवत्पाणिसरोजसंयोगो मदीयां निरन्तरपरिष्कारश्रमशान्तिं सद्यो विधास्यतीति ।

अत्र भ्रान्तेः पुरुषधर्मत्वाद्ये के चन प्रमादास्ते प्राज्ञवरैः संशोधनीयाः ।

यतः—

"गच्छतः स्खलनं क्वापि भवत्येव प्रमादतः ।
हसन्ति दुर्जनास्तत्र समादधति सज्जनाः"—इति ।

विज्ञापयिता

विद्वदनुचरः

**सदाशिवाचार्यदीक्षितः ।**

# धन्यवादाः ।

नेपालाखण्डलप्राप्तकाजीति पदशालिनः ।
श्रीभागवतभक्तस्य धैर्यौदार्यदयावतः ॥
सुब्बे—ति राजपदवीकिरीटहृदयङ्गमः ।
सुतः श्रीमानादिभक्तो धीरः परमबुद्धिमान् ॥
सिन्धुकन्यास्पदीभूतः कारुण्यामृतसागरः ।
वरीवर्त्ति महाराजचरणाराधकोऽधुना ॥
तस्य सद्दानखण्डस्य हेमाद्रेर्मुद्रणाविधौ ।
असीमदयया दत्तसहायं तं महाशयम् ॥
भूषयित्वा धन्यवादशतैः श्रेष्ठिकुलान्वितम् ।
प्रार्थयामो वयं सह्यदानायेति मुदा मुहुः ॥

प्राभाकरीकम्पन्यधिपतयः ।

# THANKS.

It is with sincere feelings that we herewith testify our thanks to worthy Subba Adibhakta son of the late virtuous Kazi Bhagwat Bhakta for his timely and considerable help in getting this book printed.

PRABHAKARI & Co.,
*Benares Cantt.*

॥ श्रीः ॥

# हेमाद्रेर्दानखण्डस्थप्रथमभागस्य

## विषयानुक्रमणिका ।

श्रीः

# हेमाद्रिः ।

## तत्र दानखण्डम् ।

### प्रथमप्रकरणम् ।

कल्याणानि ददातु वो गणपतिर्यस्मिन्नतुष्टे सति

क्षोदीयस्यपि कर्मणि प्रभवितुं ब्रह्माऽपि जिह्मायते ।

जाते तच्चरणप्रणामसुलभे सौभाग्यभाग्योदये

रङ्कस्याङ्कमनङ्कुशा निविशते देवेन्द्रलक्ष्मीरपि ॥

शश्वत्पुण्यहिरण्यगर्भरसनासिंहासनाध्यासिनी

सेयं वागधिदेवता वितरतु श्रेयांसि भूयांसि वः ।

यत्पादामलकोमलाङ्गुलिनखज्योत्स्नाभिरुद्वेलितः

शब्दब्रह्मसुधाम्बुधिर्बुधमनस्युच्छृङ्खलं खेलति ॥

रागः कृष्ण नवस्तवश्रुतिरियं चेतश्चमत्कारिणी

मुग्धे वेत्थ यथा मया शुभरते वैदग्ध्यमाविष्कृतम् ।

जानीते दयितैव सा शुभरते यद्यद्विधत्ते भवान्

इत्युक्तो मधुजिन्निरुत्तरमुखः श्लिष्यन् प्रियां पातु वः ॥

संसक्तो धरणीधरेश्वरभुवि क्रीडन् मृगाङ्कानन-

श्रेणीमाकलयन् गुणान्वयमिलत्पञ्चाननख्यातिमान् ।

कान्तारागविनोदिनां निजपदं मुक्तामयं दर्शयन्

भूयान्नित्यमनेकपापहतये श्रीकण्ठकण्ठीरवः ॥

ते देवस्य गभस्तयो दिनपतेरापन्नखेदच्छिदो

निष्कृन्तन्तु कृतान्तपत्तनपथप्रस्थानदौःस्थ्यानि वः ।

यैः सौवर्णमिवाखिलं करुणया निर्मातुमभ्युद्यतैः
कीर्णस्वर्णपरागरागघटितं दिक्चक्रमालक्ष्यते ॥

अस्ति शस्तगुणस्तोमः सोमवंशविभूषणम् ।
महादेव इति ख्यातो राजराजेव भूतले ॥

संग्रामेष्वधमर्णतामुपगता वीराः पराः कोटयः
सर्वस्वप्रतिपादनेन विविधानार्थीन् निरस्य क्षणात् ॥
स्वस्मादाददते निरत्ययसुखं तत्रैतदीयं यशो
दिक्कालानिव साक्ष्यतां गमयितुं दिङ्मण्डलीं मुञ्चति ॥

मैत्रीमर्जय गुर्जरव्रजपरां नेपालपालक्षमा-
माज्ञां पालय मालवेश्वरभयं नीरन्ध्रमन्ध्रं स्मर ।
सप्तद्वीपमहीपतीनिति हितामध्यापयन्ती धियं
यत्कीर्त्तिः सुखदायिनी रिपुकुले मानुष्यदा मन्यते ॥

हेलासादितलक्षमार्गणगणं श्रुत्वैतदीयं गुणं
येषां श्रेणिरनुस्मरन्त्यहरहस्तुष्टाव दानाद्भुतम् ।
तेषामेव महाहवेषु मिलतां प्रत्यर्थिनामर्थिना-
मप्यरयाथ भुजं व्रजन्ति विलयं सैन्यानि दैन्यानि च ॥

अस्योच्चैर्भीमभूमीरुहगहनगुहागर्भगर्जन्मृगेन्द्र-
त्रासव्यासप्रसङ्गोच्चलनकुलकुलव्याकुलव्यालमालाम् ।
वारं वारं स्मृतैतद्भुजभुजगयुगस्फीतिभीतिज्वरौघां
मूर्च्छामृच्छन्ति हन्त क्षितिधरधरणीं लङ्घयन्तो द्विषन्तः ॥

षोडश क्रतवो येन चक्रिरे चक्रवर्त्तिना ।
अपूर्णपञ्चयज्ञानां नृपाणां तेन का तुला ॥

अनेन चिन्तामणिकामधेनुकल्पद्रुमानर्थिजनाय दत्तान् ।
विलोक्य शङ्के किममुष्य सर्वं गीर्वाणनाथोऽपि करप्रदोऽभूत् ॥

तस्यास्ति नाम हेमाद्रिः सर्वश्रीकरणप्रभुः ।
निजोदात्ततया यश्च सर्वश्रीकरणप्रभुः ॥
तस्य श्रीकरणेशस्य काऽपि लेखनचातुरी ।
यशःप्रशस्तिभिस्तूर्णं येन दिग्भित्तयो भृताः ॥
लिपिं विधात्रा लिखितां जनस्य भाले विभूत्या परिमृज्य दुष्टाम् ।
कल्याणिनीमेष लिखत्यथैनां चित्रां प्रमाणीकुरुते विधिश्च ॥
संचिन्त्य संचिन्त्य तदेतदीयं धत्ते मनो विस्मयमस्मदीयम् ।
प्राग्जन्मविद्यास्मरणक्षमोऽयं क्षणेन तद्विस्मृतिमेति दत्त्वा ॥
मन्ये तत्कृतदानवारिलहरीपूर्णोऽयमर्णोनिधिः
कल्पान्तेऽपि न शोषदोषविषमां धत्ते कदाचिद्दशाम् ।
किं चैतं जलधिस्थितिप्रतिभुवं निश्चित्य दैत्यारिणा
निश्चिन्तेन भुजङ्गपुङ्गवतनूतल्पे सुखं सुप्यताम् ॥
चित्रं तद्धनदानवृष्टिपयसस्तत् तस्य किं ब्रूमहे
यस्मिन्नन्यवदान्यकीर्त्तिरतुला धत्ते तृणश्रेणिताम् ।
यद्भूमौ पतितं ग्रसिष्णु जनतापङ्कानि यच्चार्थिनाम्
न्यस्तं हस्ततलेषु भालफलके पापां लिपिं लुम्पति ॥
तत्तर्पितो देवगणः स नूनमरोचकी चन्द्रमसः सुधायाम् ।
क्षयं तु चन्द्रस्य तदीयकीर्त्तिस्पर्द्धासमृद्धानि फलन्त्यघानि ॥
शूराणामवधिर्निधिश्च यशसामेकाश्रयः सम्पदां
दातॄणां प्रथमः कलाकुलगृहे वैदग्ध्यभाजां गुरुः ।
धौरेयश्च विपश्चितां सुकृतिनामद्वैतवादास्पदं
नैवासीन्न च वर्त्तते न भविता हेमाद्रिसूरेः परः ॥
बिभर्त्ति नूनं द्विजवेशमेष स एव हेमाद्रिरिति प्रतीमः ।
उदारसन्तानवतो यदस्य कल्पद्रुमं दक्षिणबाहुमाहुः ॥

अथामुना धर्मकथादरिद्रं त्रैलोक्यमालोक्य कलेर्बलेन ।
तस्योपकारे दधतानुचिन्तां चिन्तामणिः प्रादुरकारि चारुः ॥

पञ्चखण्डात्मके शास्त्रे व्रतखण्डादनन्तरम् ।
दानखण्डमिदं तत्र द्वितीयमथ कथ्यते ॥
अस्मिन्ननेकदानौघरत्नरत्नाकरायिते ।
महाप्रकरणानां च विज्ञेयोऽयमनुक्रमः ॥
दानस्तुतिस्ततो दानस्वरूपस्य निरूपणम् ।
अङ्गप्रसङ्गो दानानां परिभाषाभिभाषणम् ॥
श्रोतुः श्रद्धाभिवृद्ध्यर्थमथ दानफलावलिः ।
तुलापुरुषमुख्यानि महादानानि षोडश ॥
अखर्वपर्वतश्रेणिविश्राणनविधिस्ततः ।
परस्तादतिदानानां विधिर्विधुतपातकः ॥
ततो दशमहादानविधिवैभववर्णनम् ।
कृष्णाजिनानि दानानि देवतादानसंग्रहः ॥
अथ कालविशेषेण बहुधा दानवर्णनम् ।
अनन्तफलदानानामनन्तरमुपक्रमः ॥
एवं प्रकरणान्यत्र त्रयोदश महामतिः ।
ब्रवीति प्राज्यराज्यादिसाधनानि मनीषिणाम् ॥

**अथ दानप्रशंसा तावदभिधीयते । तत्र व्यासः ।**

वर्णानामाश्रमाणां च चातुर्वर्ण्यं युधिष्ठिर ।
दानधर्मं प्रवक्ष्यामि यथा देवेन भाषितम् ॥

**नन्दिपुराणे ।**

दानं परं प्रशंसन्ति दानमेव परायणम् ।

दानं बन्धुर्मनुष्याणां दानं कोषो ह्यनुत्तमम्* ॥
दानं † तन्त्रं परं द्रव्यं दानं माता पिता यथा ।
दानेन न विना किञ्चित् प्रार्थितं फलमाप्यते ॥
अपि बालाग्रमात्रस्य तुला तस्य न विद्यते ।
न दानशीलिनामपर् तस्माद्दानं समाश्रयेत् ॥
हारनूपुरसंघोषपूरितोत्तममन्दिरः ।
लावण्यगुणसम्पन्नैर्दानादेव हि लभ्यते ॥

## सौरपुराणे ।

न दानादधिकं किञ्चिद्दृश्यते भुवनत्रये ।
दानेन प्राप्यते स्वर्गः श्रीर्दानेनैव लभ्यते ॥
दानेन शत्रून् जयति व्याधिर्दानेन नश्यति ।
दानेन लभ्यते विद्या दानेन युवतीजनः ॥
धर्मार्थकाममोक्षाणां साधनं परमं स्मृतम् ।

## उशना ।

दानादृते नोपचारो विद्यते धनिनोऽपरः ।
दीयमानं हि तत् तस्य भूय एवाभिवर्धते ॥

## आह वेदव्यासः ।

यद्ददासि विशिष्टेभ्यो यच्चाश्नासि दिने दिने ।
तत् ते वित्तमहं मन्ये शेषं कस्यापि रक्षति ॥
यद्ददाति यदश्नाति तदेव धनिनो धनम् ।
अन्ये मृतस्य क्रीडन्ति दारैरपि धनैरपि ॥

---

* दानं कामफला वृक्षा दानं चिन्तामणिर्नृणामिति क्वचित् पाठः ।
† पुत्र इति क्वचित् पाठः ।

बृहस्पतिः ।

तपोधर्मः कृतयुगे ज्ञानं त्रेतायुगे स्मृतम् ।
द्वापरे चाध्वराः प्रोक्ताः कलौ दानं दया दमः ॥

अत्रार्थे शतपथश्रुतिः ।

तदेतत्त्रयं शिक्षेत दमं दानं दयामिति ।
दानेन भोगी भवति मेधावी वृद्धसेवया ॥
अहिंसया च दीर्घायुरिति प्राहुर्मनीषिणः ।

यमः ।

यतीनां तु शमो धर्मस्त्वनाहारो वनौकसाम् ।
दानमेव गृहस्थानां शुश्रूषा ब्रह्मचारिणाम् ॥
पापकर्मसमायुक्तं पतन्तं नरके नरम् ।
त्रायते दानमेकं तु पात्रभूते द्विजे कृतम् ॥

तथा ।

न्यायेनार्जनमर्थानां वर्धनं चाभिरक्षणम् ।
सत्पात्रप्रतिपत्तिश्च सर्वशास्त्रेषु पठ्यते ॥

कूर्मपुराणे ।

दानधर्मात् परो धर्मो भूतानां नेह विद्यते ।
तस्माद्विप्राय दातव्यं श्रोत्रियाय द्विजातिभिः ॥

द्विजातिभिरित्युपलक्षणं दानस्य सर्वसाधारणत्वात् ।

महाभारते ।

आयासशतलब्धस्य प्राणेभ्योऽपि गरीयसः ।
गतिरेकैव वित्तस्य दानमन्या विपत्तयः ॥
ब्राह्मणायाभिरूपाय यो दद्यादर्थमर्थिने ।
निदधाति निधिं श्रेष्ठं पारलौकिकमात्मनः ॥

**कूर्मपुराणे ।**

न हि दानात् परतरमन्यदस्तीति मे मतिः ।
धनधान्यवतः किञ्चिदहार्य्यं राजतस्करैः ॥

**वह्निपुराणे ।**

तपःसु चैव तीर्थेषु व्रतेषु नियमेषु च ।
सम्यक् चीर्णेषु विप्रर्षे पश्चाद्दानं समाचरेत् ॥
यस्य वित्तं न दानाय नोपभोगाय देहिनाम् ।
नापि कीर्त्त्यै न धर्माय तस्य वित्तं निरर्थकम् ॥
तस्माद्वित्तं समासाद्य दैवाद्वा पौरुषादथ ।
दद्यात् सम्यग्द्विजातिभ्यः कीर्त्तनानि च कारयेत् ॥

**व्यासः ।**

अहन्यहनि याचन्तमहं मन्ये गुरुं यथा ।
मार्जनं दर्पणस्येव यः करोति दिने दिने ॥
किं धनेन करिष्यन्ति देहिनो भङ्गुराश्रयाः ।
यदर्थं धनमिच्छन्ति तच्छरीरमशाश्वतम् ॥
यदि नाम न धर्माय न कामाय न कीर्त्तये ।
यत् परित्यज्य गन्तव्यं तद्धनं किं न दीयते ॥
*इच्छानुरूपो विभवः कदा कस्य भविष्यति ।
अदाता पुरुषस्त्यागी धनं संत्यज्य गच्छति ॥
दातारं कृपणं मन्ये मृतोऽप्यर्थं न मुञ्चति ।

**मनुः ।**

दानधर्मं निषेवेत नित्यमैष्टिकपौर्त्तिकम् ।
परितुष्टेन भावेन पात्रमासाद्य शक्तितः ॥

---

* ग्रासादर्धमपि ग्रासमर्थिभ्यः किं न दीयते क्वचित् पाठः ।

इष्टे यज्ञे यद्दीयते दक्षिणादि तदैष्टिकम् ।
बहिर्वेदि च यद्दानं दीयते तत् तु पौर्त्तिकम् ॥
यत् किञ्चिदपि दातव्यं याचितेनानसूयया ।
उत्पत्स्यते हि तत् पात्रं यत् तारयति सर्वतः ॥
स्वर्गायुर्भूतिकामेन तथा पापोपशान्तये ।
मुमुक्षुणा च दातव्यं ब्राह्मणेभ्यस्तथान्वहम् ॥

**विष्णुधर्मे ।**

न ददाति च दानानि मोघं तस्य धनार्जनम् ।
उत्थायोत्थाय दातव्यं ब्राह्मणेभ्यो युधिष्ठिर ॥

**वह्निपुराणे ।**

अन्नं मूलं फलं शाकमुदपात्रं तपोधनाः ।
दानं विभवतो दत्त्वा नराः स्वर्यान्ति धर्मिणः ॥

**तथा ।**

यद्यजन्ति ददन्तीह भोगान् भुञ्जन्ति नित्यशः ।
मामुद्दिश्य न ते मूढा इहैव सुखिनः परे ॥

**याज्ञवल्क्यः ।**

दातव्यं प्रत्यहं पात्रे निमित्तेषु विशेषतः ।
याचितेनापि दातव्यं श्रद्धापूतं तु शक्तितः ॥

**मत्स्यपुराणे ।**

*उक्तसर्वगुणोपेतमुक्तदोषैर्विवर्जितम् ।
कामधुग्धेनुवद्दानं फलत्यात्मेप्सितं फलम् ॥
†इह कीर्त्तिं वदान्याख्यां स्फीतान् भोगांस्त्रिविष्टपे ।

---

* उक्तः स च गुणोपेतमुक्तदोषैर्विवर्जितः क्वचित् पाठः ।
† इह कीर्त्तिर्वदान्याख्या क्वचित् पाठः ।

दानं श्रद्धां तृतीयेऽपि जन्मनि प्रभवोत्तमे ॥

वह्याण्डो बहुप्रदः ।

दानमेव परो धर्मो दानमेव परन्तपः ।
न हि दानात् परतरमिह लोके परत्र च ॥
दानेन भोगानाप्नोति दानेनायुश्च विन्दति ।
नरः स्वर्गापवर्गौ च दानेनैव समश्नुते ॥

## मार्कण्डेयपुराणे ।

कुटुम्बं पीडयित्वाऽपि ब्राह्मणाय महात्मने ।
दातव्यं भिक्षवे ह्यन्नमात्मनो भूतिमिच्छता ॥

## देवलः ।

दुर्लभं भारते वर्षे जन्म तस्मान्मनुष्यता ।
मानुष्याद्ब्राह्मणत्वं च दुर्लभं सुतरां मतम् ॥
विप्रत्वे सति दुष्प्रापा विद्यादिगुणयोगिता ।
तत्र न्यायार्जितार्थाप्तिस्ततो भक्त्याप्तिरिष्यते ॥
लब्ध्वैतद्गुणसंयोगं तीर्थं पात्रं च पर्व च ।
दानानि ये प्रयच्छन्ति कृतार्थास्ते नरा भुवि ॥

## अगस्त्यः ।

गोभिर्विप्रैश्च वेदैश्च सतीभिः सत्यवादिभिः ।
अलुब्धैर्दानशीलैश्च सप्तभिर्धार्यते मही ॥
यैर्न भुक्तं न च हुतं न तीर्थे* मरणं कृतम् ।
हिरण्यमन्नमुदकं ब्राह्मणेभ्यो न चार्पितम् ॥
दीना विवसना रूक्षाः कपालाङ्कितपाणयः ।
दृश्यन्ते हि महाराज जायमानाः पुनः पुनः ॥

---

* सुतीर्थे मरणमिति पाठान्तरम् ।

विष्णुधर्मे ।

सीदते द्विजमुख्याय योऽर्थिने न प्रयच्छति ।
सामर्थ्ये सति दुर्बुद्धिर्नरकायोपपद्यते ॥

कूर्मपुराणे ।

यस्तु द्रव्यार्जनं कृत्वा नार्चयेद्ब्राह्मणान् सुरान् ।
सर्वस्वमपहृत्यैनं राजा राष्ट्रात् प्रवासयेत् ॥

ब्रह्मपुराणे ।

सदाचाराः कुलीनाश्च रूपवन्तः प्रियम्वदाः ।
बहुश्रुताश्च धर्मज्ञा याचमानाः पराद्गृहात्* ॥
दृश्यन्ते दुःखिनः सर्वे प्राणिनः सर्वदा मुने ।
अदत्तदानाज्जायन्ते परभाग्योपजीविनः ॥

व्यासः ।

अक्षरद्वयमभ्यस्तं नास्ति नास्तीति यत् पुरा ।
तदिदं देहि देहीति विपरीतमुपस्थितम् ॥

स्कन्दपुराणे ।

बोधयन्ति न याचन्ते देहीति कृपणं जनाः ।
अवस्थेयमदानस्य माभूदेवं भवानपि ॥
देहीत्येवं ब्रुवन्नर्थी जनं बोधयतीव सः ।
यदिदं कष्टमर्थित्वं प्रागदानफलं हि तत् ॥
एकेन तिष्ठताधस्तादन्येनोपरितिष्ठता ।
दातृयाचकयोर्भेदः कराभ्यामेव सूचितः ॥
दीयमानं तु यो मोहाद्गोविप्राग्निसुरेषु च ।
निवारयति पापात्मा तिर्यग्योनिं व्रजेत् तु सः ॥

'दीयमानं' तदुद्देशेन त्यज्यमानमित्यर्थः ।

---

* परान् गृहानिति पाठान्तरम् ।

**शातातपः ।**

मा ददस्वेति यो ब्रूयाद्गव्यग्नौ ब्राह्मणेषु च ।
तिर्यग्योनिशतं गत्वा चाण्डालेष्वभिजायते ॥

**यमः ।**

कन्याप्रदाने यज्ञे वा यस्मिन् वा धर्मसङ्कटे ।
विघ्नमाचरते यस्तु तमाहुर्ब्रह्मघातकम् ॥
तस्माद्विभूतिमन्विच्छन् न दाने विघ्नमाचरेत् ।
दद्यादहरहः पात्रे लोकद्वयजिगीषया ॥

**महाभारते ।**

अर्हतामनुरूपाणां नादेयं ह्यस्ति किञ्चन ।
उच्चैःश्रवसमप्यश्वं प्रापणीयं सतां विदुः ॥
अनुनीय यथाकामं सत्यसन्धो महाव्रतः ।
स्वैः प्राणैर्ब्राह्मणः प्राणान् परित्राय दिवं गतः ॥
रन्तिदेवश्च साङ्कृत्यो वशिष्ठाय महात्मने ।
अपः प्रदाय शीताश्च नाकपृष्ठमितो गतः ॥
आत्रेयचन्द्रदमयोरर्हतोर्विधिवर्द्धनम् ।
दत्त्वा लोकान् ययौ धीमाननन्तान् स महीपतिः ॥
शिविरौशीनरोऽङ्गानि पुत्रं च प्रियमौरसम् ।
ब्राह्मणार्थमुपाकृत्य नाकपृष्ठमुपागतः ॥
प्रतर्दनः काशिपतिः प्रदाय नयने स्वके ।
ब्राह्मणायातुलां कीर्त्तिमिह चामुत्र चाश्नुते ॥
दिव्यं मृष्टशलाकं तु सौवर्णं परमर्द्धि तत् ।
छत्रं देवावृधो दत्त्वा सराष्ट्रोऽभ्यपतद्दिवम् ॥

'मृष्टशलाकम्' उज्ज्वलप्रज्ञरम् ।

सङ्कृतिश्च तथाऽऽत्रेयः शिष्येभ्यो ब्रह्म निर्गुणम् ।
उपदिश्य महातेजा गतो लोकाननुत्तमान् ॥
अम्बरीषो गवीर्दत्त्वा ब्राह्मणेभ्यः प्रतापवान् ।
अर्बुदानि दशैकं च सराष्ट्रोऽभ्यपतद्दिवम् ॥
सावित्री कुण्डले दिव्ये शरीरं जनमेजयः ।
रम्यमावसथं चैव दत्त्वाऽमुं लोकमास्थितः ॥
ब्राह्मणार्थे परित्यज्य जग्मतुर्लोकमुत्तमम् ।
सर्वरत्नं वृषा दर्भा युवानोऽश्वाः प्रियाः स्त्रियः ॥
रम्यमावसथं चैव दत्त्वाऽमुं लोकमास्थितः ।
निमी राष्ट्रं च वैदेहो जामदग्न्यो वसुन्धराम् ॥
ब्राह्मणेभ्यो ददौ चापि गयश्चोर्वीं सपत्तनाम् ।
अवर्षिणि च पर्जन्ये सर्वभूतानि चासकृत् ॥
राजा मित्रसहस्रश्च वशिष्ठाय महात्मने ।
मदयन्तीं प्रियां दत्त्वा तया सह दिवं गतः ॥
सहस्रजिच्च राजर्षिः प्राणानिष्टान् महायशाः ।
ब्राह्मणार्थे परित्यज्य गतो लोकाननुत्तमान् ॥
सर्वकामैश्च सम्पूर्णं दत्त्वा वेश्म हिरण्मयम् ।
मुद्गलाय गतः स्वर्गं शतद्युम्नो महामतिः ॥
नाम्ना च द्युतिमान् नाम शाल्वराजः प्रतापवान् ।
दत्त्वा राज्यमृचीकाय गतो लोकाननुत्तमान् ॥
मदिराश्वश्च राजर्षिर्दत्त्वा कन्यां सुमध्यमाम् ।
सुवर्णहस्ताय गतो लोकान् देवैरभिष्टुतान् ॥
लोमपादश्च राजर्षिः स तां दत्त्वा सुतां प्रभुः ।
ऋष्यशृङ्गाय विपुलैः सर्वकामैरयुज्यत ॥

दत्त्वा शतसहस्रं तु गवां राजा प्रसेनजित् ।
सवत्सानां महातेजा गतो लोकाननुत्तमान् ॥
एते चान्ये च बहवो दानेन तपसा सह ।
महात्मानो गताः स्वर्गं शिष्टात्मानो जितेन्द्रियाः ॥
तेषां प्रतिष्ठिता कीर्त्तिर्यावत् स्थास्यति मेदिनी ।
दानयज्ञप्रजासर्गैरेके हि दिवमाप्नुयुः ॥

दानेन भूतानि वशीभवन्ति दानेन वैराण्यपि यान्ति नाशम् ।
परोऽपि बन्धुत्वमुपैति दानाद्दानं हि सर्वव्यसनानि हन्ति ॥

इति श्रीमहाराजाधिराज-श्रीमहादेवस्य समस्तकरणाधीश्वरसक-
लविद्या-विशारद-श्रीहेमाद्रिविरचिते चतुर्वर्गचिन्तामणौ
दानखण्डे दानप्रशंसाप्रकरणम् ॥ १ ॥

## अथ दानस्वरूपमुपवर्ण्यते ।

प्राचामाचारभाजां धुरमनुसरता येन मृष्टैर्विशिष्टै-
रिष्टापूर्त्तै रणार्हीकृतकृतिनिवहै *विश्वमाख्यां समेति ।
सोऽयं हेमाद्रिसूरिर्विविधबुधमनश्चित्रमैत्रीपवित्रं
नानादान-स्वरूप-प्रकरणमधुना वक्ति निर्मुक्तदोषः ॥

### तत्र देवलः ।

अर्थानामुदिते पात्रे श्रद्धया प्रतिपादनम् ।
दानमित्यभिनिर्दिष्टं व्याख्यानं तस्य कथ्यते ॥

'उदिते' शास्त्रनिरूपिते । अर्थानां प्रतिपादनं नाम पात्रं प्रति स्वस्वामिभावाधादनपर्यन्तस्त्यागः ।

'द्विहेतु षडधिष्ठानं षडङ्गं षड्विपाकयुक् ।
चतुष्प्रकारं त्रिविधं त्रिनाशं दानमुच्यते' ॥

अस्य विवरणं तेनैवोक्तम् ।

### तत्र द्विहेत्विति ।

नाल्पत्वं वा बहुत्वं वा दानस्याभ्युदयावहम् ।
श्रद्धा भक्तिश्च दानानां वृद्धिक्षयकरे स्मृते ॥

'श्रद्धा' आस्तिक्यबुद्धिः । सेवापूर्वमभिध्यानं 'भक्तिः' । शक्तिरिति पाठे शक्तिरौदार्यम् ।

### षडधिष्ठानमिति ।

'षडधिष्ठानानि' आश्रयाः निमित्तत्वेन यस्य तत् तथा ।

---

* रनार्हीकृतकृतीति पाठान्तरम् ।

तान्याह ।

धर्ममर्थं च कामं च व्रीडाहर्षभयानि च ।
अधिष्ठानानि दानानां षडेतानि प्रचक्षते ॥

तानि विविनक्ति ।

पात्रेभ्यो दीयते नित्यमनपेक्ष्य प्रयोजनम् ।
केवलं त्यागबुद्ध्या यद्धर्मदानं तदुच्यते ॥

'प्रयोजनमनपेक्ष्य' दृष्टफलाननुसन्धानेनेत्यर्थः ।

प्रयोजनमपेक्ष्यैव प्रसङ्गाद्यत् प्रदीयते ।
तदर्थदानमित्याहुरैहिकं फलहेतुकम् ॥
स्त्री-पान-मृगयाक्षाणां प्रसङ्गाद्यत् प्रदीयते ।
अनर्हेषु च रागेण कामदानं तदुच्यते ॥
संसदि व्रीडया स्तुत्याऽऽचार्योऽर्थिभ्यः प्रयाचितः ।
प्रदीयते च तद्दानं व्रीडादानमिति स्मृतम् ॥
दृष्ट्वा प्रियाणि श्रुत्वा वा हर्षवद्यत् प्रदीयते ।
हर्षदानमिति प्राहुर्दानं तद्धर्मचिन्तकाः ॥
आक्रोशानर्थहिंसानां प्रतीकाराय यद्भवेत् ।
दीयते तापकर्तृभ्यो भयदानं तदुच्यते ॥

षडङ्गमिति ।

दाता प्रतिग्रहीता च श्रद्धा देयं च धर्मयुक् ।
देशकालौ च दानानामङ्गान्येतानि षड्विदुः ॥

तानि विवृणोति ।

अपापरोगी धर्मात्मा दित्सुरव्यसनः शुचिः ।
अनिन्द्याजीवकर्मा च षड्भिर्दाता प्रशस्यते ॥

'अपापरोगी' राजयक्ष्मादिरोगरहितः ।

त्रिशुक्तः कृशवृत्तिश्च घृणालुः सकलेन्द्रियः ।

विमुक्तो योनिदोषेभ्यो ब्राह्मणः पात्रमुच्यते ॥

त्रिशुक्त इति । 'त्रीणि' विद्यान्वयवृत्तानि 'शुक्तानि' विशुद्धानि यस्य स तथा । 'घृणालुः' कृपालुः । 'सकलेन्द्रियः' अविकलेन्द्रियः ।

सौमुख्याद्यतिसंप्रीतिरर्थिनां दर्शने सदा ।

सत्कृतिश्चानसूया च तदा श्रद्धेति कीर्त्यते ॥

अपराबाधदं क्लेशैः* प्रयत्नेनार्जितं धनम् ।

स्वल्पं वा विपुलं वाऽपि देयमित्यभिधीयते ॥

यद्यत्र दुर्लभं भद्रं यस्मिन् कालेऽपि वा पुनः ।

दानार्हौ देशकालौ तौ स्यातां श्रेष्ठौ न चान्यथा ॥

अवस्था देशकालानां पात्रदात्रोश्च सम्पदा ।

हीनं वाऽपि भवेच्छ्रेष्ठं श्रेष्ठं वाऽप्यन्यथा भवेत् ॥

## षड्विपाकत्वमाह ।

दुष्फलं निष्फलं हीनं तुल्यं विपुलमक्षयम् ।

षड्विपाकयुगुद्दिष्टं षडेतानि विपाकतः ॥

## तानि व्याचष्टे ।

नास्तिक-स्तेन-हिंस्रेभ्यो जाराय पतिताय च ।

पिशुन-भ्रूणहन्तृभ्यां प्रदत्तं दुष्फलं भवेत् ॥

'दुष्फलं' विरीतफलम् ।

महदप्यफलं दानं श्रद्धया परिवर्जितम् ।

परबाधाकरं दानं परमप्यूनतां व्रजेत् ॥

'निष्फलम्' अपकृष्टफलम् । अत्यन्ताफलत्वे तु यदेव श्रद्धया करोति तदेव वीर्यवत्तरं भवतीतीतरार्थोऽनुपपन्नः स्यात् फलवचनविपाकशब्दविरोधश्च । 'परं' श्रेष्ठम् । 'ऊनता च' किञ्चिन्न्यूनाभिप्रायम् । अन्यथा पूर्वेण पौनरुक्त्यप्रसङ्गात् ।

---

* स्वयं तेनार्जितं धनमिति पाठान्तरम् ।

यथोक्तमपि यद्दत्तं चित्तेन कलुषेण तु ।
तत् तु सङ्कल्पदोषेण दानतुल्यफलं भवेत् ॥
युक्ताङ्गैः सकलैः षड्भिर्दानं स्याद्विपुलोदयम् ।
अनुक्रोशवशाद्दत्तं दानमक्षयतां व्रजेत् ॥

'अनुक्रोशः' दया ।

## चतुष्प्रकारमाह ।

ध्रुवमाजस्रिकं काम्यं नैमित्तिकमिति क्रमात् ।
वैदिको दानमार्गोऽयं चतुर्धा वर्ण्यते द्विजैः ॥
प्रपा-ऽऽराम-तडागादि सर्वकामफलं ध्रुवम् ।
तदाजस्रिकमित्याहुर्दीयते यद्दिने दिने ॥
अपत्य-विजयैश्वर्य-स्त्री-बालार्थं यदिष्यते ।
इच्छासंस्थं तु तद्दानं काम्यमित्यभिधीयते ॥
कालापेक्षं क्रियापेक्षमर्थापेक्षमिति स्मृतम्
त्रिधा नैमित्तिकं प्रोक्तं सहोमं होमवर्जितम् ॥

## त्रैविध्यमाह ।

नवोत्तमानि चत्वारि मध्यमानि विधानतः ।
अधमानीति शेषाणि त्रिविधत्वमिदं विदुः ॥

## तदेव विविनक्ति ।

अन्नं दधि मधु त्राणं गो-भू-रुक्मा-श्व-हस्तिनः ।
दानान्युत्तमदानानि उत्तमद्रव्यदानतः ॥
विद्यादानादनावासपरिभोगौषधानि च ।
दानानि मध्यमानीह मध्यमद्रव्यदानतः ॥

'परिभोग इति' परिभोगसाधनं खट्वासनादि ।

उपानत्-प्रेङ्ख-यानानि छत्रपानासनानि च ।
दीप-काष्ठ-फलादीनि चरमं बहुवार्षिकम् ॥

बहुत्वादर्थजातानां सङ्ख्या शेषेषु नेष्यते ।
अधमान्यवशिष्टानि सर्वदानान्यतो विदुः ॥

'बहुवार्षिकं बहूनि वर्षाणि प्राप्तं पुरातनमिति यावत्। एतेनोत्तममपि हस्त्यश्वादि, जीर्णतां प्राप्तमधमं भवति।

त्रिनाशत्वमाह।

इष्टं दत्तमधीतं वा विनश्यत्यनुकीर्त्तनात् ।
श्लाघा-ऽनुशोचनाभ्यां च भग्नतेजो विपद्यते ॥
तस्मादात्मकृतं पुण्यं न वृथा परिकीर्त्तयेत् ।
भुक्तवानिति तत् प्राहुस्तमेव कृतवादिनम्* ॥

'श्लाघा' प्रशंसा, 'वृथा' रक्षादिप्रयोजनव्यतिरेकेण ।

कूर्मपुराणे ।

नित्यं नैमित्तिकं काम्यं विमलं चेति कथ्यते ।
अहन्यहनि यत् किञ्चिद्दीयतेऽनुपकारिणे ॥
अनुद्दिश्य फलं तत् स्याद्ब्राह्मणाय तु नित्यकम् ।
यत् तु पापोपशान्त्यर्थं दीयते विदुषां करे ॥
नैमित्तिकं तदुद्दिष्टं दानं सद्भिरनुष्ठितम् ।

'पापोपशान्त्यर्थमिति' नियतनिमित्तोपलक्षणम् ।

अपत्य-विजयै-श्वर्य-स्वर्गार्थं यत् प्रदीयते ।
दानं तत् काम्यमाख्यातमृषिभिर्धर्मचिन्तकैः ॥
यदीश्वरप्रीणनार्थं ब्रह्मवित्सु प्रदीयते ।
चेतसा भक्तियुक्तेन दानं तद्विमलं शिवम् ॥

मनुः ।

येन येन हि भावेन यद्यद्दानं प्रयच्छति ।

* वादिन इति पाठान्तरम् ।

तेन तेन हि भावेन तत् प्राप्नोति हि पूजितः ॥

'येन येन हि भावेन' सात्त्विकराजसादिना ।

तदुक्तं भगवद्गीतासु ।

दातव्यमिति यद्दानं दीयतेऽनुपकारिणे ।
देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतम् ॥
यत् तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः ।
दीयते च परिक्लिष्टं तद्दानं राजसं स्मृतम् ॥
अदेशकाले यद्दानमपात्रेभ्यश्च दीयते ।
असंस्कृतमवज्ञातं तत् तामसमुदाहृतम् ॥

विष्णुधर्मोत्तरे ।

कृतानि विधिहीनानि वञ्चनार्थं परस्य वा ।
क्रोधलोभाभिभूतेन तामसानि विनिर्दिशेत् ॥
सात्त्विकानि भवन्तीह श्रद्धया परया द्विज ।
तामसानां फलं भुङ्क्ते तिर्यक्त्वे मानवः सदा ॥
वर्णसंस्कारभावेन वार्द्धके यदि वा पुनः ।
बाल्ये वा दासभावे वा नात्र कार्या विचारणा ॥
अतोऽन्यथा तु मानुष्ये राजसानां फलं भवेत् ।
सात्त्विकानां फलं भुङ्क्ते देवत्वे नात्र संशयः ॥

मत्स्यपुराणे ।

येषां पूर्वकृतं कर्म सात्त्विकं मनुजोत्तम ।
पौरुषेण विना तेषां केषाञ्चिद्दृश्यते फलम् ॥
कर्मणा प्राप्यते लोके राजसस्य तथा फलम् ।
कृच्छ्रेण कर्मणा विद्धि तामसस्य तथा फलम् ॥

गारुडपुराणे ।

कायिकं वाचिकं दानं मानसं च त्रिधा मतम् ।
अर्हते यत् सुवर्णादिदानं तत् कायिकं मतम् ॥
आर्त्तानामभयं दद्मीत्येतद्वै वाचिकं स्मृतम् ।
विद्यया स्याद्यया योगी* तद्दानं मानसं द्विजाः ॥

हारीतः ।

असद्द्रव्यदान-मस्वर्गं,† यच्च दत्त्वा परितप्यते तद्यद्दानमफलं, यच्चोपकारिणे ददाति तन्मात्रं परिक्लिष्टं,‡ यच्च सोपधं ददाति अभ्याचित-§मल्पफलं, यच्चापात्राय ददाति अनिष्टदानं भवति, यच्च दत्त्वा परिकीर्त्त्यते यच्च स्मयदानमासुरं, यच्चाश्रद्धया ददाति क्रोधाद्राक्षसं, यच्चाक्रुश्य ददाति दत्त्वा च क्रोशति असत्कृतं पैशाचं, यच्चावज्ञातं ददाति दत्त्वा चावजानीते मुमूर्षोस्तामसं यच्चाप्राकृतो ददाति, एते दानोपसर्गा यैरुपसृष्टं दानमसिद्ध||मसम्बद्ध-मस्वर्गं-मयशस्य-मध्रुव-मफलं वा ।

¶तद्यद्दानं, तस्मिन्नेव संकल्पकाले दीयमानद्रव्यासमर्पणम् । उपकारिणे,** प्रत्युपकारसमीहयेत्यर्थः । 'तन्मात्रं' यावद्दत्तं तावन्मात्रम् । 'सोपधं' स्नेहाद्युपाधिसहितम्, अभ्याचितम्, लोकप्रतिपत्त्यर्थं ख्यापितम् । 'अनिष्टदानं' शत्रवे दानं, स्मयदानं, मादृशोऽन्यो दाता नास्तीत्येवम्विधो भावविशेषः स्मयः, तेन यद्दानम् । अप्राकृतः, मत्तादिः ।

भविष्यपुराणे ।

महादानानि वै विद्यादतिदानानि सर्वदा ।
पुण्यमिष्टं च पूर्त्तं च वृथा दानं च यत्नतः ॥

'महादानानि' वक्ष्यमाणानि षोडश तुलापुरुषादीनि ।

---

* योगीति पाठान्तरम् ।
† असद्द्रव्यप्रदाने न स्वर्गमिति वा पाठः ।
‡ परिशिष्टमिति क्वचित् पाठः ।
§ अन्यथावितर्मिति वा पाठः ।
|| अप्रसिद्धमिति क्वचित् पाठः ।
¶ तर्हि त्यागानन्तरकाले हस्तार्पणासम्भवेऽप्यादानमसमर्पणमिति वा पाठः ।
** व्यसनोपकारिणे इति पाठान्तरम् ।

कनकाश्वतिला नागा दासीरथमहीगृहाः ।
कन्या च कपिला धेनुर्महादानानि वै दश ॥

सामवेदोपनिषदि ।

त्रीण्याहुरतिदानानि गावः पृथ्वी सरस्वती ।
नरकादुद्धरन्त्येव जपवापनदोहनात् ॥

शङ्खः ।

इष्टिभिः पशुबन्धैश्च चातुर्मास्यैर्यजेत् तु यः ।
अग्निष्टोमादिभिर्यज्ञैर्यजेत च स इष्टवान् ॥
अग्निहोत्रं तपः सत्यं वेदानां चैव पालनम् ।
आतिथ्यं वैश्वदेवं च इष्टमित्यभिधीयते ॥
एकाग्निकादौ यत् कर्म त्रेतायां यच्च हूयते ।
अन्तर्वेद्यां च यद्दानमिष्टं तदभिधीयते ॥

शङ्खः ।

रोगिणां परिचर्या च पूर्त्तमित्यभिनिर्दिशेत् ।

व्यासः ।

पुष्करिण्यस्तथा वाप्यो देवतायतनानि च ।
अन्नदानमथारामाः पूर्त्तमित्यभिधीयते ॥

नारदः ।

ग्रहोपरागे यद्दानं सूर्यसंक्रमणेषु च ।
द्वादश्यादौ तु यद्दानं तदेतत् पूर्त्तमुच्यते ॥

इति श्रीमहाराजाधिराज-श्रीमहादेवस्य समस्तकरणाधीश्वर-
सकलविद्याविशारद-श्रीहेमाद्रिविरचिते चतुर्वर्गचिन्ता-
मणौ दानखण्डे दानस्वरूपप्रकरणम् ॥ २ ॥

## अथ दानाङ्गनिरूपणम् ।

### तानि च द्रव्य-काल-श्रद्धा-संज्ञकानि ।

### तदुक्तं भविष्यपुराणे ।

प्रतिग्रहीता द्रव्यं च कालो देशश्च पावनः ।
श्रद्धा च सात्त्विकी ज्ञेयं दानानामङ्गपञ्चकम् ॥

तत्र पात्रनिरूपणम् ।

### स्कन्दपुराणे देवीं प्रति ईश्वरवचनम् ।

श्रुतीनामाकरा ह्येते रत्नानामिव सागराः ।
विप्रा विप्राधिपमुखे पूजनीयाः प्रयत्नतः ॥

विप्राधिपः, चन्द्रस्तद्वन्मुखं यस्याः सा तथा देवीसम्बोधनमेतत् ।

यत्र वेदविदो विप्रा न प्राश्नन्त्युत्तमं हविः ।
न तत्र देवा देवेशि हविरश्नन्ति कर्हिचित् ॥

तथा च तैत्तिरीयश्रुतिः । यावतीर्वै देवतास्ताः सर्वा वेदविदि ब्राह्मणे वसन्तीत्यादि ।

वियदित्युच्यते व्योम प्रकारः प्रापणे स्मृतः ।
दिवं सम्प्रापयन्त्येते दातॄन् विप्रास्ततः स्मृताः ॥
अपि नारायणोऽनन्तो ब्रह्मा स्कन्दोऽनिलः शिखी ।
तज्ज्ञानं नाभिनन्दन्ति यत्र विप्रा न पूजिताः ॥
येषां प्रसादसुलभ-मायु-र्धर्मः सुखं धनम् ।
श्री-र्यशः स्वर्गवासश्च तान् विप्रानर्चयेद्बुधः ॥

### विष्णुधर्मोत्तरे श्रीभगवानुवाच ।

ब्राह्मणैः पूजितैर्नित्यं पूजितोऽहं न संशयः ।
निर्भर्त्सितैश्च निर्भर्त्स्ये तैरहं सर्वकर्मसु ॥

विप्राः परा गतिर्मह्यं यस्तान् पूजयते नृप ।
तमहं स्वेन रूपेण प्रपश्यामि युधिष्ठिर ॥
काणाः कुण्ठाश्च षण्डाश्च दरिद्रा व्याधिताश्च ये ।
एवं रूपाश्च ये विप्राः पश्य रूपं ममैव ते ॥

एतत् तु ब्राह्मणजातिमात्रस्तुतिपरम् ।

**याज्ञवल्क्यः ।**

तपस्तप्त्वाऽसृजद्ब्रह्मा ब्राह्मणान् वेदगुप्तये ।
तृप्त्यर्थं पितृदेवानां धर्मसंरक्षणाय च ॥

**मत्स्यः ।**

नास्ति विप्रसमो देवो नास्ति विप्रसमो गुरुः ।
नास्ति विप्रात् परः शत्रुर्नास्ति विप्रात् परो विधिः ॥

**वह्निपुराणे ।**

न जातिर्न कुलं राजन् न स्वाध्यायः श्रुतं न च ।
कारणानि द्विजत्वस्य वृत्तमेव तु कारणम् ॥
किं कुलं वृत्तहीनस्य करिष्यति दुरात्मनः ।
कृमयः किं न जायन्ते कुसुमेषु सुगन्धिषु ॥
नैकमेकान्ततो ग्राह्यं पठनं हि विशाम्पते ।
वृत्तमन्विष्यतां तात रक्षोभिः किं न पठ्यते ॥
बहुना किमधीतेन नटस्येव दुरात्मनः ।
तेनाधीतं श्रुतं वाऽपि यः क्रियामनुतिष्ठति ॥
कपालस्थं यथा तोयं श्वदृते च यथा पयः ।
दूष्यं स्यात् स्थानदोषेण वृत्तहीनं तथा श्रुतम् ॥
तस्माद्विद्धि महाराज वृत्तं ब्राह्मणलक्षणम् ।
चतुर्वेदोऽपि दुर्वृत्तः शूद्रादल्पतरः स्मृतः ॥

सत्यं दम-स्तपो दान-महिंसेन्द्रियनिग्रहः ।

दृश्यन्ते यत्र राजेन्द्र स ब्राह्मण इति स्मृतः ॥

वशिष्ठः ।

यं न सन्तं न चासन्तं नाश्रुतं न बहुश्रुतम् ।

न सुवृत्तं न दुर्वृत्तं वेद कश्चित् स ब्राह्मणः ॥

सन्, विशिष्टः, असन्, तद्विपरीतः । अत्र चात्मोत्कर्षप्रकाशनं यो न करोति स पात्रमिति तात्पर्यम् ।

यमः ।

अहिंसानिरतो नित्यं जुह्वानो जातवेदसम् ।

स्वदारनिरतो दाता स वै ब्राह्मण उच्यते ॥

श्रुतं प्रज्ञानुगं यस्य प्रज्ञा चैव श्रुतानुगा ।

असम्भिन्नार्यमर्यादः स वै ब्राह्मण उच्यते ॥

आशिषोऽर्थार्थं पूजां च प्रसङ्गान्न करोति यः ।

निवृत्तो लोभमोहाभ्यां तं देवा ब्राह्मणं विदुः ॥

'आशिषः' आशीर्वादान्, 'अर्थार्थं' धनलाभाय । 'प्रसङ्गः' अत्यासक्तिः ॥

सत्यं दानं क्षमा शीलमानृशंस्यं दया घृणा ।

दृश्यन्ते यत्र लोकेऽस्मिँस्तं देवा ब्राह्मणं विदुः ॥

यमशातातपौ ।

तपो धर्मो दया दानं सत्यं शौचं श्रुतं घृणा ।

विद्या-विज्ञान-मास्तिक्य-मेतद्ब्राह्मणलक्षणम् ॥

बौधायनः ।

विद्या तपश्च योनिश्च एतद्ब्राह्मणलक्षणम् ।

विद्यातपोभ्यां यो हीनो जातिब्राह्मण एव सः ॥

वशिष्ठः ।

ये क्षान्तदान्ताः श्रुतपूर्णकर्णा जितेन्द्रियाः प्राणिवधे निवृत्ताः ।

प्रतिग्रहे सङ्कुचिताग्रहस्तास्ते ब्राह्मणास्तारयितुं समर्थाः ॥

**यमः ।**

विद्यावन्तश्च ये विप्राः सुव्रताश्च तपस्विनः ।
सत्यसंयमसंयुक्ता ध्यानयुक्ता जितेन्द्रियाः ॥
पुनन्ति दर्शनं प्राप्ताः किं पुनः संगतिं गताः ।
तेषां दत्त्वा च भुक्त्या च प्राप्नुयुः परमां गतिम् ॥
दत्त्वा द्विजाय शुद्धाय दाता याति शुभां गतिम् ।
विद्यातपःशीलवाँश्च स च तारयते नरः ॥

**कूर्मपुराणे ।**

स्वाध्यायवन्तो ये विप्रा विद्यावन्तो जितेन्द्रियाः ।
सत्यसंयमयुक्ताश्च तेभ्यो दद्याद्द्विजोत्तमाः ॥
श्रोत्रियाय कुलीनाय विनीताय तपस्विने ।
वृत्तस्थाय दरिद्राय प्रदेयं शक्तिपूर्वकम् ॥

**सम्वर्त्तः ।**

श्रोत्रियाय दरिद्राय अर्थिने च विशेषतः ।
यद्दानं दीयते तस्मै तद्दानं शुभकारकम् ॥

**श्रोत्रियस्तु यमेनोक्तः ।**

ॐकारपूर्विकास्तिस्रः सावित्रीयश्च विन्दति ।
चरितब्रह्मचर्यश्च स वै श्रोत्रिय उच्यते ॥

ॐकारपूर्विकाः, महाव्याहृतीरिति शेषः ।

**याज्ञवल्क्यः ।**

सर्वस्य प्रभवो विप्राः श्रुताध्ययनशालिनः ।
तेभ्यः क्रियापराः श्रेष्ठास्तेभ्योऽप्यध्यात्मवित्तमाः ॥

**पद्मपुराणे ।**

यथा हि सर्वदेवानां ज्येष्ठः श्रेष्ठः पितामहः ।

तथा ज्ञानी सदा पूज्यो निर्ममो निष्परिग्रहः ॥

मत्स्यपुराणे ।

शीलं संवसता ज्ञेयं शौचं संव्यवहारतः ।

प्रज्ञा संकथनाज्ज्ञेया त्रिभिः पात्रं परीक्ष्यते ॥

भविष्यपुराणे ।

क्षान्तिः स्पृहा दया सत्यं दानं शीलं तपः श्रुतम् ।

एतदष्टाङ्गमुद्दिष्टं परमं पात्रलक्षणम् ॥

वशिष्ठः ।

स्वाध्यायाढ्यं योनिमन्तं प्रशान्तं वैतानस्थं पापभीरुं बहुज्ञम् ।

स्त्रीषु क्षान्तं धार्मिकं गोशरण्यं व्रतैः क्लान्तं तादृशं पात्रमाहुः ॥

'योनिमान्' प्रशस्तकुलोद्भवः । 'वैतानस्थः' अग्निहोत्रादिकर्मपरः । 'स्त्रीषु क्षान्तः' स्त्रीविषये क्षान्तः । 'गोशरण्यः' गोशुश्रूषारतः ।

यमः ।

विद्यायुक्तो धर्मशीलः प्रशान्तः क्षान्तो दान्तः सत्यवादी कृतज्ञः ।

वृत्तिग्लानो गोहितो गोशरण्यो दाता यज्वा ब्राह्मणः पात्रमाहुः ॥

स्वाध्यायवान् नियमवाँस्तपस्वी ध्यानविच्च यः ।

क्षान्तो दान्तः सत्यवादी विप्रः पात्रमिहोच्यते ॥

महाभारते ।

साङ्गाँस्तु चतुरो वेदान् योऽधीते वै द्विजर्षभः ।

षड्भ्योऽनिवृत्तः कर्मभ्यस्तं पात्रमृषयो विदुः ॥

'पात्रं' पात्रतममित्यर्थः ।

वसिष्ठः ।

किञ्चिद्वेदमयं पात्रं किञ्चित् पात्रं तपोमयम् ।

पात्राणामपि तत् पात्रं शूद्रान्नं यस्य नोदरे ॥

**बृहस्पतिः ।**

किञ्चिद्वेदमयं पात्रं किञ्चित् पात्रं तपोमयम् ।
आगमिष्यति यत् पात्रं तत् पात्रं तारयिष्यति ॥
ब्रह्मचारी भवेत् पात्रं पात्रं वेदस्य पारगः ।
पात्राणामुत्तमं पात्रं शूद्रान्नं यस्य नोदरे ॥

**व्यासः ।**

किञ्चिद्वेदमयं पात्रं किञ्चित् पात्रं तपोमयम् ।
असङ्कीर्णं च यत् पात्रं तत् पात्रं तारयिष्यति ॥

'असङ्कीर्णं' योन्यादिसङ्कररहितम् ।

**याज्ञवल्क्यः ।**

न विद्यया केवलया तपसा वाऽपि पात्रता ।
यत्र वृत्तमिमे चोभे तद्धि पात्रं प्रकीर्त्तितम् ॥

**देवलः ।**

मात्रश्च ब्राह्मणश्चैव श्रोत्रियश्च ततः परः ।
अनूचानस्तथा भ्रूण ऋषिकल्प ऋषिर्मुनिः ॥
इत्येतेऽष्टौ समुद्दिष्टा ब्राह्मणाः प्रथमं स्तुतौ ।
तेषां परः परः श्रेष्ठो विद्या-वृत्तविशेषतः ॥
ब्राह्मणानां कुले जातो जातिमात्रो यदा भवेत् ।
अनुपेतः क्रियाहीनो मात्र इत्यभिधीयते ॥

'अनुपेतः' उपनयनरहितः ।

एकदेशमतिक्रम्य वेदस्याचारवानृजुः ।
स ब्राह्मण इति प्रोक्तो निभृतः सत्यवाग्घृणी ॥

'एकदेशातिक्रमः' वेदस्य किञ्चिन्न्यूनस्याध्ययनम् । 'निभृतः' शान्तः ।

एकां शाखां सकल्पां वा षड्भिरङ्गैरधीत्य वा ।

षट्कर्मनिरतो विप्रः श्रोत्रियो नाम धर्मवित् ॥
वेद-वेदाङ्गतत्त्वज्ञः शुद्धात्मा पापवर्जितः ।
शेषं श्रोत्रियवत् प्राप्तः सोऽनूचान इति स्मृतः ॥
अनूचानगुणोपेतो यज्ञ-स्वाध्यायमन्त्रितः ।
भ्रूण इत्युच्यते शिष्टैः शेषभोजी जितेन्द्रियः ॥
वैदिकं लौकिकं चैव सर्वं ज्ञानमवाप्य यः ।
आश्रमस्थो वशी नित्यमृषिकल्प इति स्मृतः ॥

'लौकिकं' अर्थार्जनादिज्ञानम् ।

ऊर्ध्वरेतास्तपस्युग्रे नियताशी न संशयी ।
शापानुग्रहयोः शक्तः सत्यसन्धो भवेदृषिः ॥
निवृत्तः सर्वतत्त्वज्ञः कामक्रोधविवर्जितः ।
ध्यानस्थो निष्क्रियो दान्तस्तुल्यमृत्काञ्चनो मुनिः ॥

'निवृत्तः' निषिद्धकाम्यकर्मभ्यः । 'निष्क्रियः, अर्थार्जनादिक्रियारहितः ।

एवमन्वय-विद्याभ्यां वृत्तेन च समुच्छ्रिताः ।
त्रिशुक्ला नाम विप्रेन्द्राः पूज्यन्ते सवनादिषु ॥

'सवनादिषु' यज्ञादिषु ।

प्रतिग्रहसमर्थोऽपि कृत्वा विप्रो यथाविधि ।
निस्तारयति दातारमात्मानं च स्वतेजसा ॥

'समर्थोऽपि' समर्थ एवेत्यर्थः ।

न लोके ब्राह्मणेभ्योऽन्यत् पवित्रं पुण्यमेव वा ।
अशक्यं च द्विजेन्द्राणां नास्ति वृत्तवतामिति ॥
योक्तव्यो हव्य-कव्येषु त्रिशुक्ली ब्राह्मणो द्विजैः ।
अभिभूतश्च पूर्वोक्तैर्दोषैः स्पृष्टश्च नेष्यते ॥

'अभिभूतः' अपकृष्टः । 'पूर्वोक्तैः' कुलविद्याचारैः । 'दोषैः' उपपातकादिभिः ।

मनुः ।

पात्रस्य हि विशेषेण श्रद्दधानस्तथैव च ।
अल्पं वा बहु वा प्रेत्य दानस्य प्राप्यते फलम् ॥

दक्षः ।

समं द्विगुण-साहस्र-मनन्तं च यथाक्रमम् ।
दाने फलविशेषः स्याद्धिंसायामेवमेव हि ॥
सममब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे ।
सहस्रगुणमाचार्ये अनन्तं वेदपारगे ॥

'अब्राह्मणाः' राजभृतादिः ।

यदाह शातातपः ।

अब्राह्मणास्तु षट् प्रोक्ता ऋषिः शातातपोऽब्रवीत् ।
आद्यो राजभृतस्तेषां द्वितीयः क्रयविक्रयी ॥
तृतीयो बहुयाज्यः स्यात् चतुर्थो ग्रामयाजकः ।

बहवो याज्या यस्य स 'बहुयाज्यः' ।

पञ्चमस्तु भृतस्तेषां ग्रामस्य नगरस्य वा ॥

ग्रामस्य नगरस्य भृत इत्यन्वयः ।

अनागतां तु यः पूर्वां सादित्यां चैव पश्चिमाम् ।
नोपासीत द्विजः सन्ध्यां स षष्ठोऽब्राह्मणः स्मृतः ॥

'ब्राह्मणब्रुवस्तु' पुरस्तादपात्रेषु व्याख्यास्यते ।

आचार्यस्तु महाभारते ।

अध्यापयेत् तु यः शिष्यं कृतोपनयनं द्विजः ।
सरहस्यं च सकलं वेदं भरतसत्तम ॥
तमाचार्यं महाबाहो प्रवदन्ति मनीषिणः ।
एकदेशं तु वेदस्य वेदाङ्गान्यपि वा पुनः ॥

योऽध्यापयति वृत्त्यर्थमुपाध्यायः स उच्यते ।
निषेकादीनि कर्माणि यः करोति नृपोत्तम ॥
सम्भावयति चान्नेन स विप्रो गुरुरुच्यते ।
अग्न्याधेयं पाकयज्ञा*नग्निष्टोमादिकं यथा ॥
यः करोति वृतो†नूनं स तु स्यादृत्विजो द्विजः ॥

यमः ।

सममब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे ।
प्राधीते शतसाहस्रमनन्तं वेदपारगे ॥

'प्राधीतः' प्रारब्धाध्ययनः ।

उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम् ।
वेत्ति विद्यामविद्यां च स भवेद्वेदपारगः ॥

बृहस्पतिः ।

शूद्रे समगुणं दानं वैश्ये तु द्विगुणं स्मृतम् ।
क्षत्रिये त्रिगुणं प्राहुः षड्गुणं ब्राह्मणे स्मृतम् ॥
श्रोत्रिये चैव साहस्रमाचार्ये द्विगुणं ततः ।
आत्मज्ञे शतसाहस्रमनन्तं त्वग्निहोत्रिणि ॥

विष्णुधर्मोत्तरे ।

अमानुषे समं दानं गोषु ज्ञेयं फलं तथा ।
द्विगुणं च तदेवोक्तं तथा त्रैवर्णसङ्करे ॥
शूद्रे चतुर्गुणं प्रोक्तं विशि चाष्टगुणं भवेत् ।
क्षत्रिये षोडशगुणं ब्रह्मबन्धौ तदेव तु ॥
द्वात्रिंशद्गुणं स्मृतं दानं वेदाध्ययनतत्परे ।

---

* अग्निष्टोमादिकान् मखानिति क्वचित् पाठः ।

† यस्य मतस्त्वर्त्विगिहोच्यत इति क्वचित् पाठः ।

शतघ्नं तद्विनिर्दिष्टं प्राधीते लक्षसम्मितम् ॥
अनन्तं च तदेवोक्तं ब्राह्मणे वेदपारगे ।

एतेषु केषाञ्चिदब्राह्मणब्राह्मणब्रुवादीनामपात्राणामपि पात्रत्वनिरूपणं मन्त्रव-द्गवादिदानव्यतिरिक्तदानविषयम् ।

मन्त्रपूर्वं च यद्दानमपात्राय प्रदीयते ।
दातुर्निकृत्य हस्तं तद्भोक्तुर्जिह्वां निकृन्तति ॥

इति शातातपवचनात् ।

उपरुन्धन्ति दातारं गौरश्वः काञ्चनं क्षितिः ।
अश्रोत्रियस्य विप्रस्य हस्तं दृष्ट्वा निराकृतेः ॥

इति वशिष्ठवचनाच्च ।

मन्त्रपूर्वं गवादिदानानामपात्रप्रतिपादकानिषेधात् शूद्रादीनां तु पात्रत्वनिरू-पणमन्नदानविषयम् । 'कृतान्नमितरेभ्य' इति गौतमवचनात् । 'अन्नं सर्वत्र दातव्य'-वक्ष्यमाणत्वाच्च ।

दक्षः ।

व्यसनापहरणार्थं च कुटुम्बार्थं च याचते ।
एवमन्विष्य दातव्यं सर्वदानेष्वयं विधिः ॥

'व्यसनं' राजचौराद्युपद्रवः । 'आपत्' दुर्भिक्षादिपीडा । 'आद्योऽर्थशब्दो' निवृत्तिवचनः ।

मनुः ।

सान्तानिकं यक्ष्यमाणमध्वगं सार्ववेदसम् ।
गुर्वर्थं पितृमात्रर्थं स्वाध्यायार्थ्युपतापिनः ॥
नवैतान् स्नातकान् विद्याद्ब्राह्मणान् धर्मभिक्षुकान् ।

'सान्तानिकः' सन्तानप्रयोजनविवाहार्थीत्यर्थः । 'अध्वगः' अत्र धर्मार्थं प्रस्थि-तः । सार्ववेदसः सर्वस्वदक्षिणयज्ञकृत् । 'उपतापी' व्याधिपीडितः ।

निःस्वेभ्यो देयमेतेभ्यो दानं विद्याविशेषतः ॥
एतेभ्यो हि द्विजाग्रेभ्यो देयमन्नं सदक्षिणम् ।
इतरेभ्यो बहिर्वेदिकृतान्नं तु विधीयते ॥

'विद्याविशेषत' इति, अल्पविद्याय अल्पं बहुविद्याय बह्वित्यर्थः ।

**बौधायनः ।**

सुब्राह्मण-श्रोत्रिय-वेदपारगेभ्यो गुर्वर्थ-निवेशौषधार्थ-वृत्तिक्षीण-यक्ष्यमाणाध्ययनाध्वसंयोग-वैश्वजितेषु द्रव्यविभागो यथाशक्ति कार्यो बहिर्वेदि भिक्षमाणेषु कृतान्नमितरेषु ।

निवेशः, विवाहः । 'वैश्वजितः' सर्वस्वदक्षिणया कृतविश्वजिद्यागः । बहिर्वेदिग्रहणादेतेभ्यो बहिर्वेद्यपि धनमवश्यं देयम् । अन्येभ्यस्तु अन्तर्वेद्येव धनदाननियमः । बहिर्वेदि तु कृतान्नस्यैव ।

**आपस्तम्बः ।**

भिक्षमाणी निमित्त-माचार्यो विवाहो यज्ञो मातापित्रोर्बुभूर्षार्हतश्च नियमादिलोपः ।

तत्र गुणान् समीक्ष्य यथा देयम् । इन्द्रियप्रीत्यर्थस्य तु भिक्षमाणमनिमित्तं न तथाऽऽद्रियेत । 'बुभूर्षा, भरणेच्छा' अर्हतश्च नियमादिलोप इति, अधिकारिण आवश्यककर्मविधिलोपप्रसङ्गः ।

**यमः ।**

वेदेन्धनसमृद्धेषु हुतं विप्रमुखाग्निषु ।
संतारयति दातारं महतः किल्बिषादपि ॥

**पद्मपुराणे ।**

एकं वेदान्तगं विप्रं भोजयेत् श्रद्धयाऽन्वितः ।
तस्य भोक्ता स वै कोटिविप्राणां नात्र संशयः ॥

**शातातपः ।**

वेदपूर्णमुखं विप्रं सुभुक्तमपि भोजयेत् ।
न तु मूर्खं निराहारं षड्रात्रमुपवासिनम् ॥

**व्यासः ।**

यत् सिक्थं वेदविद्भुङ्क्ते षट्कर्मनिरतः शुचिः ।
दातुः फलमसंख्येयं जन्म जन्म तदक्षयम् ॥
वेद-विद्या-व्रत-स्नाते श्रोत्रिये गृहमागते ।
क्रीडन्त्यौषधयः सर्वा यास्यामः परमां गतिम् ॥

'औषधयः' अन्नानि ।

**महाभारते ।**

तद्भक्तास्तद्धना राजँस्तद्गृहास्तद्व्यपाश्रयाः* ।
अर्थिनश्च भवन्त्यर्थे तेषु दत्तं महाफलम् ॥

अत्र 'तत्' शब्देन पूर्वोक्ताः पितरो देवताश्च परामृश्यन्ते । अथ वा तदेव दीयमानं भक्तमदनीयं येषां ते तथा । एवं तद्धनादिशब्दा अपि ।

तस्करेभ्यः परेभ्यो वा ये भयार्त्ता युधिष्ठिर ।
अर्थिनो भोक्तुमिच्छन्ति तेषु दत्तं महाफलम् ॥
हृतस्वा हृतदाराश्च ये विप्रा देशसंप्लवे ।
अर्थार्थमभिगच्छन्ति तेषु दत्तं महाफलम् ॥
चारित्रनियता राजन् ये कृशाः कृशवृत्तयः ।
अर्थिनश्चोपगच्छन्ति तेषु दत्तं महाफलम् ॥
अव्युत्क्रान्ताः स्वधर्मेषु पाषण्ड† समयेषु च ।

---

* तदाश्रयाः ।

† पाः वेदधर्मस्तं षण्डयति निष्फलं करोति वा खण्डयति ।
पालनाच्च त्रयीधर्मः पाशब्देन निगद्यते ॥
ष(ख)ण्डयन्ति तु तं यस्मात् पाष(ख)ण्डस्तेन कीर्त्तितः ।　　इति ।

कृशप्राणाः कृशाहारास्तेषु दत्तं महाफलम् ॥

तपस्विनस्तपोनिष्ठास्तथा भैक्ष्यचराश्च ये ।

अर्थिनः किञ्चिदिच्छन्ति तेषां दत्तं महाफलम् ॥

आदित्यपुराणे ।

अक्रोधना धर्मपराः शान्ताः शमदमे रताः ।

तादृशाः साधवो विप्रास्तेभ्यो दत्तं महाफलम् ॥

हृतसर्वस्वहरणा निर्दोषा प्रभविष्णुभिः ।

स्पृहयन्ति सुभक्तानां तेषु दत्तं महाफलम् ॥

शातातपपराशरौ ।

सन्निकृष्टमधीयानं ब्राह्मणं यो व्यतिक्रमेत् ।

भोजने चैव दाने च दहत्यासप्तमं कुलम् ॥

भविष्यपुराणे ।

यस्त्वासन्नमतिक्रम्य ब्राह्मणं पतितादृते ।

दूरस्थं भोजयेन्मूढो गुणाढ्यं नरकं व्रजेत् ॥

तस्मान्नातिक्रमेत् प्राज्ञो ब्राह्मणान् प्रातिवेशिकान् ।

'प्रातिवेश्मिकान्' स्वगृहाददूरवर्त्तिगृहान् ।

सम्बन्धिनस्तथा सर्वान् दौहित्रं विट्पतिं तथा ।

भागिनेयं विशेषेण तथा बन्धून् गृहाधिपः ॥

नातिक्रमेन्नरस्त्वेतान् सुमूर्खानपि गोपते ।

अतिक्रम्य महारौद्रं रौरवं नरकं व्रजेत् ॥

'विट्पतिः' जामाता । 'सुमूर्खानपि नातिक्रमेत्' इत्येतदन्नदानविषयम् ।
'हिरण्यादिदाने तु' सन्निहितमूर्खव्यतिक्रमे दोषाभावात् ।

तदुक्तं व्यास-वशिष्ठ-बौधायन-शातातप-पराशरैः ।

यस्य चैको गृहे मूर्खो दूरे चापि बहुश्रुतः ।

बहुश्रुताय दातव्यं नास्ति मूर्खे व्यतिक्रमः ॥

ब्राह्मणातिक्रमो नास्ति विप्रे वेदविवर्जिते ।

ज्वलन्तमग्निमुत्सृज्य न हि भस्मनि हूयते ॥

**महाभारते ।**

यदि स्यादधिको विप्रो दूरे वृत्तादिभिर्युतः ।

तस्मै यत्नेन दातव्यमतिक्रम्यापि सन्निधिम् ॥

**विष्णुः ।**

पुरोहितस्त्वात्मन एव पात्रं स्वसृ-दुहितृ-पुत्रजामातरश्च ।

इति । यस्यैते 'पुरोहितादयः' तस्यैव ते अन्यगुणरहिता अपि पुरोहितादित्वेनैव पात्राणि ।

**व्यासः ।**

मातापितृषु यद्दत्तं भ्रातृषु स्वसुतासु च ।

जायापत्योस्तु यद्दत्तं *सोऽनिन्द्यः स्वस्तिसंक्रमः ॥

पितुः शतगुणं दानं सहस्रं मातुरुच्यते ।

अनन्तं दुहितुर्दानं सोदर्ये दत्तमक्षयम् ॥

**विष्णुधर्मोत्तरे ।**

आत्मनस्तु भवेत् पात्रं नान्यस्य स्यात् पुरोहितः ।

पुरोहिते तु स्वे दत्तं दानमक्षय्यमुच्यते ॥

उपाध्याय-र्त्विजोश्चैव गुरावपि च मानवैः ।

वर्णापेक्षा न कर्त्तव्या मातरं पितरं प्रति ॥

'उपाध्यायादयस्तु' पूर्वमेव व्याख्याताः ।

**तथा ।**

मातृष्वसा स्वसा चैव तथैव च पितृष्वसा ।

मातामही भागिनेयी भागिनेयस्तथैव च ॥

---

* सोऽनन्तस्वर्गसंक्रम इति पाठान्तरम् ।

दौहित्रो विट्पतिश्चैव तेषु च दत्तमक्षयम्।
श्रीभ्रष्टे यत् तथा दत्तं तदप्यक्षयमुच्यते॥
मातापित्रोर्गुरौ मित्रे विनीते चोपकारिणि।
दीनानाथविशिष्टेभ्यो दातव्यं भूतिमिच्छता॥
अदत्तदानाज्जायन्ते परभाग्योपजीविनः।

'उपकारिणि' परोपकारपरे। 'विशिष्टाः' गुणातिशयशालिनः।

ब्रह्मपुराणे।

यत् कन्यासु पिता कुर्याद्दानं पूजनमर्चनम्।
यत्कृतं सुकृतं विद्यात् तासु दत्तं तदक्षयम्।
यद्दत्तं तासु कन्यासु तद्दानं पुण्यमेव च॥

कालिकापुराणे।

यद्दत्तं वेदविद्विप्रे यद्दत्तं ब्रह्मचारिणि।
तपोनिधौ तु यद्दत्तं कारुण्येन च यत् सदा।
तत् सर्वमक्षयं दानं वैमल्येन विधाय यत्॥

विष्णुधर्मोत्तरे।

अन्नदाने न कर्त्तव्यं पात्रापेक्षणमण्वपि।
अन्नं सर्वत्र दातव्यं धर्मकामेन वै द्विज॥
सदोषेऽपि तु निर्दोषं सगुणेऽपि गुणावहम्।
तस्मात् सर्वप्रयत्नेन देयमन्नं सदैव तु॥
विद्याऽध्ययनसक्तानामन्नदानं महाफलम्॥

तथा।

दत्त्वा नृपतिभीतानां धनिनां च तथा धनम्।
तस्करेभ्यश्च भीतानां फलमक्षयमुच्यते॥
यियक्षतां तथा दत्तं व्यसनं तर्त्तुमिच्छताम्।

दुःखान्वितानां दीनानामक्षयं परिकीर्त्तितम् ॥
विवाह-मेखलाबन्ध-प्रतिष्ठादिषु कर्मसु ।
आपन्नेषु तु यद्दत्तमक्षयं तदुदाहृतम् ॥

सम्वर्त्तः ।

दानान्येतानि देयानि तथाऽन्यानि च सर्वशः ।
दीना-न्ध-कृपणा-र्थिभ्यः श्रेयःकामेन धीमता ॥

पद्मपुराणे ।

दीना-न्धकृपणा-नाथ-वाग्विहीनेषु यत् तथा ।
विकलेषु तथाऽन्येषु जड-वामन-पङ्गुषु ॥
रोगार्त्तेषु च यद्दत्तं तत् स्याद्बहुफलं धनम् ।

## अथापात्रनिरूपणम् ।

तत्र मनुः ।

गोरक्षकान् वाणिजकाँस्तथा कारु-कुशीलवान् ।
प्रैष्यान् वार्द्धुषिकाँश्चैव विप्रान् शूद्रवदाचरेत् ॥
ये व्यपेताः स्वकर्मभ्यः परपिण्डोपजीविनः ।
द्विजत्वमभिकाङ्क्षन्ति ताँश्च शूद्रवदाचरेत् ॥
नानृग्ब्राह्मणो भवति न वणिग्न कुशीलवः ।
न शूद्रप्रेषणं कुर्वन्न स्तेनो न चिकित्सकः ॥
अव्रता ह्यनधीयाना यत्र भैक्ष्यचरा द्विजाः ।
तं ग्रामं दण्डयेद्राजा चौरभक्तप्रदो हि सः ॥

वसिष्ठः ।

उदक्या*ऽन्वासते येषां ये च केचिदनग्नयः ।
कुलं वाऽश्रोत्रियं येषां सर्वे ते शूद्रधर्मिणः ॥
'अन्वासते' कर्मकाले समीप एव तिष्ठति ।

---

* उदकं शुद्ध्यर्थं जलं चतुर्थदिनेऽर्हति या ऋतुमती ।

विष्णुः ।

न दानं यशसे दद्यान्न भयान्नोपकारिणि ।
न नृत्य-गीतशीलेभ्यो धर्मार्थमिति निश्चयः ॥

'उपकारिणि' आत्मोपकारपरे प्रत्युपकारसमीहयेत्यर्थः ।

महाभारते ।

यस्तु प्रेष्यान् द्विजान् मूढो योजयेद्धव्य-कव्ययोः ।
न भवेत् तत् फलं तस्य वैदिकीयं तथा श्रुतिः ॥

यमः ।

अव्रतानाममन्त्राणां जातिमात्रोपजीविनाम् ।
नैषां प्रतिग्रहो देयो न शिला तारयेच्छिलाम् ॥
अपविद्धाग्निहोत्रस्य गुरोर्विप्रियकारिणः ।
द्रविणं नैव दातव्यं सततं पापकर्मणः ॥
न प्रतिग्रहमर्हन्ति वृषलाध्यापका द्विजाः ।
शूद्रस्याध्यापनाद्विप्रः पतत्यत्र न संशयः ॥

तथा ।

राजधानी तथा शून्या यथा कूपश्च निर्जलः
यथा हुतमनग्नौ च तथा दत्तं द्विजेऽनृचे ॥

वसिष्ठः ।

यथा काष्ठमयो हस्ती* यथा चर्ममयो मृगः ।
यश्च विप्रोऽनधीयानस्त्रयस्ते † नामधारकाः ॥
विद्वद्भोज्यमविद्वांसो येषु राष्ट्रेषु भुञ्जते ।
अप्यनावृष्टिमिच्छन्ति महद्वा जायते भयम् ॥

---

* यश्चेति क्वचित् पाठः ।

† नाम बिभर्तीति क्वचित् पाठः ।

**व्यास-शातातपौ ।**

नष्टशौचे व्रतभ्रष्टे विप्रे वेदविवर्जिते ।
रोदित्यन्नं दीयमानं किं मया दुष्कृतं कृतम् ॥
शौचहीनास्तु ये विप्रा न च यज्ञोपवीतिनः ।
हुतं दत्तं तपस्तेषां नश्यत्यत्र न संशयः ॥
ऊषरे वापितं बीजं यच्च भस्मनि हूयते ।
[illegible]याहीनेषु यद्दत्तं त्रिषु नाशो विधीयते ॥
प्रस्तरे पतितं बीजं भिन्नभाण्डे च दोहनम् ।
भस्मन्यपि हुतं द्रव्यं तद्वद्दानमसाधुषु ॥

'पूर्वत्र पात्रगुणकथने कृतेऽपि' पुनर्दोषवचनमेवंविधदोषभाग्जनप्रतिषेधार्थम् ।

**मनुः ।**

पात्रभूतो हि यो विप्रः प्रतिगृह्य प्रतिग्रहम् ।
असत्सु विनियुञ्जीत तस्य देयं न किञ्चन ॥
सञ्चयं कुरुते यश्च प्रतिगृह्य समन्ततः ।
धर्मार्थं नोपयुङ्क्ते यो न तं तस्करमर्चयेत् ॥

'असत्सु' निषिद्धेषु द्यूतादिषु ।

**दक्षः ।**

विधिहीने तथा पात्रे यो ददाति प्रतिग्रहम् ।
न केवलं हि तद्याति शेषमप्यस्य नश्यति ॥

**मनुः ।**

अनर्हते यद्ददाति न ददाति यदर्हते ।
अर्हानर्हापरिज्ञानाद्दानाद्धर्माच्च हीयते ॥

**यमः ।**

यस्तु लिङ्गच्युतां वृत्तिमलिङ्गेभ्यः प्रयच्छति

घोरायां ब्रह्महत्यायां पच्यते नात्र संशयः ॥

भविष्यपुराणे ।

नाब्राह्मणाय दातव्यं न देयं ब्राह्मणाक्रिये ।
न ब्राह्मणब्रुवे चैव न च दुर्ब्राह्मणे धनम् ॥

व्यासः ।

ब्रह्मबीजसमुत्पन्नो मन्त्र-संस्कारवर्जितः ।
जातिमात्रोपजीवी च भवेद्ब्राह्मणः स तु ॥
गर्भाधानादिभिर्युक्तस्तथोपनयनेन च ।
न कर्मविन्न चाधीते स भवेद्ब्राह्मणाक्रियः ॥

वाराहपुराणे ।

अव्रतौ वैश्य-राजन्यौ शूद्रस्याब्राह्मणास्त्रयः ।
वेद-व्रतविहीनश्च ब्राह्मणो ब्राह्मणब्रुवः ॥

यमः ।

यस्य विदश्च वेदी च विच्छिद्येते त्रिपौरुषम् ।
स वै दुर्ब्राह्मणो नाम यश्चैव वृषलीपतिः ॥

कूर्मपुराणे ।

न वार्यपि प्रयच्छेत नास्तिके हैतुकेऽपि वा ।
न पाषण्डिषु सर्वेषु नावेदविदि धर्मवित् ॥

'नास्तिकः' परलोकवासनाशून्यः । 'हैतुकः' हेतुभिः परलोकं निराकरिष्णुः

मनुर्विष्णुश्च ।

न वार्यपि प्रयच्छेत वैडालव्रतिके द्विजे ।
न वकव्रतिके पापे नावेदविदि धर्मवित् ॥
त्रिष्वप्येतेषु दत्तं हि विधिनोपार्जितं धनम् ।

दातुर्भवत्यनर्थाय परत्रादातुरेव च ॥

'अनर्थः' प्रत्यवायः ।

यथा प्लवेनौपलेन निमज्जत्युदके तरन् ।
दातृ-प्रतिग्रहीतारौ तथैवाज्ञौ निमज्जतः ॥

**यमः ।**

यः कारणं पुरस्कृत्य व्रतचर्यां निषेवते ।
पापं व्रतेन प्रच्छाद्य वैडालं नाम तद्व्रतम् ॥
अर्थं च विपुलं गृह्यं दत्त्वा लिङ्गं विवर्जयेत् ।
आश्रमान्तरितं रक्षेद्वैडालं नाम तद्व्रतम् ॥
यतीनामाश्रमं गत्वा प्रत्यवस्येत् तु यः पुनः ।
यतिधर्मविलोपेन वैडालं नाम तद्व्रतम् ॥

**विष्णुः ।**

धर्मवर्जी सदालुब्धः* शूद्रिको लोकदम्भकः ।
वैडालव्रतिको ज्ञेयो हिंस्रः सर्वाभिसन्धकः ॥
यश्च धर्मध्वजो नित्यं सुराध्वज इवोच्छ्रितः ।
प्रच्छन्नानि च पापानि वैडालं नाम तद्व्रतम् ॥
अधोदृष्टिर्नैकृतिकः स्वार्थसाधनतत्परः ।
शठो मिथ्याविनीतश्च वकव्रतचरो द्विजः ॥
ये वकव्रतिनो विप्रा ये च मार्जारलिङ्गिनः ।
ते पतन्त्यन्धतामिस्रे तेन पापेन कर्मणा ॥

**चतुर्विंशतिमते ।**

रोदित्यन्नं दीयमानं किं मया दुष्कृतं कृतम् ।
अश्रोत्रियस्य विप्रस्य हस्तं दृष्ट्वा निराकृते ॥

---

* क्षाद्मिक इति क्वचित् पाठः ।

कात्यायनस्त्वन्यथाऽऽह ।

य: स्वाध्याया-ग्निमाल: स्याद्देवादीन् नैभिरिष्टवान् ।
निराकर्त्ताऽमरादीनां स विज्ञेयो निराकृति:–इति ॥

शातातपः ।

नेष्टं देवलके दत्तमप्रतिष्ठं च वार्धुषौ ।
यच्च वाणिज्यके दत्तं न च तत् प्रेत्य नो इह ॥

दक्षः ।

धूर्त्ते वन्दिनि मल्ले च कुवैद्ये कितवे शठे ।
चाट-चारण-चौरेभ्यो दत्तं भवति निष्फलम् ॥

आदिपुराणे ।

देव-पितृ-विहीने यदीश्वरेभ्यश्च दीयते ।
दत्त्वा तु कीर्त्तितं यच्च वेदाग्नित्यागिने तथा ॥
अन्यायो-पार्जित-धनैर्दत्तमब्राह्मणे च यत्
गुरवेऽनृतवक्त्रे च स्तेनाय पतिताय च ॥
कृतघ्नाय च यद्दत्तं सर्वदा ब्रह्मविद्विषे ।
याजकाय च सर्वस्य वृषल्याः पतये तथा ॥
परिचारक भृत्याय सर्वस्य पिशुनाय च ।
इत्येतानि च राजेन्द्र वृथा दानानि षोडश ॥
गर्भस्थोऽज्ञानबालोऽपि भुङ्क्ते वृद्धो न यौवने ।
तद्दत्तस्येह नाशोऽस्ति सर्वथा रिपुसूदन ॥

तदीयफलमिति शेषः ।

विष्णुधर्मे ।

परस्थाने वृथा दानं सदोषं परिकीर्त्तितम् ।
आरूढपतिते चैव अन्यायात्तैर्धनैश्च यत् ॥

व्यर्थं हि ब्राह्मणे दानं पतिते तस्करे तथा ।
गुरौ चाप्रीतिजनके कृतघ्ने ग्रामयाजके ॥
वेदविक्रायके चैव यस्याश्चोपपतिर्गृहे ।
स्त्रीभिर्जितेषु यद्दत्तं व्यालग्राहे तथैव च ॥
ब्रह्मबन्धौ च यद्दत्तं यद्दत्तं वृषलीपतौ ।
परिचारके च यद्दत्तं वृथा दानानि षोडश ॥

## महाभारते ।

पङ्ग्वन्ध-बधिरा मूका व्याधिनोपहताश्च ये ।
भर्त्तव्यास्ते महाराज न तु देयः प्रतिग्रहः ॥

इति प्रतिग्रहीतृनिरूपणम् ।

## अथ द्रव्याख्यं दानाङ्गमुच्यते । तत्र देयलक्षणम् ।

## भविष्यपुराणे ।

यद्यदिष्टं विशिष्टं च न्यायप्राप्तं च यद्भवेत् ।
तत् तद्गुणवते देयमित्येतद्दानलक्षणम् ॥

## वह्निपुराणे ।

शुभोपात्तेन यत् किञ्चित् करोति लघुना नरः ।
अनन्तं फलमाप्नोति मुद्गलोऽपि यथा पुरा ॥

'शुभोपात्तेन' न्यायोपार्जितेन । 'लघुना' स्वल्पेन द्रव्येणेति शेषः

## देवीपुराणे ।

न्यायतो यानि प्राप्तानि शाकान्यपि नृपोत्तम ।
तानि देयानि देव्यास्तु कन्यका-योषितां सदा ॥
तद्भक्तेषु च विप्रेषु अपरेषु च नित्यशः ।

## विष्णुपुराणे ।

यद्यदिष्टतमं लोके यच्चास्य दयितं गृहे ।

तत् तद्गुणवते देयं तदेवाक्षयमिच्छता ॥

**महाभारते ।**

विशेषतो महाराज तस्य न्यायार्जितस्य च ।
श्रद्धया विधिवत् पात्रे दत्तस्यान्तो न विद्यते ॥

**गौतमः ।**

स्वामी ऋक्थ-क्रय-सम्विभाग-परिग्रहा-धिगमेषु ब्राह्मणस्याधिकं लब्धं क्षत्रियस्य विजितं निर्विष्टं वैश्यशूद्रयोः–इति ।

'ऋक्थम्' अप्रतिबन्धो दायः । 'सम्विभागः' सप्रतिबन्धो दायः । 'परिग्रहः' जलतृणकाष्ठादेरनन्यपूर्वस्य स्वीकारः । 'अधिगमः' निध्यादेः प्राप्तिः । एषु निमित्तेषु स्वामी भवति । 'अधिकम्' असाधारणम् । 'निर्विष्टम्, कृष्यादिना द्विजशुश्रूषादिना च यल्लब्धम् । 'निर्वेशो भृतिभोगयो'रिति स्मरणात् ।

**मनुः ।**

सप्त वित्तागमा धर्म्या दायो लाभः क्रयो जयः
प्रयोगः कर्मयोगश्च सत्प्रतिग्रह एव च ॥

न्यायोपचयार्थं द्रव्यप्रयोगः । 'कर्मयोगः' आर्त्विज्यम् ।

**नारदः ।**

धनमूलाः क्रियाः सर्वा यत्नस्तस्यार्जने मतः
रक्षणं वर्धनं भोग इति तस्य विधिः क्रमात् ॥
तत् पुनस्त्रिविधं ज्ञेयं शुक्लं शवलमेव च ।
कृष्णं च तस्य विज्ञेयो विभागः सप्तधा पुनः ॥

एकैकस्य शुक्लादेः सप्त सप्त भेदा भवन्तीत्यर्थः ।

श्रुत-शौर्य-तपः-कन्या- याज्य-शिष्या-न्वयागतम् ।
धनं सप्तविधं शुक्लमुदयोऽप्यस्य तद्विधः ॥

'आगतशब्दः' श्रुतादिभिः प्रत्येकं सम्बध्यते । 'कन्यागतम्' आर्षविवाहे वरा-

द्गृहीतं गोमिथुनादि । 'याज्यागतं' आर्त्विज्यादिलब्धम् । 'शिष्यागतम्' गुरुदक्षिणादि । अत्र च यथाधिकारं शुक्लत्वमवधेयम् । 'उदयः' फलं तदप्यस्य शुद्धमित्यर्थः ।

कुशीद-कृषि-वाणिज्य-शिल्प-शुल्का-नुवृत्तितः ।
कृतोपकारादाप्तं च शवलं समुदाहृतम् ॥

'न्यायोपचयार्थं द्रव्यप्रयोगः' कुशीदम् । 'शिल्पं' कारुकादि कर्म । आकरादिभ्यो द्रव्योदयः 'शुल्कम्' । 'अनुवृत्तिः' सेवा ।

पार्श्वक-द्यूत-चौर्या-र्त्ति-प्रतिरूपक- साहसैः ।
व्याजेनोपार्जितं यत् तत् सर्वेषां कृष्णमुच्यते ॥

'पार्श्वकोपार्जितं' उत्कोचादिलब्धम् । 'आर्त्त्युपार्जितं' परपीडया लब्धम् । 'प्रतिरूपकं' मणिसुवर्णादेः प्रतिरूपकरणम् । 'साहसं' स्वप्राणात्ययाङ्गीकारेण पश्यतोहरत्वादिकम् । 'व्याजः' दम्भेन तपःप्रभृति ।

तेन क्रयो विक्रयश्च दानं ग्रहणमेव च ।
विविधाश्च प्रवर्त्तन्ते क्रियाः सम्भोग एव च ॥
यथाविधेन द्रव्येण यत् किञ्चित् कुरुते नरः ।
तथाविधमवाप्नोति स फलं प्रेत्य चेह च ॥

'यथाविधेन' शुक्लेन कृष्णेन शवलेन वा दानादि कुरुते 'तथाविधं फलमाप्नोति' शुक्लेन शुद्धं दुःखराहितम् । 'शवलेन' मिश्रम् । 'कृष्णेन' असुखोदयम् ।

पद्मपुराणे ।

शुक्लेन वित्तेन कृतं पुण्यं बहुफलं भवेत् ।
शवलं मध्यमफलं कृष्णं हीनधनं फलम् ॥

ब्रह्मप्रोक्ते ।

शुक्लवित्तेन यो धर्मं प्रकुर्यात् श्रद्धयाऽन्वितः ।
तीर्थे पात्रं समासाद्य देवत्वे तत् समश्नुते ॥
राजसेन च भावेन वित्तेन शवलेन च ।

दद्याद्दानमतिथिभ्यो मानुषत्वे तदश्नुते ॥
तमोवृत्तस्तु यो दद्यात् कृष्णवित्तेन मानवः ।
तिर्यक्त्वे तत्फलं प्रेत्य समश्नाति नराधमः ॥

नारदः ।

तत् पुनर्द्वादशविधं प्रतिवर्णाश्रयात् स्मृतम् ।
साधारणं स्यात् त्रिविधं शेषं नवविधं स्मृतम् ॥

धर्म्यमिति शेषः । प्रतिवर्णाश्रयान्नवविधं साधारणं त्रिविधमित्येवं द्वादशविध-मित्यर्थः ।

क्रमागतं प्रीतिदायः प्राप्तं च सह भार्यया ।
अविशेषेण सर्वेषां वर्णानां त्रिविधं धनम् ॥
वैशेषिकं धनं ज्ञेयं ब्राह्मणस्य त्रिलक्षणम् ।
प्रतिग्रहेण संलब्धं याज्यतः शिष्यतस्तथा ॥
त्रिविधं क्षत्रियस्यापि प्राहुर्वैशेषिकं धनम् ।
युद्धोपलब्धं काराच्च दण्डाच्च व्यवहारतः ॥

'कारः' बल्यादिः ।

वैशेषिकं धनं ज्ञेयं वैश्यस्यापि त्रिलक्षणम् ।
कृषि-गोरक्ष-वाणिज्यैः शूद्रस्यैभ्यस्त्वनुग्रहात् ॥

'एभ्यः' ब्राह्मणादिभ्यः ।

सर्वेषामेव वर्णानामेवं धर्मो धनागमः ।
विपर्ययादधर्मः स्यान्न चेदापद्गरीयसी ॥

एवं धर्मसाधनं द्रव्यं निरूप्य तच्च कियद्देयं किं देयमित्यपेक्षायाम् ।

याज्ञवल्क्यः ।

स्वकुटुम्बाविरोधेन देयं दारसुताहते ।
नान्वये सति सर्वस्वं यच्चान्यस्मै प्रतिश्रुतम् ॥

'अन्वये' सन्ताने । 'प्रतिश्रुतं' प्रतिज्ञातम् । 'कुटुम्बाविरोधस्तु' व्याख्यात

**बृहस्पतिना ।**

कुटुम्ब-भक्त-वसनाद्देयं यदतिरिच्यते ।
मध्वास्वादो विषं पश्चाद्दातुर्धर्मोऽन्यथा भवेत् ॥

'भक्तम्' अन्नम् । 'वसनं' वस्त्रम् । यावता द्रव्येण कुटुम्बस्य वस्त्रमन्नं संपद्यते तदतिरिक्तं देयम्, इतरत् तु न देयमित्यर्थः ।

**मनुः ।**

शक्तः परजने दाता स्वजने दुःखजीविनि ।
मध्वापातो विषास्वादः स धर्मप्रतिरूपकः ॥

**कात्यायनः ।**

सर्वस्वं गृहवर्जं तु कुटुम्बभरणाधिकम् ।
यच्च द्रव्यं स्वकं देयमदेयं स्याद्‌तोऽन्यथा ॥

**तथा ।**

सप्तरात्राद्गृहक्षेत्राद्यद्यत् क्षेत्रं प्रचीयते ।
पित्रा वाऽथ स्वयं प्राप्तं तद्दातव्यं विवक्षितम् ॥

'सप्तरात्रादिभ्यो यत् प्रचीयते' अधिकं भवति, तद्दातव्यमिति विवक्षितमित्यर्थः ।

**शिवधर्मे ।**

तस्मात् त्रिभागं वित्तस्य जीवनाय प्रकल्पयेत् ।
भागद्वयं तु धर्मार्थमनित्यं जीवितं यतः ॥

अशेषवित्तस्य भागपञ्चकं परिकल्प्य भागत्रयं जीवनाय संरक्ष्य भागद्वयं धर्माय कल्पयेदित्यर्थः ।

**महाभारते ।**

एकां गां द[illegible] दद्याच्च गोशती ।
शतं सहस्रगुर्दद्यात्* सर्वे तुल्यफलाः स्मृताः ॥

---

* सहस्रं बहुगोधन इति क्वचित् पाठः ।

नन्वेतद्वचनद्वयोपात्तयोर्वित्तगोशब्दयोरुपलक्षणार्थत्वेन देयमात्रपरत्वाद्विषमभागपरिकल्पनं विरुद्धं यथाश्रुत-गो-वित्त-परत्वेनाविरोधे दशगुरेकां गां दद्यादिति वचनाद्दशावरगोर्धनिनोऽपि गोदानानधिकारः स्यात्। दशधेनुग्रहणयोगयधनिपरत्वे तु उपलक्षणपक्षाङ्गीकाराद्विरोधतादवस्थ्यं तस्मान्न्यूनाधिककल्पयोः कृपणोदाराधिकारिविषयतयैव व्यवस्थेति सुस्थम्।

कुटुम्बाविरोधेन देयमित्युक्तम्। तस्यापवादमाह।

व्यासः।

> कुटुम्बं पीडयित्वाऽपि ब्राह्मणाय महात्मने।
> दातव्यं भिक्षवे चान्नमात्मनो भूतिमिच्छता॥

अत्यतिथ्यादिविषयमेतत्।

कात्यायनः।

> स्वेच्छादेयं स्वयं प्राप्तं बन्धाचारेण बन्धकम्।
> वैवाहिकक्रमायाते सर्वदानं न विद्यते॥

'बन्धकः' आधिस्तद्बन्धाचारेणाधिरूपेणैव देयम्। 'यद्विवाहलब्धं तत् तस्यां भार्यायां सत्यां सर्वमदेयम्। 'यच्च' पितामहादिक्रमायातं तत् पुत्रे सति न देयम्।

> सौदायिकं क्रमायातं शौर्यप्राप्तं च यद्भवेत्।
> स्त्री-ज्ञाति-स्वाम्यनुज्ञातं दत्तं सिद्धिमवाप्नुयात्॥

'सौदायिकं' विवाहलब्धं तद्भार्ययाऽनुज्ञातम्। 'क्रमायातम्' अविभक्तधनैर्ज्ञातिभिरनुज्ञातम्। भृतेन, सता युद्धेन लब्धं स्वामिनाऽनुज्ञातमित्यर्थः।

याज्ञवल्क्यः।

> देयं प्रतिश्रुतं चैव दत्त्वा नापहरेत् पुनः।

यमः।

> यच्च वाचा प्रतिज्ञातं कर्मणा नोपपादितम्।
> तद्धनमृणसंयुक्तमिह लोके परत्र च॥

'ऋणासंयुक्तम्' ऋणासमर्पणजन्यदोषसंयुक्तमित्यर्थः ।

सप्ताजातान् नरो हन्याद्वर्त्तमानाँस्तु सप्त च ।
अतिक्रान्तान् सप्त हन्यादप्रयच्छन् प्रतिश्रुतम् ॥
प्रतिश्रुताप्रदानेन* दत्तस्य हरणेन च ।
जन्मप्रभृति यत् पुण्यं तत् सर्वं संप्रणश्यति ॥

**महाभारते ।**

ब्राह्मणं स्वयमाहूय भिक्षार्थे कृशवर्त्तिनम् ।
पश्चान्नास्तीति यो ब्रूयात् तं विद्याद्ब्रह्मघातकम् ॥

**तथा ।**

संश्रुत्य यो न दित्सेत याचित्वा यस्य नेष्यति ।
उभावनृतिकावेतौ मृषा पापमवाप्नुतः ॥

**तथा ।**

यो न दद्यात् प्रतिश्रुत्य स्वल्पं वा यदि वा बहु ।
आशास्तस्य हताः सर्वाः क्लीवस्येव प्रजाफलम् ॥
यं निरीक्षेत संक्रुद्ध आशया पूर्वजातया ।
प्रदहेत हि तं राजन् कक्षमक्षयभुग्यथा ॥
तस्माद्दात्तव्यमेव प्रतिश्रुत्य युधिष्ठिर ।

**नारदः ।**

ब्राह्मणस्य च यद्देयं सान्वयस्य† च नास्ति कः ।
सकुल्ये तस्य निनयेत् तदभावेऽस्य बन्धुषु ॥
यदा तु न सकुल्यः स्यान्न च सम्बन्धि-बान्धवाः ।
दद्यात् सजाति-शिष्येभ्यस्तदभावेऽप्सु निःक्षिपेत् ॥

---

* दत्तस्योच्छेदनेन चेति क्वचित् पाठः ।

† न चास्ति स इति क्वचित् पाठः ।

गौतमः ।

प्रतिश्रुत्याधर्मसंयुक्ताय न दद्यात् ।

[illegible]यनः ।

प्राणसंशयमापन्नं यो मामुत्तारयेदितः ।

सर्वस्वं ते प्रदास्यामीत्युक्तेऽपि न तथा भवेत् ॥

## अथ फलातिशयप्रतिपादनार्थं पात्रविशेषेण देयविशेषाः ॥

भविष्यपुराणे ।

गो-भू-तिल-हिरण्यादि दद्यान्नित्यमतन्द्रितः ।

तथा द्रव्यविशेषांश्च दद्यात् पात्रविशेषतः ॥

आर्त्तानामन्नदानं च गोदानं च कुटुम्बिनाम् ।

तथा प्रतिष्ठाहीनानां क्षेत्रदानं प्रशस्यते ॥

सुवर्णं याज्ञिकानां च विद्यां चैवोर्ध्वरेतसाम् ।

कन्यां चैवानपत्यानां ददतां गतिरुत्तमा ॥

विष्णुधर्मोत्तरे ।

युद्धोपकरणं द्रव्यं क्षत्रिये द्विजपुङ्गवाः ।

पण्योपयोगि तद्वैश्ये शूद्रे शिल्पोपयोगि च ॥

यस्योपयोगि यद्द्रव्यं देयं तस्यैव तद्भवेत् ।

येन येन च भाण्डेन यस्य वृत्तिरुदाहृता ॥

तत् तत् तस्यैव दातव्यं पुण्यकामेन धीमता ।

दण्डं कृष्णाजिनं चैव तथा विप्राः कमण्डलुम् ॥

धीरं पुण्यमवाप्नोति दत्त्वैतान् ब्रह्मचारिणे ।

वस्त्रं शय्यासनं धान्यं वेश्म वेश्मपरिच्छदम् ॥

गृहस्थाय तु तद्दत्तं ज्ञेयं बहुफलं सदा ।

नीवारं वल्कलं शाकं फलं मूलं च गोरसम् ॥

दानप्रस्थाय यद्दत्तमनन्तं परिकीर्त्तितम् ।
भिक्षाप्रदानं यतये पात्रदानं तथा हितम् ॥
गन्ध-माङ्गल्य-ताम्बूल-रक्तवस्त्रादिकं स्त्रियः ।
स्त्रीणां प्रदानं दातव्यं भर्त्तृहस्ते तु नान्यथा ॥
प्रोक्तं संग्रहणं ह्येतद्गुप्तं भर्त्तुः प्रयच्छतः ।
अन्नं प्रतिश्रयं चैव पान्थे दत्तं महाफलम् ॥
विवाहादिक्रियाकाले तत्क्रियासिद्धिकारणम् ।
यः प्रयच्छति धर्मज्ञः सोऽश्वमेधमवाप्नुयात् ॥
आतुरेभ्यो धनं दत्त्वा दानं बहुफलं भवेत् ।
बालक्रीडनकं दत्त्वा मृष्टमन्नं तथैव च ॥
फलं मनोहरं वाऽपि अग्निष्टोमफलं लभेत् ।
मृष्टान्नं मानवो दत्त्वा मृष्टान्नानि तु काङ्क्षताम् ॥
अक्षयं फलमाप्नोति स्वर्गलोकं च गच्छति ।
श्रीविहीने तथा दत्त्वा भोजनं द्विजसत्तम ॥
वस्त्रं शुभ्रं वा धर्मज्ञः पुण्यं महदुपाश्नुते ।
कृपास्थानं परं विप्रा विच्युताः पुरुषाः श्रिया ॥
तस्यानुकम्पा कर्त्तव्या सतां वर्त्मनि तिष्ठता ।
कार्ये सत्युद्यमं कृत्वा परेषां समुपस्थिते ॥
अक्षयं फलमाप्नोति नात्र कार्या विचारणा ।
यवसानां प्रदानेन धेनुमत्सु द्विजातिषु ॥
लवणानां च धर्मज्ञः फलमक्षयमश्नुते ।
प्रसवेषु तु यद्द व्यसनार्त्तिभयेषु च ॥
तद्दानमक्षयं प्रोक्तं पुरुषस्य विपश्चितः ।
दत्त्वा ब्राह्मणशार्दूल जलपात्रमथार्थिने ॥

फलमक्षयमाप्नोति नात्र कार्या विचारणा ॥

अङ्गिराः ।

देवतानां गुरूणां च मातापित्रोस्तथैव च ।
पुण्यं देयं प्रयत्नेन नापुण्यं नोदितं क्वचित् ॥

नन्दिपुराणे ।

पापदः पापमाप्नोति नरो लक्षगुणं सदा ।
पुण्यदः पुण्यमाप्नोति शतशोऽथ सहस्रशः ॥
तथा पात्रविशेषेण दानं स्यादुत्तरोत्तरम् ।
पितृ-मातृ-गुरुब्रह्मवादिनां दीयते तु यत् ॥
तल्लक्षगुणितं विद्यात् पुण्यं वा पापमेव वा ।

वह्निपुराणे ।

द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ ।
दाताऽन्नस्य च दुर्भिक्षे सुभिक्षे हेम-वस्त्रदः ॥

अथादेयनिरूपणम् ।

देवलः ।

अन्यायाधिगतां दत्त्वा सकलां पृथिवीमपि ।
श्रद्धावर्जमपात्राय न काञ्चिद्भूतिमाप्नुयात् ॥

वह्निपुराणे ।

अन्यायोपगतं द्रव्यं गृहीत्वा यो ह्यपण्डितः ।
धर्माभिकाङ्क्षी यजते न धर्मफलमश्नुते ॥
धर्मवैतंसिको यस्तु पापात्मा पुरुषस्तथा ।
ददाति दानं विप्रेभ्यो लोकविश्वासकारणम् ॥
पापेन कर्मणा विप्रो धनं लब्ध्वा निरंशकः ।
राग-मोहा-न्वितस्वान्तः कलुषां योनिमाप्नुयात् ॥

अर्थसञ्चयबुद्धिर्हि लोभ-मोह-वशं गतः ।
उद्वेजयति भूतानि हिंसया पापचेतनः ॥
एवं लब्ध्वा धनं लोभात् यजते यो ददाति च ।
स पापकर्मणा तेन न सिध्यति दुरागमात् ॥

**तथा ।**

एतैरन्यैश्च बहुभिरन्यायोपार्जितैर्धनैः ।
आरभ्यन्ते क्रिया यास्तु पिशाचा अत्र दैवतम् ॥

**वृद्धशातातपः ।**

द्रव्येणान्यायलब्धेन यः करोत्यौर्ध्वदेहिकम् ।
न स तत् फलमाप्नोति तस्यार्थस्य दुरागमात् ॥

**स्कन्दपुराणे ।**

देवद्रव्यं गुरुद्रव्यं द्रव्यं चण्डेश्वरस्य च ।
त्रिविधं पतनं दृष्टं दान-लङ्घन-भक्षणात् ॥

**यमः ।**

अपहृत्य परस्यार्थं दानं यस्तु प्रयच्छति ।
स दाता नरकं याति यस्यार्थस्तस्य तत् फलम् ॥

**तथा ।**

परिभुक्तमवज्ञातमपर्याप्तमसंस्कृतम् ।
यः प्रयच्छति विप्रेभ्यस्तद्भस्मन्यवतिष्ठते ॥

'परिभुक्तं' गृहीतोपयोगं वस्त्रादि । 'अपर्याप्तं' स्वकार्याक्षमं जरद्गवादि ।

**शातातपः ।**

वेदविक्रयनिर्दिष्टं स्त्रीषु यच्चार्जितं धनम् ।
अदेयं पितृदेवेभ्यो यच्च क्लीवादुपागतम् ॥

वेदविक्रयो निर्दिश्यते व्यपदिश्यते यत् तत् तथा। निर्विष्टमिति पाठे वेदविक्रयाल्लब्धमित्यर्थः। 'स्त्रीषु यच्चार्जितमिति' स्त्रीव्यापारोपजीवनेन यल्लब्धम्। स्त्रीषु विक्रीतास्विति केचित्।

दक्षः।

सामान्यं याचितं न्यास आधिर्दाराश्च तद्धनम्।
अन्वाहितं च निःक्षेपः सर्वस्वं चान्वये सति॥
आपत्स्वपि न देयानि नव वस्तूनि पण्डितैः।
यो ददाति स मूढात्मा प्रायश्चित्तीयते नरः॥

'सामान्यम्' अनेकस्वामिकम्। 'याचितं' संव्यवहारार्थं याचित्वाऽऽनीतं वस्त्रालङ्कारादि। गृहस्वामिनेऽदर्शयित्वा तत्परोक्षमेव गृहस्वामिनेऽर्पणीयमिति गृहजनहस्ते स्थापितं द्रव्यं 'न्यासः'। 'आधिः' प्रसिद्धा,। 'दाराः' कलत्रम्। 'तद्धनं' दारधनम्।

तच्च व्याख्यातं मनुना।

अध्यग्न्यध्यावाहनिकं दत्तं च प्रीतिकर्मणि।
भ्रातृ-मातृ-पितृ-प्राप्तं षड्विधं स्त्रीधनं स्मृतम्॥

'अध्यग्नि' अग्निसमक्षं यत् स्त्रियै दत्तम्। 'अध्यावाहनिकं विवाहकाले पित्रादिदत्तम्। 'प्रीतिकर्मणि' स्त्रीपुंससम्बन्धेन भर्त्रार्पितम्। विवाहोत्तरकालेऽपि भ्रात्रादिभ्यः 'प्राप्तम्'।

याज्ञवल्क्योऽप्याह।

भ्रातृ-मातृपितृ-पतिप्राप्तमध्यग्न्युपागतम्।
आधिवेदनिकं चैव स्त्रीधनं परिकीर्त्तितम्॥

'दारान्तरमिच्छता भर्त्रा यद्दत्तं' 'तदाधिवेदनिकम्' एवं प्रकारं स्त्रीधनं न देयमिति। 'अन्वाहितं' यदेकस्य हस्ते निहितं द्रव्यं तेनाप्यनु पश्चादन्यस्य हस्ते स्वामिने देहीति निहितम्। गृहस्वामिसमक्षं स्थापितं द्रव्यं 'निक्षेपः'।

**कात्यायनः ।**

विक्रयं चैव दानं च न नेयाः स्युरनिच्छवः ।
दाराः पुत्राश्च सर्वस्वमात्मनैव तु योजयेत् ॥
आपत्काले तु कर्त्तव्यं दानं विक्रय एव वा ।
अन्यथा न प्रवर्त्तन्त इति शास्त्रस्य निश्चयः ॥
आपत्काले तु कर्त्तव्यं दानं विक्रय एव वा ।

इति स्वकीयदानविक्रयेच्छुदारादिविषयम् ।

यत् तु दाराणाम् आपत्स्वपि न देयानीति दक्षेणादेयत्वमुक्तं तत् स्वदान-विक्रयानिच्छुदारादिविषयम् ।

**वसिष्ठः ।**

शुक्र-शोणितसम्भवः पुरुषो मातापितृनिमित्तकस्तस्य प्रदान-विक्रय-परित्यागेषु मातापितरौ प्रभवतः न त्वेकं पुत्रं दद्यात् प्रतिगृह्णीयाद्वा स हि सन्तानाय पूर्वेषां न तु स्त्री पुत्रं दद्यात् प्रतिगृह्णीयाद्वा अन्यत्रानुज्ञानाद्भर्त्तुः ।

**बृहस्पतिः ।**

कस्मैचिद्याचमानाय दत्तं धर्माय यद्भवेत् ।
पश्चाच्च न तथा तत् स्यान्न देयं तस्य तद्भवेत् ॥

धर्मं कर्त्तुं याचमानाय यद्दत्तं तेन चेदसौ धर्मं न कुर्यात् तदा तत् तस्मै न देयमित्यर्थः ।

**अङ्गिराः ।**

बहुभ्यो न प्रदेयानि गौर्गृहं शयनं स्त्रियः ।
विभक्तदक्षिणा ह्येता दातारं तारयन्ति हि ॥
एका एकस्य दातव्या न बहुभ्यः कथं चन ।
दातुर्विक्रयमापन्ना दहत्यासप्तमं कुलम् ॥

विक्रेतुरेवैतद्दोषप्रदर्शनं न प्रकृतस्य दातुरिति ।

औपकायनः ।

कन्या-शय्या-गृहं चैव देयं यद्गोस्त्रियादिकम् ।
तदेकस्मै प्रदातव्यं न बहुभ्यः कथं चन ॥

व्यासः ।

न व्यङ्गां रोहिणीं बन्ध्यां न कृशां मृतवत्सकाम् ।
न वामनां वेहतं च दद्याद्विप्राय गां नरः ॥

'वेहत्' गर्भोपघातिनी ।

देवलः ।

विवत्सां रोगिणीं रूक्षां स्थविरां शृङ्गभीषणीम् ।
क्षीण-क्षीरशरीराङ्गां दत्त्वा दोषमवाप्नुयात् ॥

कात्यायनः ।

न चोषरां न निर्दग्धां महीं दद्यात् कथं च न ।
न श्मशानपरीतां च न पापानिषेविताम् ॥

'पापाः' हिंस्रप्राणिनो व्याघ्रादयः ।

विष्णुधर्मोत्तरे ।

सोषरां तस्कराकीर्णां तथा व्यालवतीं भुवम् ।
न दद्यात् तु द्विजश्रेष्ठो या च सन्धिषु संस्थिता ॥

स्कन्दपुराणे ।

पापदः पापमाप्नोति नरो लक्षगुणं सदा ।
तस्मान्न दद्यान्मेधावी पातकं जातु कस्य चित् ॥

महाभारते ।

दुःखितेभ्यो हि भूतेभ्यो मृत्यु-रोग-जरादिभिः ।
भूयः को दुःखमपरं सघृणो दातुमर्हति ॥
दुःखं ददाति योऽन्यस्य ध्रुवं दुःखं स विन्दति ।

तस्मान्न कस्यचिद्दुःखं दातव्यं दुःखभीरुणा ॥

## अथ पात्रविशेषेण देयमुच्यते ।

### यमः ।

सुवर्णं रजतं ताम्रं यतिभ्यो यः प्रयच्छति ।
न तत्फलमवाप्नोति तत्रैव परिवर्त्तते ॥

'परिवर्त्तः' विपर्ययः 'एवशब्दः' अप्यर्थस्तेन 'तत्र' तस्मिन् दातर्यपि परिवर्त्तते, धर्मविपरीतं धर्मं जनयतीत्यर्थः ।

### तथा चोक्तम् ।

यतये काञ्चनं दत्त्वा दाताऽपि नरकं व्रजेत्-इति ।

### देवलः ।

पक्वमन्नं गृहस्थस्य वानप्रस्थस्य गोरसः ।
वृत्तिश्च भिक्षुवृत्तिभ्यो न देयं पुण्यमिच्छता ॥

'वृत्तिः' भिक्षातिरिक्तं वर्त्तनम् ।

### तथा ।

न शूद्राय हविर्दद्यात् स्वस्ति क्षीरं तिलान् मधु ।
न शूद्रात् प्रतिगृह्णीयात् तेषामन्यन्निवेदयेत् ॥
गोरसं काञ्चनं क्षेत्रं गास्तिलान् मधु-सर्पिषी ।
तथा सर्वान् रसाँश्चापि चण्डालेभ्यो न दीयते ॥

'स्वस्ति न दद्यादिति' प्रणाममन्तरेण शूद्रस्य स्वस्तीति न ब्रूयादित्यर्थः । 'तेषामिति' क्षीरादीनां क्रमार्थमन्यद्द्रव्यं निवेदयेदित्यर्थः ।

### शङ्खलिखितौ ।

कृशरं पायसं यावं दधि-मधु-कृष्णाजिनानि शूद्रेभ्यो न दद्यान्नापाकृतं किञ्चित् ।

विष्णुधर्मोत्तरे ।

भुवं धेनुमथाश्वं च रत्नानि कनकं तथा ।
तिलांश्च कुञ्जरं दद्यान्नाविज्ञाय गुणागुणान् ॥

अथ ग्राह्यमुच्यते ।

तत्र व्यासः ।

कुटुम्बार्थं हि सच्छूद्रात् प्रतिग्राह्यमयाचितम् ।
वृत्त्यर्थमात्मने चैव न हि याचेत कर्हिचित् ॥

स्कन्दपुराणे ।

दुर्भिक्षे दारुणे प्राप्ते कुटुम्बे सीदति क्षुधा ।
असाधोरपि गृह्णीयात् प्रतिग्रहमतन्द्रितः ॥
ऋणापाकरणार्थं च प्रतिग्राह्यं द्विजोत्तमैः ।
चिकीर्षया तु यज्ञस्य मातापित्रर्थमेव च ॥
गृह्णीयाद्ब्राह्मणादेव नित्यमाचारवर्त्तिनः ।
श्रद्धया विमलं दत्तं तथा धर्मो न हीयते ॥
अब्राह्मणकृताद्दानाद्विशुद्धादपि सर्वतः ।
ब्राह्मणेन कृतं ग्राह्यं निषिद्धमपि जानता ॥

'निषिद्धमपि' अनापदि निषिद्धं कृष्णाजिनादि ।

ब्रह्माण्डपुराणे ।

अनापद्यतिधर्मेण याज्यतः शिष्यतस्तथा ।
गृह्णन् प्रतिग्रहं विप्रो न धर्मात् परिहीयते ॥
समा-षण्मास-मासैक-षडह-त्रिदिनक्षमम् ।
एकाह्निकं वा धर्माय गृह्णीयादुत्तरोत्तरम् ॥

गारुडपुराणे ।

यावता पञ्चयज्ञानां कर्त्तुं निर्वहणं क्षमः ।

तावदेव [illegible]यात् कुटु[illegible] ॥
यद्गृहीतमनिन्द्येभ्यः श्रद्धापूतं च यद्भवेत् ।
दानं प्रतिग्रहीतारं तारयत्येव तद्ध्रुवम् ॥
द्रव्यराशिरपि श्रेयाननिन्द्यात् प्रतिगृह्णताम्
निन्द्यस्य द्रव्यलेशोऽपि निरयायैव जायते ॥

**बृहस्पतिः ।**

अपि पापकृतां राज्ञां प्रतिगृह्णन्ति साधवः ।
पृथिवीं नान्यदिच्छन्ति पावनं ह्येतदुत्तमम् ॥

**ब्रह्मवैवर्त्ते ।**

पितृ-मातृ-गुरोरर्थे-विवाहार्थे च धर्मतः ।
अध्वरार्थे च विदुषा ग्रहीतव्यं धनं सदा ॥
गृह्णन् गो-भू-हिरण्यादि तथा नैव विचारयेत् ।
कृतान्नं तु ग्रहीतव्यं बहुशः सुपरीक्षितम् ॥

**सम्वर्त्तः ।**

गृहस्थस्तु सदा युक्तो धर्ममेवानुचिन्तयेत् ।
पो[illegible] वर्गार्थसिद्ध्यर्थं धनमिच्छेत बुद्धिमान् ॥

**तथा ।**

अयाचिताहृतं ग्राह्यमपि दुष्कृतकर्मणः ।
अन्यत्र कुलटा-षण्ड-पतितेभ्यस्तथा द्विषः ॥

**याज्ञवल्क्यः ।**

राजा-न्तेवासि-याज्येभ्यः सीदन्निच्छेद्धनं क्षुधा ।
दम्भि-हैतुक-पाषण्डि-बकवृत्तींश्च वर्जयेत् ॥

**तथा ।**

देवा-तिथ्य-र्चन-कृते गुरु-भृत्याभिवृत्तये ।

सर्वतः प्रतिगृह्णीयादात्मवृत्त्यर्थमेव च ॥

'सर्वतः' शूद्रादेरपि। 'आत्मवृत्तिः' शरीरधारणमात्रं न तु तृप्तिः ॥

**तथा विष्णुः ।**

गुरून् भृत्याँश्चोज्जिहीर्षन्नर्चिष्यन् देवता-तिथीन् ।
सर्वतः प्रतिगृह्णीयान्न तु तृप्येत् स्वयं ततः ॥

**अङ्गिराः ।**

गुर्वर्थमतिथीनां वा भृत्यानां च विशेषतः ।
शूद्रान्नं प्रतिगृह्णीयान्न तु भुङ्क्ते स्वयं ततः ॥

**मनुः ।**

*आहृतामुद्यतां भिक्षां पुरस्तादप्रचोदिताम् ।
मेने प्रजापतिर्ग्राह्यामपि दुष्कृतकर्मणः ॥
नाश्नन्ति पितरस्तस्य दश वर्षाणि पञ्च च ।
न च हव्यं वहत्यग्निर्यस्तामभ्यवमन्यते ॥

**याज्ञवल्क्यः ।**

कुशाः शाकं पयो मत्स्या गन्धाः पुष्पं दधि क्षितिः ।
मांसं शय्या-सनं धानाः प्रत्याख्येयं न वारि च ॥

**मनुः ।**

शय्यां गृहान् कुशान् गन्धान् पयः पुष्पं महीं दधि ।
मत्स्या धानाः पयो मांसं शाकं चैव † न निर्लुठेत् ॥

**तथा ।**

एधो-दकं मूल-फलमन्नमभ्युद्यतं च यत् ।

---

* आहृताभ्युद्यतामिति क्वचित् पाठः ।

† न निर्णुदेदिति पाठान्तरम् ।

सर्वतः प्रतिगृह्णीयान्मधु चाभयदक्षिणाम् ॥

'एधः' काष्ठम् । 'अभ्युद्यतम्' अयाचितागतम् ।

## आङ्गिराः ।

खल-क्षेत्रगतं धान्यं वापी-कूपगतं जलम् ।
अददद्भ्योऽपि तद्ग्राह्यं यच्च गोष्ठगतं पयः ॥
पक्वान्नवर्जं विप्रेभ्यो गो-धान्यं क्षत्रियादपि ।
वैश्यात् तु सर्वधान्यानि शूद्राद्ग्राह्यं न किञ्चन ॥

अभोज्यान्नविप्रादिविषयमेतत् ।

यत् तु क्षेत्रगतं धान्यं खले वाऽथ गृहाद्बहिः ।
सर्वकालं ग्रहीतव्यं शूद्रेभ्योऽप्यसंशयम् ॥
संस्कारैः शुद्ध्यति ह्येतद्धान्यं तेन शुचि स्मृतम् ।
तस्माद्दानं ग्रहीतव्यं मृतसूत्यन्तरेष्वपि ॥

'मृतसूत्यन्तरेष्वपीति' तदापद्विषयम् ।

आममांसं मधु-घृतं धानाः क्षीरमथोदितम् ।
गुडं तक्रं च संग्राह्यं निवृत्तिर्नापि शूद्रतः ॥
शाक-मत्स्या-रनालानि कन्तुकाः सक्तवस्तिलाः ।
इक्षुः फलानि पिण्याकं प्रतिग्राह्याणि सर्वतः ॥

'कन्तुकाः' कन्थाः ।

## बृहस्पतिः ।

विवाहोत्सवयज्ञेषु त्वन्तरामृतसूतके ।
सर्वं संकल्पितं ग्राह्यं न दोषः परिकीर्त्तितः ॥

## शङ्खः ।

कुमारप्रसवे नाड्यामच्छिन्नायां गुड-तिल-हिरण्यवस्त्र-गो-धान्य-प्रतिग्रहेऽदोषः । तदह इत्येके ।

आह प्रचेताः।

सर्वेषां सकुल्यानां द्विपद-चतुष्पद-धान्य-वासोदक्षिणाप्रतिग्रहेष्वदोषः ।

विष्णुधर्मोत्तरे ।

ग्राह्यं प्राणप्रदानं तु चाण्डालाद् पुक्कसादपि ।
जीवन् सर्वमवाप्नोति जीवन् धर्मं करोति च ॥
शरीरं धर्मसर्वस्वं रक्षणीयं प्रयत्नतः ।

अग्राह्यमुच्यते ।

ब्रह्मपुराणे ।

ब्राह्मणः प्रतिगृह्णीयात् वृत्त्यर्थं साधुतः सदा ।
अश्व-श्व-मणि-मातङ्ग-तिल-लोहांश्च वर्जयेत् ॥
कृष्णाजिन-तिलग्राही न भूयः पुरुषो भवेत् ।
शय्या-लङ्कार-वस्त्राणि प्रतिगृह्य मृतस्य च ॥
नरकान्न निवर्त्तेत धेनुं तिलमहीं तथा ।
बहुशो द्विजवित्तानामपि स्तेयं तरिष्यति ॥

'आतुरात्' सुमूर्षोः ।

वह्निपुराणे ।

हस्त्य-श्व-रथ-यानानि मृतशय्या-सनादि यत् ।
कृष्णाजिनं च गृह्णाति अनापत्सु गतो द्विजः ॥
तथोभयमुखीं घोरां सशैलां मेदिनीं द्विजः ।
कुरुक्षेत्रे च यद्दानं चाण्डालात् पतितात् तथा ॥
मासिकेऽपि नवश्राद्धे भुञ्जन् प्रेतत्वमाप्नुयात् ।

स्कन्दपुराणे ।

अजिनं मृतशय्यां च शृङ्गीं चोभयतो मुखीम् ।

कुरुक्षेत्रे च गृह्णानो न भूयः पुरुषो भवेत् ॥

पद्मपुराणे ।

ब्रह्माण्डं भूमिदानं च ग्राह्यं नैकेन तद्भवेत् ।
गृह्णन् दोषमवाप्नोति ब्रह्महत्यां न संशयः ॥

'भूमिदानमिति' षोडशमहादानान्तर्गतकाञ्चनमेदिनीदानविषयमेतत् ॥

वशिष्ठः ।

शस्त्रं विषं सुरा वा अप्रतिग्राह्याणि ब्राह्मणस्य ।

भिक्षाग्रहणमधिकृत्य मनुः ।

चिकित्सककृतघ्नानां शल्यकर्त्तुश्च वार्द्धुषेः ।
षण्डस्य कुलटायाश्च उद्यतामपि वर्जयेत् ॥

भिक्षामिति शेषः । 'चिकित्सकोऽत्र' कुवैद्यः । 'षण्डः' क्लीवः । 'कुलटा' पुंश्चली ।

यमः ।

चिकित्सकस्य मृगयोर्वेश्यायाः कितवस्य च ।
षण्डनर्त्तकयोश्चैव उद्यतां परिवर्जयेत् ॥

'मृगयुः' मृगहन्ता ।

आह वसिष्ठः ।

चिकित्सकस्य मृगयोः शल्यकर्त्तुश्च पाशिनः ।
षण्डस्य कुलटायाश्च उद्यतापि न गृह्यते ॥

'चिकित्सकस्य शल्यकर्त्तुर्मृगयोः पाशिन इति' यथाक्रमं विशेषणद्वयं योजनीयमिति केचित् ।

विष्णुः ।

एतेष्वपि च कार्येषु समर्थः सन् प्रतिग्रहे ।
नादद्यात् कुलटा-षण्ड-पतितेभ्यस्तथा द्विषः ॥

'एतेष्विति' पूर्वोक्तेषु गुरु-देवता-तिथिपूजादिष्वित्यर्थः ।

मनुः ।

नेहेतार्थं प्रसङ्गेन न विरुद्धेन कर्मणा ।
*न विद्यमानेष्वर्थेषु नार्त्यामपि यतस्ततः ॥

याज्ञवल्क्यः ।

न स्वाध्यायविरोध्यर्थमीहेत न यतस्ततः ।
न विरुद्धप्रसङ्गेन सन्तोषी च भवेत् सदा ॥

तथा ।

प्रतिग्रहे सूनी-चक्री-ध्वजी-वेश्या-नराधिप ।
दुष्टा दशगुणं पूर्वा पूर्वादेको यथोत्तरम् ॥

'सूना' प्राणिहिंसा सा विद्यते यस्यासौ सूनी प्राणिहिंसापरः । 'चक्री' तैलिकः । 'ध्वजी' सुरायाः कर्त्ता ।

सम्वर्त्तः ।

राजप्रतिग्रहो घोरो मध्वास्वादो विषोपमः ।
पुत्रमांसं वरं भुक्तं न तु राजप्रतिग्रहः ॥

स्कन्दपुराणे ।

राजप्रतिग्रहप्लुष्टः पुनर्जन्म न विन्दति ।
ब्राह्मणं यः परित्यज्य द्रव्यलोभेन मोहितः ॥
विषयामिषलुब्धस्तु कुर्याद्राजप्रतिग्रहम् ।
नरके रौरवे घोरे तस्येह पतनं ध्रुवम् ॥
वृक्षा दावाग्निना दग्धाः प्ररोहन्ति घनागमे ।
राजप्रतिग्रहैर्दग्धा न प्ररोहन्ति कर्हिचित् ॥

तथा ।

राजप्रतिग्रहो घोरो रौद्रः पापो भयानकः ।
नरके यातनां घोरां कः सोढुं शक्तिमान् भवेत् ॥

* न कल्पमानेष्विति पाठान्तरम् ।

तथा ।

ब्रह्मर्षिर्गालवश्चाहं कुरुक्षेत्रे पुरा स्थितः ।
अश्वप्रतिग्रहान्नूनमश्वयोनिं समाश्रितः ॥
दावाग्निना च यो दग्ध उदकात् स प्ररोहति ।
प्रतिग्रहेण यो दग्धः स दग्धो न प्ररोहति ॥

मनुः ।

न यज्ञार्थं धनं शूद्राद्विप्रो भिक्षेत कर्हिचित् ।
भिक्षित्वा यजमानो हि चण्डालः प्रेत्य जायते ॥
ये शूद्रादधिगम्यार्थमग्निहोत्रमुपासते ।
सर्वे ते ब्राह्मणा निन्द्या ब्रह्मवादिषु गर्हिताः ॥

तथा ।

हिरण्यं भूमिमश्वं गामन्नं वासस्तिलान् घृतम् ।
अविद्वान् प्रतिगृह्णानो भस्मीभवति दारुवत् ॥
अतपास्त्वनधीयानः प्रतिग्रहरुचिर्द्विजः ।
अम्भस्यश्मप्लवेनेव सह तेनैव मज्जति ॥
तस्मादविद्वान् बिभियाद्यस्मात्* कस्मात् प्रतिग्रहात् ।
स्वल्पकेनाप्यविद्वान् हि पङ्के गौरिव सीदति ॥

याज्ञवल्क्यः ।

विद्यातपोभ्यां हीनेन न तु ग्राह्यः प्रतिग्रहः ।
गृह्णन् प्रदातारमधो नयत्यात्मानमेव च ॥

ततश्च विद्यातपोरहितेनावसीदताऽपि बहुहिरण्यादिव्यतिरेकेण कुटुम्बभरण-मात्रोपयिकाल्पद्रव्यप्रतिग्रहः कर्त्तव्यो न तु तत्रातिप्रशक्तिरिति गम्यते ।

---

* तस्मादिति क्वचित् पाठः ।

विष्णुधर्मोत्तरे ।

प्रतिग्रहसमर्थोऽपि प्रसङ्गं तत्र वर्जयेत् ।
प्रतिग्रहेण विप्राणां ब्रह्मतेजो विनश्यति ॥
न द्रव्याणामविज्ञाय विधिं धर्म्यं प्रतिग्रहे ।
प्राज्ञः प्रतिग्रहं कुर्यादवसीदन्नपि क्षुधा ॥

'विधिः' मन्त्रेतिकर्त्तव्यताप्रकारलक्षणः ।

याज्ञवल्क्यः ।

प्रतिग्रहसमर्थोऽपि नाऽऽदत्ते यः प्रतिग्रहम् ।
ये लोका दानशीलानां स तानाप्नोति शाश्वतान् ॥

इति द्रव्यनिरूपणम् ।

अथ कालाख्यं दानाङ्गमभिधीयते । तत्र पुण्यकाल-स्तावत् ।

देवीपुराणे ।

नित्यो विभुः स्थितः कालो ह्यवस्था तस्य हेतुजा ।
निमित्तादिविशेषैः स लोके पुण्यफलप्रदः ॥

मार्कण्डेयपुराणे ।

निमेषैर्दशभिः काष्ठाः साष्टाभिश्च कला पुनः ॥
त्रिंशत्काष्ठा कलाभिश्च त्रिंशद्भिः स्यान्मुहूर्त्तकम् ।
अहोरात्रं मुहूर्त्तास्तु नृणां त्रिंशत् तु वै स्मृतम् ।
त्रिंशता तैरहोरात्रैः पक्षौ द्वौ मास उच्यते ॥
तैः षड्भिरयनं वर्षं द्वे ते स्याद्दक्षिणोत्तरे ।
तद्देवानामहोरात्रं दिनं तत्रोत्तरायणम् ॥

'साष्टाभिर्दशभिः' अष्टादशभिरित्यर्थः ।

आह दक्षः ।

देवकार्याणि पूर्वाह्णे मनुष्याणां च मध्यमे ।
पितॄणामपराह्णे च कार्याणीति विनिश्चयः ॥

अत्र तिथिकालः प्रथममुच्यते । भविष्यपुराणे ।

तिथीनां प्रवरा यस्माद्ब्रह्मणा समुदाहृता ।
प्रतिपादिता पदे पूर्वे प्रतिपत् तेन चोच्यते ॥
स्नानं दानं शतगुणं कार्त्तिके या तिथिर्भवेत् ।

स्कन्दपुराणे ।

आश्विने मासि संप्राप्ते द्वितीया शुक्लकृष्णजा ।
दानं प्रदत्तं यत् तस्यामनन्तफलमुच्यते ॥

पद्मपुराणे ।

वैशाखमासे या पुण्या तृतीया शुक्लपक्षजा ।
अनन्तफलदा दातुः स्नानदानादिकर्मसु ॥

भविष्यपुराणे ।

शिवा शान्ता सुखा राजँश्चतुर्थी त्रिविधा स्मृता ।
मासि भाद्रपदे शुक्ला शिवलोकेषु पूजिता ॥
तस्यां स्नानं तथा दानमुपवासो जपस्तथा ।
भवेत् सहस्रगुणितं प्रसादाद्दन्तिनो* नृप ॥
माघे मासि तथा शुक्ला या चतुर्थी महीपते ।
सा शान्ता शान्तिदा नित्यं शान्तिं कुर्यात् सदैव हि ॥
स्नानदानादिकं सर्वमस्यामक्षयमुच्यते ।
यदा शुक्लचतुर्थ्यां तु वारो भौमस्य वै भवेत् ॥

---

* दन्ती गणेशः ।

तदा सा सुखदा ज्ञेया सुखा नामेति कीर्त्तिता ।
स्नानदानादिकं सर्वमस्यामक्षयमुच्यते ॥

स्कन्दपुराणे ।

शुक्ला मार्गशिरे मासि श्रावणे या च पञ्चमी ।
स्नानदाने बहुफला नागलोकप्रदायिनी ॥

भविष्यपुराणे ।

येयं भाद्रपदे मासि षष्ठी च भरतर्षभ ।
स्नानदानादिकं सर्वमस्यामक्षयमुच्यते* ॥

तथा ।

शुक्लपक्षस्य सप्तम्यां सूर्यवारो भवेद्यदि ।
सप्तमी विजया नाम तत्र दत्तं महाफलम् ॥
शुक्लपक्षस्य सप्तम्यां नक्षत्रं पञ्चतारकम् ।
यदा च स्यात् तदा ज्ञेया जया नामेति सप्तमी† ॥
स्नानदानादिकं तस्यां भवेत् शतगुणं विभो ।

'पञ्चतारकमिति' रोहिण्याश्लेषामघाहस्ताः‡ ।

या मार्गशीर्षमासस्य शुक्लपक्षे तु सप्तमी ।

---

* स्कन्दपुराणे । भाद्रे मास्यसिते पक्षे भानौ चैव करे स्थिते ।
पाते कुजे च रोहिण्यां सा षष्ठी कपिला भवेत् ॥
मार्गे भाद्रपदे शुक्ला षष्ठी वैधृतिसंयुता ।
रविवारेण संयुक्ता सा चंपेह प्रकीर्त्तिता ॥

† ब्रह्मपुराणे । शुक्लपक्षे तु सप्तम्यां यदा संक्रमते रविः ।
महाजया तदा प्रोक्ता सप्तमी भास्करप्रिया ॥
स्नानं दानं तपो होमः पितृदेवाभिपूजनम् ।
सर्वं कोटिगुणं प्रोक्तं तपनेन महोजसा ॥

‡ ज्योतिषेऽश्विन्यादिनक्षत्राणां पृथक् २ तारा उक्ताः । तत्क्रमेण पञ्च तारा विद्यन्ते यस्य तदिति विग्रहः । द्रष्टव्यो मुहूर्त्तचिन्तामणौ २ प्रकरणे श्लोकः ।

नन्दा सा कथिता वीर सर्वानन्दकरी स्मृता ॥

स्नानदानादिकं सर्वमस्यामक्षयमुच्यते ।

आदित्यपुराणे ।

रेवती यत्र सप्तम्यामादित्यदिवसे भवेत् ।

तद्दानं शतसाहस्रमिति प्राह दिवाकरः ॥

भविष्यपुराणे ।

पौषे मासि यदा देवि शुक्लाष्टम्यां बुधो भवेत् ।

तदा तु सा महापुण्या महारुद्रेति कीर्त्तिता ॥

तस्यां स्नानं महादानं तर्पणं विप्रभोजनम् ।

मत्प्रीतये कृतं देवि शतसाहस्रिकं भवेत् ॥

महाभारते ।

अष्टकासु च यद्दत्तं तदनन्तमुदाहृतम्* ।

आश्वलायनः ।

हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणामष्टमीष्वष्टका इति ।

तथा शतपथश्रुतिः ।

द्वादश पौर्णमास्यो द्वादशाष्टका द्वादशामावास्या इति ।

'द्वादशापि' कृष्णाष्टम्य इत्यर्थः ।

देवीपुराणे ।

आश्विनस्य तु मासस्य नवमी शुक्लपक्षजा ।

जायते कोटिगुणितं दानं तस्यां नराधिप ॥

गरुडपुराणे ।

ज्यैष्ठस्य शुक्लदशमी सम्वत्सरमुखी स्मृता ।

---

* निबन्धे । पुनर्वसुबुधोपेता चैत्रमासिसिताष्टमी ।

प्रातस्तु विधिवत् स्नात्वा वाजपेयफलं लभेत् ॥

तस्यां स्नानं प्रकुर्वीत दानं चैव विशेषतः ॥
एकादश्यां सिते पक्षे पुष्यर्क्षं यत्र सत्तम ।
तिथौ भवति सा प्रोक्ता विष्णुना पापनाशिनी ॥
दानं यद्दीयते किञ्चित् समुद्दिश्य जनार्दनम् ।
होमो वा क्रियते तस्यामक्षयं कथितं फलम् ॥
मासि भाद्रपदे शुक्ला द्वादशी श्रवणान्विता ।
महती द्वादशी ज्ञेया उपवासे महाफला ॥
फलं दत्तहुतानां च तस्यां लक्षगुणं भवेत् ।

## विष्णुधर्मोत्तरे ।

भाग्यर्क्षसंयुता चैत्रे द्वादशी स्यान्महाफला ।

'भाग्यर्क्षं' पूर्वफल्गुनी ।

हस्तयुक्ता तु वैशाखे ज्यैष्ठे तु स्वातिसंयुता ।
ज्येष्ठायां च तथाऽऽषाढे मूलोपेता च वैप्लवे* ॥

'वैप्लवे' श्रावणे मासि ।

तथा भाद्रपदे मासि श्रवणेन तु संयुता ।
आश्विने द्वादशी पुण्या भवत्याजर्क्षसंयुता ॥

'आजर्क्षम्' पूर्वभाद्रपदाः ।

कार्त्तिके रेवतीयुक्ता सौम्ये कृत्तिकया तथा ।

'सौम्यः' मार्गशीर्षः ।

पौषे मृगशिरोपेता माघे चादित्यसंयुता ।

'आदित्यः' पुनर्वसुः ।

---

* शब्दार्णववाचस्पत्यादिकोषेषु वैप्लवः श्रावणमासपर्यायको नोपलभ्यते किन्तु विष्णुः श्रवणा तेन युक्ता पौर्णमासी वैष्णवी सा विद्यते यस्मिन् मासे स वैष्णवः श्रावणः । एतेन वैप्लवे इत्यत्र वैष्णवे इति पाठो युक्तः ।

फाल्गुने पुष्यसहिता द्वादशी पावनी परा ।
नक्षत्रयुक्तास्वेतासु स्नानं दानमुपोषितम् ॥
सकृत्कृतं मनुष्याणामक्षय्यफलदायकम् ।

स्कन्दपुराणे ।

यस्तु चैत्रत्रयोदश्यां स्नानं दानं समाचरेत् ।
फलं शतगुणं तस्य कर्मणो लभते नरः ॥

ज्योतिःशास्त्रे ।

कृष्णपक्षे त्रयोदश्यां मघास्विन्दुः करे रविः ।
यदा तदा गजच्छाया श्राद्धे पुण्यैरवाप्यते ॥
चैत्रे चतुर्दशी शुक्ला श्रावणप्रोष्ठपादयोः ।
माघस्य या कृष्णपक्षे दाने बहुफला हि सा ॥

विष्णुधर्मोत्तरे ।

वैशाखी कार्त्तिकी माघी पौर्णिमा तु महाफला ।
पौर्णमासीषु सर्वासु मासर्क्षसहितासु च ॥
स्नानानामिह दानानां फलं दशगुणं भवेत् ।
यस्यां पूर्णेन्दुना योगं याति जीवो महाबलः ॥
पौर्णमासी तु सा ज्ञेया महापूर्वा द्विजोत्तम ।
स्नानं दानं तथा जाप्यमक्षय्यं तत् तदा स्मृतम् ॥

ब्रह्मपुराणे ।

आग्नेयं तु यदा ऋक्षं कार्त्तिक्यां भवति क्वचित् ।
महती सा तिथिर्ज्ञेया स्नानदानेषु चोत्तमा ॥

'आग्नेयमृक्षं' कृत्तिकाः ।

यदा याम्यं तु भवति ऋक्षं तस्यां तिथौ क्वचित् ।

तिथिः साऽपि महापुण्या ऋषिभिः परिकीर्त्तिता ॥

'याम्यमृक्षं' भरणी ।

प्राजापत्यं यदा ऋक्षं तिथौ तस्यां नराधिप ।

सा महाकार्त्तिकी प्रोक्ता देवानामपि दुर्लभा ॥

'प्रजापत्यमृक्षं' रोहिणी ।

**व्यासः ।**

अमा वै सोमवारेण रविवारेण सप्तमी ।

चतुर्थी भौमवारेण विषुवत्सदृशं फलम् ॥

**शङ्खोऽपि ।**

अमावास्या तु सोमेन सप्तमी भानुना सह ।

चतुर्थी भूमिपुत्रेण सोमपुत्रेण चाष्टमी ॥

चतस्रस्तिथयस्त्वेतास्तुल्याः स्युर्ग्रहणादिभिः ।

सर्वमक्षयमत्रोक्तं स्नानदानजपादिकम् ॥

**महाभारते ।**

अमा सोमे तथा भौमे गुरुवारे यदा भवेत् ।

तत् पर्व पुष्करं नाम सूर्यपर्वशताधिकम् ॥

**शातातपः ।**

अमावस्या सोमवारे सूर्यवारे च सप्तमी ।

अङ्गारकदिने प्राप्ते चतुर्थी वा चतुर्दशी ॥

तत्र यः कुरुते कर्म शुभं वा यदि वाऽशुभम् ।

षष्टिवर्षसहस्राणि कर्त्ता तत्फलमश्नुते ॥

**विष्णुपुराणे ।**

अमावस्या यदा मैत्रविशाखाऋक्षयोगिनी ।

श्राद्धे पितृगणस्तृप्तिं तदाऽऽप्नोत्यष्टवार्षिकीम् ॥

अमावस्या यदा पुष्ये रौद्रर्क्षे वा पुनर्वसौ ।
द्वादशाब्दीं तथा तृप्तिं प्रयान्ति पितरोऽर्चिताः ॥

'रौद्रर्त्तम्' आर्द्रा ।

वासवाजैकपादर्क्षे पितृणां तृप्तिमिच्छता ।
वारुणे वाऽऽप्यदैवत्ये देवानामपि दुर्लभा ॥

'वासवं' धनिष्ठा । 'अजैकपादं' पूर्वाभाद्रपदा । 'वारुणं' शततारका । 'आप्यं' पूर्वाषाढा ।

माघासिते पञ्चदशी* कदाचिदुपैति योगं यदि वारुणेन ।
ऋक्षेण कालः स परः पितृणां नह्यल्पपुण्यैर्नृप लभ्यतेऽसौ ॥

'वारुणं' शततारा ।

## अथ युगादिप्रभृतयः । तत्र स्कन्दपुराणे ।

नवम्यां शुक्लपक्षस्य कार्त्तिके निरगात् कृतम् ।
त्रेता सिततृतीयायां वैशाखे समपद्यत ॥
दर्शे तु माघमासस्य प्रवृत्तं द्वापरं युगम् ।
कलिः कृष्णत्रयोदश्यां नभस्ये मासि निर्गतः ॥
युगादयः स्मृता ह्येते दत्तस्याक्षयकारकाः ।

## ब्रह्मपुराणे ।

युगारम्भास्तु तिथयो युगाद्यास्तेन कीर्त्तिताः ।
फलं दत्तहुतानां च तास्वनन्तं प्रकीर्त्तितम् ॥

## तथा ।

एताश्चतस्रस्तिथयो युगाद्या दत्तं हुतं चाक्षयमाशु विन्द्यात् ।
युगे युगे वर्षशतेन यत् तपो युगादिकाले दिवसेन तद्भवेत् ॥

---

* पञ्चदशीत्यत्र अमावस्या ।

तथा ।

सूर्यस्य सिंहसंक्रान्त्यामन्तः कृतयुगस्य च ।
तथा वृश्चिकसंक्रान्त्यामन्तस्त्रेतायुगस्य च ॥
ज्ञेयस्तु वृषसंक्रान्त्यां द्वापरान्तस्तु संख्यया ।
तथा च कुम्भसंक्रान्त्यामन्तः कलियुगस्य च ॥

पद्मपुराणे ।

युगादिषु युगान्तेषु स्नानदानजपादिकम् ।
यत् किञ्चित् क्रियते तस्य युगान्ताः फलसाक्षिणः ॥

आदित्यपुराणे ।

दिनर्क्षं रेवती यत्र गमनं चैव राशिषु ।
युगान्तदिवसं विद्धि तत्र दानमनन्तकम् ॥
ग्रहोपरागे विषुवे सौम्ये वा मिहिरोपदिः ? ।
सप्तमी शुक्ला कृष्णा वा युगान्तदिवसं विदुः ॥

'मिहिरोपदिः' सूर्यग्रहः ।

मनुः ।

सहस्रगुणितं दानं भवेद्दत्तं युगादिषु ।
कर्म श्राद्धादिकं चैतत् तथा मन्वन्तरादिषु ॥

मत्स्यपुराणे ।

अश्वयुक्शुक्लनवमी द्वादशी कार्त्तिकस्य तु ।
चैत्रस्य तु तृतीया या तथा भाद्रपदस्य तु ॥
फाल्गुनस्य त्वमावास्या पौषस्यैकादशी तथा ।
श्रावणस्याष्टमी कृष्णा तथाऽऽषाढस्य पौर्णिमा ॥
आषाढस्य तु दशमी माघमासस्य सप्तमी ।

कार्त्तिकी फाल्गुनी चैत्री ज्यैष्ठी पञ्चदशी तथा ॥
मन्वन्तरादयश्चैता दत्तस्याक्षयकारकाः ।
स्नानं दानं जपो होमः स्वाध्यायः पितृतर्पणम् ॥
सर्वमेवाक्षयं विन्द्यात् कृतं मन्वन्तरादिषु ।

अत्रामावस्याष्टमीव्यतिरेकेण सर्वाः शुक्ला एव । पुराणान्तरेण तु श्रावणस्यामावस्या भाद्रपदस्य कृष्णाष्टमी मन्वन्तरादिरिति प्रतिपादितम् ।

तद्यथा ।

आश्विने शुक्लनवमी द्वादशी कार्त्तिके तथा ।
तृतीया चैत्रमासस्य तथा भाद्रपदस्य च ॥
श्रावणस्याप्यमावस्या पौषस्यैकादशी तथा ।
आषाढस्यापि दशमी माघमासस्य सप्तमी ॥
नभस्यस्याष्टमी कृष्णा तथाषाढी च पूर्णिमा ।
कार्त्तिकी फाल्गुनी चैत्री* ज्यैष्ठी पञ्चदशी तथा ॥
मन्वन्तरादयश्चैता दत्तस्याक्षयकारकाः ।

अथ व्यतीपातादिकालाः । याज्ञवल्क्यः ।

शतमिन्दुक्षये † दानं सहस्रं तु दिनक्षये ।
विषुवे शतसाहस्रं व्यतीपाते त्वनन्तकम् ॥

वाराहपुराणे ।

दर्शे शतगुणं दानं तच्छतघ्नं दिनक्षये ।
शतघ्नं तस्य संक्रान्तौ शतघ्नं विषुवे ततः ॥
युगादौ तच्छतगुणमयने तच्छताहतम् ।

---

* ज्यैष्ठी पञ्चदशी सितेति क्वचित् पाठः ।

† पुण्यमिति पाठान्तरम् ।

सोमग्रहे तच्छतघ्नं तच्छतघ्नं रविग्रहे ॥

असंख्येयं व्यतीपाते दानं वेदविदो विदुः ।

'शतघ्नं' शतगुणमित्यर्थः ।

तथा ।

उत्पत्तौ लक्षगुणं कोटिगुणं भ्रमणनाडिकायां तु ।

अर्बुदगुणितं पतने जपदानाद्यक्षयं पतिते ॥

उत्पत्त्यादिमानमुक्तं ज्योतिःशास्त्रे ।

विंशतिर्द्वियुतोत्पत्तौ भ्रमणे चैकविंशतिः ।

पतने दशनाड्यस्तु पतिते सप्त नाडिकाः ॥

व्यतीपातोऽत्र विष्कुम्भादियोगेषु सप्तदशयोगः । वृद्धमनुना तु प्रकारान्तरेण व्यतीपातो दर्शितः ।

श्रवणाश्विधनिष्ठार्द्रानागदैवतमस्तके ।

यद्यमा रविवारेण व्यतीपातः स उच्यते ॥

'नागदैवतम्' आश्लेषा । 'मस्तकं' प्रथमचरणः । मस्तक इति श्रवणादिभिः प्रत्येकं सम्बध्यते ।

शास्त्रान्तरेऽन्योऽपि व्यतीपात उक्तः ।

पञ्चाननस्थौ गुरुभूमिपुत्रौ मेषे रविः स्याद्यदि शुक्लपक्षे ।

पाशाभिधाना करभेण युक्ता तिथिर्व्यतीपात इतीह योगः ॥

अस्मिन् हि गोभूमिहिरण्यवस्त्रदानेन सर्वं परिहाय पापम् ।

शूरत्वमिन्द्रत्वमनामयत्वं मन्वाधिपत्यं लभते मनुष्यः ॥

'पञ्चाननः' सिंहः । 'गुरुभूमिपुत्रौ' बृहस्पत्यङ्गारकौ । 'पाशाभिधाना' द्वादशी । 'करभं' हस्तनक्षत्रमिति ।

ज्योतिःशास्त्रे तु रविचन्द्रयोः क्रान्तिसाम्ये सूक्ष्मौ 'वैधृतव्यतीपातौ' दर्शितौ । तदाह गालवः ।

चन्द्रार्कयोर्नयनवीक्षणजातमूर्त्तिः
कालानलद्युतिनिभः पुरुषोऽतिरौद्रः ।
अक्रोधतो भुवि पतँश्च निरीक्षमाणः
कं घातयेऽहमिति च व्यतिपातयोगः ॥

आह भृगुः ।

क्रान्तिसाम्यसमयः समीरितः सूर्यपर्वसदृशो मुनीश्वरैः ।
तत्र दत्तहुतजप्तपूजनं कोटिकोटिगुणमाह भार्गवः ॥

अयमर्थः । सूर्याचन्द्रमसोः क्रान्तिसाम्ये पुण्यकालद्वयं सम्भवति । 'एकः' व्यतीपाताख्यः । 'अपरः' वैधृताख्यः । तत्र क्रान्तिसाम्यलक्षणस्य व्यतीपातस्य गण्डोत्तरार्धादारभ्य क्रमशः सार्धेषु पञ्चसु योगेषु सम्भवोऽस्ति । वैधृतसंज्ञस्य तु शुक्रयोगादारभ्य सार्धेषु ---योगेषु सम्भवोऽस्ति । वैधृते व्यतीपाते दत्तमक्षयकृद्भवेत् ।

भरद्वाजः ।

व्यतीपाते वैधृते च दत्तस्यान्तो न विद्यते ।
व्यतीपाते विशेषेण स हि सूक्ष्मः प्रकीर्त्तितः ॥

स्थूलप्रकारेण प्रसिद्धस्तु सप्तविंशतितमो योगो वैधृत इति ।

अथोपरागकालः । पद्मपुराणे ।

चन्द्रस्य यदि वा भानो राहुणा सह सङ्गमः ।
उपराग इति ख्यातस्तत्रानन्तफलं स्मृतम् ॥
इन्दोर्लक्षगुणं पुण्यं रवेर्दशगुणं भवेत् ।
गङ्गातीरे तु सम्प्राप्ते इन्दोः कोटी रवेर्दश ॥

'रवेर्दशगुणमिति' लक्षगुणाद्दशगुणमित्यर्थः । एवमुत्तरत्रापि ।

तथा ।

रविवारे रवेर्ग्रासः सोमे सोमग्रहस्तथा ।
चूडामणिरिति ख्यातस्तत्रानन्तं फलं स्मृतम् ॥

भरद्वाजः ।

चन्द्रसूर्योपरागे च यत् कर्त्तव्यं तदुच्यते ।
सर्वं हेममयं दानं सर्वे ब्रह्मसमा द्विजाः ॥
सर्वं गङ्गासमं तोयं राहुग्रस्ते दिवाकरे ।

ऋष्यशृङ्गः ।

राहुग्रस्ते यदा सूर्ये यस्तु श्राद्धं समाचरेत् ।
तेनैव सकला पृथ्वी दत्ता विप्रस्य वै करे ॥

शातातपः ।

अयनेषु सदा देयं विशिष्टं स्वगृहेषु यत् ।
षडशीतिमुखे चैव विमोक्षे चन्द्रसूर्ययोः ॥

'विमोक्षे' वर्त्तमाने न तु विमुक्तयोरित्यर्थः । उपरागे तु तत्कालमिति स्मरणात् ।

तथा च वशिष्ठः ।

नाड्यः षोडश पूर्वेण संक्रान्तेस्तु परेण च ।
राहोर्दर्शनमात्रेण पुण्यकालः प्रकीर्त्तितः ॥

जावालिरपि ।

संक्रान्तौ पुण्यकालस्तु षोडशोभयतः कलाः ।
चन्द्रसूर्योपरागे तु यावद्दर्शनगोचरः ॥

अथ संक्रान्तिकालाः । आह शातातपः ।

संक्रान्तौ यानि दत्तानि हव्यकव्यानि दातृभिः ।
तानि नित्यं ददात्यर्कः पुनर्जन्मनि जन्मनि ॥
रविसंक्रमणे पुण्ये न स्नायाद्यो हि मानवः ।
सप्तजन्मान्तरं रोगी दुःखभागी सदा भवेत् ॥

वृद्धवशिष्ठः ।

अयने द्वे च विषुवे चतस्रः षडशीतयः ।
चतस्रो विष्णुपद्यश्च संक्रान्त्यो द्वादश स्मृताः ॥
झषकर्कटसंक्रान्ती द्वे तूदग्दक्षिणायने ।
विषुवे च तुलामेषे गोलमध्ये ततोऽपराः ॥

'झषः' मकरः । 'गोलः' राशिचक्रम् ।

कन्यायां मिथुने मीने धनुष्यपि रवेर्गतिः ।
षडशीतिमुखा प्रोक्ता षडशीतिगुणा फलैः ॥
वृषवृश्चिककुम्भेषु सिंहे चैव यदा रविः ।
एतद्विष्णुपदं नाम विषुवादधिकं फले ॥

गालवः ।

मध्ये विषुवति दानं विष्णुपदे दक्षिणायने चादौ ।
षडशीतिमुखेऽतीते तथोदगयने तु भूरि फलम् ॥

एतच्च फलाधिक्यप्रतिपादनार्थमुक्तम् ।

पर्वकालस्तु संक्रान्तेः प्रागूर्ध्वं च भवेदिति ।

तदाह देवलः ।

संक्रान्तिसमयः सूक्ष्मो दुर्ज्ञेयः पिशितेक्षणैः ।
तद्योगश्चाप्यधश्चोर्ध्वं त्रिंशन्नाड्यः पवित्रिताः ॥
आसन्नसंक्रमं पुण्यं दिनार्धं स्नानदानयोः ।
रात्रौ संक्रमणे भानोर्विषुवत्ययने दिने ॥
या याः सन्निहिता नाड्यस्तास्ताः पुण्यतमाः स्मृताः ।

अयमर्थः । सर्वास्वपि संक्रान्तिषु अतीतत्वमनागतत्वं चानादृत्यात्र दिनार्धेऽतीतानागता वा संक्रान्तिः सन्निहिता भवति तत्र स्नानदानादिकं कार्यमिति ।

वशिष्ठस्तु विशेषमाह ।

त्रिंशत् कर्कटके नाड्यो मकरे विंशतिः स्मृताः ।
वर्त्तमाने तुलामेषे नाड्यस्तूभयतो दश ॥

अत्र वर्त्तमान उभयत इति च सर्वैरेव कर्कटकादिभिः सम्बध्यते ।

षडशीत्यां व्यतीतायामष्टिरुक्तास्तु नाडिकाः ।
पुण्याख्या विष्णुपद्यां च प्राक् पश्चादपि षोडश ॥

'अष्टिः' षोडश । 'षडशीत्यामतीतायामिति' पुण्यभूयस्त्वाभिप्रायेणैतत् षडशीतिमुखेऽपि पूर्वमपि पुण्यकालस्य प्रतिपादितत्वात् ।

तदुक्तं स्मृत्यन्तरे ।

विष्णुपद्यां धनुर्मीननृयुक्कन्यासु वै यदा ।
पूर्वोत्तरगतौ रात्रौ भानोः संक्रमणं भवेत् ॥
पूर्वाह्णे पञ्च नाड्यस्तु पुण्याः प्रोक्ता मनीषिभिः ।
अपराह्णे तु पञ्चैव श्रौते स्मार्त्ते च कर्मणि ॥

अनेन रात्रौ षडशीत्यामतीतायामुत्तरदिने पूर्वाह्णे पञ्चनाड्यः पुण्या भवन्ति भाविन्यां च पूर्वदिवसेऽपराह्णे पञ्चनाड्यः पुण्या भवन्तीत्युच्यते। 'नृयुक्' मिथुनराशिः ।

अह्नि संक्रमणे पुण्यमहः कृत्स्नं प्रकीर्त्तितम् ।
रात्रौ संक्रमणे पुण्यं दिनार्धं स्नानदानयोः ॥
अर्धरात्रादधस्तस्मिन् मध्याह्नस्योपरि क्रिया ।
ऊर्ध्वं संक्रमणे चोर्ध्वमुदयात् प्रहरद्वयम् ॥
पूर्णे चेदर्धरात्रे तु यदा संक्रमते रविः ।
प्राहुर्दिनद्वयं पुण्यं मुक्त्वा मकरकर्कटौ ॥

अयमर्थः । पूर्वरात्रसंक्रमणे पूर्वस्याह्न उत्तरार्धे दानादिक्रिया । अपररात्रसंक्रमणे तूत्तरदिवसस्य पूर्वाह्णे दानादिक्रिया। अयनरात्रसंक्रमे तूत्तरदिवसस्य पूर्वाह्णे दानादि-क्रिया। मध्यरात्रसंक्रमे तु दिनद्वयं पुण्यम् । रात्रौ स्नानदानादिप्रतिषेधात् । यस्तु

संश्रूयते । संक्रान्त्यादिषु रात्रावपि स्नानदानादिकं कुर्यादिति तद्विशेषोत्तरायणविषयम् । अत एवोक्तं मुक्त्वा मकरकर्कटाविति । ततश्च मकरकर्कटयो रात्रावपि स्नानदानानुग्रहे या याः सन्निहिता नाड्य इत्यवधेयम् । रात्रौ स्नानदानादिप्रतिषेधस्तु संक्रान्त्यन्तरे व्यतिष्ठत एवेति ।

विषुवादिषु सूक्ष्मपुण्यकालमाह । गालवः ।

विषुवे षण्मुहूर्त्तं स्यात् षडशीतिमुखे द्वयम् ।
तथा विष्णुपदे त्रीणि पुण्यानि मुनयो विदुः ॥

फलमाह भरद्वाजः ।

षडशीत्यां तु यद्दानं यद्दानं विषुवे द्वये ।
दृश्यते सागरस्यान्तस्तस्यान्तो नैव विद्यते ॥

विष्णुपदादिसूक्ष्मतमं पुण्यकालमाह । गालवः ।

स्थिरभे विष्णुपदं षडशीतिमुखं द्वितनुभे तुलामेषे ।
विषुवं तुर्ये दक्षायनं मृगे सौम्यकं सूर्ये ॥

पूर्वश्लोकैर्व्याख्यातमेतत् ।

अयनांशकतुल्येन कालेनैतत् स्फुटं भवेत् ।
सर्वविष्णुपदाद्युक्तभेदादि ह्ययनेऽन्यथा ॥
मृगकर्कादिगे सूर्ये याम्योदगयने सति ।
तदा संक्रान्तिदाने स्युरुक्ता विष्णुपदादयः ॥

अयमर्थः । राशिं प्रति त्रिंशदंशका भवन्ति सूर्यश्च प्रतिदिनमेकैकमंशं भुङ्क्ते । तत्र यावद्भिरंशैरयनच्युतिर्भवति तावता सूर्यस्य भोगकालेन भाविनां विष्णुपदादिकानां च्युतिर्भवतीति । ततश्च यदा द्वादशभिरयनच्युतिर्भवति तदा भाविन्याः संक्रान्तेर्द्वादशभिर्दिनैरर्वाक् पुण्यकालो भवति तस्मिंश्च तत्क्रान्तिनिमित्तं दानादि कर्त्तव्यमिति । एवं न्यूनातिरिक्तेष्वपि बोद्धव्यम् । न केवलमादित्यस्यैव संक्रमसमये पुण्यकालः किन्तु सर्वेषामपि ग्रहाणां नक्षत्रराशिसंक्रमे पुण्यकालो भवतीति ।

तदुक्तं ज्योतिःशास्त्रे ।

नक्षत्रराश्योः रविसंक्रमे स्युरर्वाक् परत्रापि रसेन्दुनाड्यः ।
पुण्यास्तथेन्दोस्त्रिधरापलैर्युगा एकैव नाडी मुनिभिः शुभोक्ता ॥
नाड्यश्चतस्रः सपलाः कुजस्य बुधस्य तिस्रः पलविश्वयुक्ताः ।
अब्ध्यर्धनाड्यः पलसप्तयुक्ता गुरोस्तु शुक्रे सपलाश्चतस्रः ॥
द्विनागनाड्यः पलसप्तयुक्ताः शनैश्चरस्याभिहिताः सुपुण्याः ।
आद्ये तु मध्ये जपदानहोमं कुर्वन्नवाप्नोति सुरेन्द्रधाम ॥

अस्यार्थः । आदित्यस्य राशिनक्षत्रगमनेऽर्वाक् परतश्च षोडश घटिकाः पुण्यकालः । तथा चन्द्रस्यापि राशिनक्षत्रगमने घटिकैका पलानि त्रयोदश अर्वाक् परतश्च पुण्यकालः । एवं मङ्गलस्य घटिकाश्चतस्रः पलमेकं च पुण्यकालः । तथा बुधस्य तिस्रो घटिकाश्चतुर्दश पलानि पुण्यकालः । बृहस्पतेरपि सार्धाश्चतस्रो घटिकाः सप्तपलानि पुण्यकालः । शुक्रस्य चतस्रो घटिकाः पलमेकं च पुण्यकालः । शनैश्चरस्याप्यष्टाशीतिर्घटिकाः सप्त पलानि पुण्यकाल इति ।

अथ प्रकीर्णकालाः । आह विष्णुः ।

अमावस्या व्यतीपातो ग्रहणं चन्द्रसूर्ययोः ।
मन्वादयो युगादिश्च संक्रान्तिर्वैधृतिस्तथा ॥
दिनक्षयं दिनच्छिद्रमवमं च तथा परम् ।
द्वेऽयने विषुवद्युग्मं षडशीतिमुखं तथा ॥
चतस्रो विष्णुपद्यश्च पुत्रजन्मादि चापरम् ।
आदित्यादिग्रहाणां च नक्षत्रैः सह सङ्गमे ॥
विज्ञेयः पुण्यकालोऽयं ज्योतिर्विद्भिर्विचार्य च ।
तत्र दानादिकं कुर्यादात्मनः पुण्यवृद्धये ॥

'अमावास्यादीनि' प्रसिद्धानि ।

दिनक्षयमुक्तं पद्मपुराणे ।

द्वौ तिथ्यन्तावेकवारे यस्मिन् स स्याद्दिनक्षयः ।

वशिष्ठोऽप्याह ।

एकस्मिन् सावने त्वह्नि तिथीनां त्रितयं यदा ।
तदा दिनक्षयः प्रोक्तस्तत्र साहस्रिकं फलम् ॥

दिनच्छिद्रलक्षणमाह भृगुः ।

तिथ्यर्धतिथियोगर्क्षच्छेदादी शशिपर्वणः ।
सदृशौ दिवसच्छिद्रसमाख्यौ प्राह भार्गवः ॥

अयमर्थः । तिथ्यर्धं करणम् । करणतिथियोगनक्षत्राणामन्त आदौ च पर्वकालः सोमग्रहणातुल्यः स च दिनच्छिद्रसंज्ञ इति ।

कालमानमप्युक्तं तेनैव ।

छेदादिकालः कथितस्तिथिकृत्योर्घटीद्वयम् ।
नागवह्निपलोपेतं तद्भे तत्त्वपलैर्युतम् ॥
पलैः षोडशभिर्युक्तं नाडिकाद्वितयं युतेः ।
छेदादिसमयः प्रोक्तो दानेऽनन्तफलप्रदः ॥

'कृतिः' करणम् । 'नागाः' अष्टौ । 'वह्नयः' त्रयः । 'भं' नक्षत्रम् । 'तत्त्वं' पञ्चविंशतिः । 'युतिः' योगः । तदाऽयमर्थः सिद्धो भवति । तिथिकरणयोराद्यन्ते घटिकाद्वयमष्टत्रिंशत् पलानि पुण्यकालः । नक्षत्रस्य तु पञ्चविंशतिपलैर्युक्तं घटिकाद्वयम् । योगस्यापि षोडशभिः पलैर्युक्तं घटिकाद्वयमिति ।

अवमलक्षणमाह विष्णुः ।

तिथित्रयं स्पृशत्येको वारः स्यादवमं हि तत् ।
त्रिवारस्पृक् तिथिर्यत्र दिनस्पृक् च तदुच्यते ॥

अत्र दिनक्षयावमयोरियान् भेदः । यत्र तिथिद्वयावसाने वारावसानं स दिनक्षयः । यत्र तिथिद्वयावसानेऽपि वारानुवृत्तिः सोऽवम इति ।

ब्रह्मप्रोक्ते ।

एकादश्यप्यमावस्या पूर्णिमा पुत्रजन्म च ।
वैधृतिश्च व्यतीपातो भद्रा चावमवासरः ॥

युगमन्वादयस्ते स्युरिन्दुपर्वसमानकाः ।
क्रान्तिसाम्यं दिनच्छिद्रं ग्रहाणां भगमस्तथा ॥

'भगमः' राशिनक्षत्रेषु गमनम् ।

देवीपुराणे ।

व्यतीपातो विष्णुपदं षडशीतिमुखं तथा ।
क्रान्तिसाम्यममावास्या ग्रहणं वैधृतिश्च यः ॥
संक्रान्तिश्च दिनच्छिद्रं तिथिवृद्धिर्दिनक्षयः ।
इत्यादिपुण्यकालस्तु होमदानादिकर्मणः ॥

स्कन्दपुराणे ।

ग्रहणं चन्द्रसूर्याभ्यामुत्तरायणमुत्तमम् ।
विषुवं सव्यतीपातं षडशीतिमुखं तथा ॥
दिनच्छिद्राणि संक्रान्तिर्ज्ञेयं विष्णुपदं पुनः ।
इति कालः समाख्यातः पुंसां पुण्यविवर्धनः ॥
अस्मिन् दत्तानि दानानि स्नानहोमतपांसि च ।
अनन्तफलदानि स्युः स्वर्गमोक्षप्रदान्यपि ॥

आह च्यवनः ।

अमावास्यासंक्रान्तिव्यतीपातविषुवायनषडशीतिमुखविष्णुपदादि-वैधृतिग्रहणान्तं स एव पुण्यकालः ।

अयने षडशीतौ च चन्द्रसूर्यग्रहे तथा ।
युगादौ वैधृतौ चैव दत्तं भवति चाक्षयम् ॥

आह शातातपः ।

अयनेषु तु यद्दत्तं षडशीतिमुखेषु च ।
चन्द्रसूर्योपरागे च दत्तं भवति चाक्षयम् ॥

नारदः ।

विशाखासु यदा भानुः कृत्तिकासु च चन्द्रमाः ।
स योगः पद्मको नाम पुष्करेष्वति दुर्लभः ॥

अथ निषिद्धकालाः । तत्र शङ्खलिखितौ ।

आहारं मैथुनं निद्रां सन्ध्याकाले तु वर्जयेत् ।
कर्म चाध्ययनं चैव तथा दानप्रतिग्रहौ ॥

स्कन्दपुराणे ।

रात्रौ दानं न कर्त्तव्यं कदाचिदपि केनचित् ।
हरन्ति राक्षसा यस्मात् तस्माद्दातुर्भयावहम् ॥
विशेषतो निशीथे तु न शुभं कर्म शर्मणे ।
अतो विवर्जयेत् प्राज्ञो दानादिषु महानिशाम् ॥

तथा ।

स्नानं चैव महादानं स्वाध्यायं तु न तर्पणम् ।
प्रथमेऽब्दे न कुर्वीत महागुरु*निपातने ॥

आह ज्योतिःपराशरः ।

अग्न्याधेयं प्रतिष्ठां च यज्ञदानाद्यभिग्रहान् ।
माङ्गल्यमभिषेकं च मलमासे विवर्जयेत् ॥
वापीकूपतडागादि प्रतिष्ठोदङ्मुखे रवौ ।
दक्षिणाशामुखे कुर्वन् न तत्फलमवाप्नुयात् ॥
बाले वा यदि वा वृद्धे शुक्रे वास्तमुपागते ।
मलमास इवैतानि वर्जये†द्यत्नतः सदा ॥

'मलमासः' अधिकमासः ।

---

* मातापितरौ ।

† देवदर्शनमिति क्वचित् पाठः ।

तल्लक्षणमाह प्रचेताः ।

एकराशिस्थिते सूर्ये यदा दर्शद्वयं भवेत् ।
हव्यकव्यक्रियाहन्ता तदा ज्ञेयोऽधिमासकः ॥

पैठीनसिः ।

वत्सरान्तर्गतः पापो यज्ञानां फलनाशकृत् ।
नैर्ऋत्ययातुधानानामसंक्रान्तोऽधिमासकः ॥
मलिम्लुचमसंक्रान्तं सूर्यसंक्रान्तिवर्जितम् ।
अधिमासं विजानीयात् सर्वकर्मसु गर्हितम् ॥

तथा ।

श्रौतस्मार्त्तक्रियाः सर्वा द्वादशे मासि कीर्त्तिताः ।
त्रयोदशे तु ताः सर्वा निष्फला इति संज्ञिताः ॥
तस्मात् त्रयोदशे मासि न कुर्यात् ताः कथञ्चन ।
कुर्वन्ननर्थमेवाशु कुर्याच्चात्मविनाशनम् ॥

हारीतः ।

इन्द्राग्नी यत्र हूयेते मासादिः स प्रकीर्त्तितः ।
अग्नीसोमौ स्थितौ मध्ये समाप्तौ पितृसोमकौ ॥
तमतिक्रम्य तु यदा रविर्गच्छेत् कदाचन ।
आद्यो मलिम्लुचो ज्ञेयो द्वितीयः प्राकृतः स्मृतः ॥
तस्मिँस्तु प्राकृते मासि कुर्याच्छ्राद्धं यथाविधि ।
तथैवाभ्युदयं कार्यं नित्यमेकं हि सर्वदा ॥

व्यासः ।

भानुना लङ्घितो मासो ह्यनर्हः सर्वकर्मसु ।
षष्टिभिर्दिवसैर्मासः कथितो बादरायणैः ॥

पूर्वार्धं तु परित्यज्य उत्तरार्धं प्रशस्यते ।
उपाकर्म च हव्यं च कव्यं पर्वोत्सवस्तथा ॥
उत्तरे नियतिः कुर्यात् पूर्वास्तन्निष्फलं भवेत् ।

**पाराशरः ।**

उपाकर्म तथोत्सर्गः*प्रसावहोत्सवाष्टकाः ।
मासवृद्धौ पराः कार्या वर्जयित्वा तु पैतृकम् ॥

**तथा ज्योतिःशास्त्रे ।**

घटकन्यागते सूर्ये वृश्चिके वाऽथ धन्विनि ।
मकरे वाऽथ वा कुम्भे नाधिमासो विधीयते ॥

**माण्डव्यः ।**

गर्भे वार्द्धुषिके प्रेते भूते नित्ये तु मासिके ।
प्रथमे चाब्दिके चैव नाधिमासो विधीयते ॥

## अथ निषिद्धस्यापि धर्मविशेषेण पुण्यकालत्वमभिधीयते ।

**देवलः ।**

राहुदर्शनसंक्रान्तिविवाहात्ययवृद्धिषु ।
स्नानदानादिकं कुर्युर्निशि काम्यव्रतेषु च ॥

**वृद्धवसिष्ठः ।**

ग्रहणोद्वाहसंक्रान्ति†यात्रादिप्रसवेषु च ।
दानं नैमित्तिकं ज्ञेयं रात्रावपि तदिष्यते ॥

**विष्णुधर्मोत्तरे ।**

पूजनं त्वतिथीनां च पान्थानामपि पूजनम् ।

---

* प्रसवाहोऽष्टकादय इति पाठान्तरम् ।

† यात्रार्त्तीति क्वचित् पाठः ।

तच्च रात्रौ तथा ज्ञेयं गवामुक्तं च पूजनम् ॥

महाभारते ।

रात्रौ दानं प्रशंसन्ति विना त्वभयदक्षिणाम् ।
विद्यां कन्यां द्विजश्रेष्ठा दीपमन्नं प्रतिश्रयम् ॥

मार्कण्डेयपुराणे ।

महानिशा तु विज्ञेया मध्यस्थं प्रहरद्वयम् ।
स्नानं तत्र न कुर्वीत काम्यनैमित्तिकादृते ॥

विश्वामित्रः ।

महानिशा द्वे घटिके रात्रौ मध्यमयामयोः ।
नैमित्तिकं तथा कुर्यान्नित्यं तु न मनागपि ॥

अथ निमित्तानुरोधेन सदा पुण्यकालाः । विष्णुधर्मोत्तरे ।

कालः सर्वोऽपि निर्दिष्टः पात्रं सर्वमुदाहृतम् ।
अभयस्य प्रदाने तु नात्र कार्या विचारणा ॥
तदैव दानकालस्तु यदा भयमुपस्थितम् ।

तथा ।

न कालनियमो दृष्टो दीयमाने प्रतिश्रये ।
तदैव दानमस्योक्तं यदा पान्थसमागमः ॥
न हि कालं प्रतीक्षेत जलं दातुं तृषान्विते ।
अन्नोदकं सदा देयमित्याह भगवान् मनुः ॥

स्कन्दपुराणे ।

अर्धप्रसूतां गां दद्यात् कालादि न विचारयन् ।
कालः स एव ग्रहणे यदा सा द्विमुखी तु गौः ॥

व्यासः ।

आसन्नमृत्युना देया गौः सवत्सा तु पूर्ववत् ।

तदभावे तु गौरेव नरकोद्धरणाय वै ॥
तदा यदि न शक्नोति दातुं वैतरणीं तु गाम् ।
शक्तोऽन्योऽरुक् तदा दत्त्वा श्रेयो दद्यान्मृतस्य च ॥

वाराहपुराणे ।

व्यतीपातोऽथ संक्रान्तिस्तथैव ग्रहणं रवेः ।
पुण्यकालास्तदा सर्वे यदा मृत्युरुपस्थितः ॥
तदा गोभूहिरण्यादि दत्तमक्षयतामियात् ।

तथा ।

यावत् कालं सुते जाते न नाडी छिद्यते नृप ।
चन्द्रसूर्योपरागेण तमाहुः समयं समम् ॥

विष्णुधर्मोत्तरे ।

अच्छिन्ननाड्यां यद्दत्तं पुत्रे जाते द्विजोत्तमाः ।
संस्कारेषु च पुत्रस्य तदक्षय्यं प्रकीर्त्तितम् ॥

मत्स्यपुराणे ।

यदा वा जायते वित्तं चित्तं श्रद्धासमन्वितम् ।
तदैव दानकालः स्याद्यतोऽनित्यं हि जीवितम् ॥

इति कालनिरूपणम् ।

अथ देशाख्यं दानाङ्गमुपवर्ण्यते । तत्र देवीपुराणे ।

सर्वे शिवाश्रमाः पुण्याः सर्वा नद्यः शुभप्रदाः ।
दानस्नानोपवासादिफलदाः सततं नृणाम् ॥

आह विष्णुः ।

चातुर्वर्ण्यव्यवस्थानं यस्मिन् देशे न विद्यते ।
*स म्लेच्छदेशो विज्ञेय आर्यदेशस्ततः परः ॥

---

* तं म्लेच्छदेशं जानीयादिति क्वचित् पाठः ।

भविष्यपुराणे ।

न हीयते यत्र धर्मश्चतुष्पात् सकलो द्विज ।
स देशः परमो नित्यं सर्वपुण्यतमो मम ॥
विद्वद्भिः सेवितो यश्च यस्मिन् देशे प्रवर्त्तते ।
शास्त्रोकश्चापि विप्रेन्द्र स देशः परमो मतः ॥

याज्ञवल्क्यः ।

यस्मिन् देशे मृगः कृष्णस्तस्मिन् धर्मान् निबोधत ॥

मार्कण्डेयपुराणे ।

सह्यस्य चोत्तरो यस्तु यत्र गोदावरी नदी ।
पृथिव्यामपि कृत्स्नायां स प्रदेशोऽतिपावनः ॥

व्यासः ।

गङ्गाद्वारे प्रयागे च अविमुक्ते च पुष्करे ।
नगरे चाट्टहासे च गङ्गासागरसङ्गमे ॥
कुरुक्षेत्रे गयायां च तीर्थे वामरकण्टके ।
एवमादिषु तीर्थेषु दत्तमक्षयतामियात् ॥
सर्वतीर्थमयी गङ्गा तत्र दत्तं महाफलम् ।

स्कन्दपुराणे ।

वाराणसी कुरुक्षेत्रं प्रयागः पुष्कराणि च ।
गङ्गासमुद्रतीरं च नैमिषामरकण्टकम् ॥
श्रीपर्वतमहाकालं गोकर्णं वेदपर्वतम् ।
इत्याद्याः कीर्त्तिता देशाः सुरसिद्धनिषेविताः ॥
सर्वे शिलोच्चयाः पुण्याः सर्वा नद्यः ससागराः ।
गोसिद्धमुनिवासाश्च देशाः पुण्याः प्रकीर्त्तिताः ॥

एषु तीर्थेषु यद्दत्तं फलस्यानन्त्यकृद्भवेत् ।

पद्मपुराणे ।

गङ्गा चोदङ्मुखी यत्र यत्र प्राची सरस्वती ।
तत्र क्रतुशतं पुण्यं स्नानदानेषु सुव्रत ॥
लिङ्गं वा प्रतिमा वापि दृश्यते यत्र कुत्रचित् ।
तत् सर्वं पुण्यतां याति दानेषु च महाफलम् ॥

ब्रह्मप्रोक्ते ।

नदीतीरे गवां गोष्ठे ब्राह्मणानां च वेश्मनि ।
दत्तं शतगुणं प्राहुर्लक्षमादित्यसन्निधौ ॥
शिवस्य विष्णोर्वह्नेश्च सन्निधौ दत्तमक्षयम् ।

तथा ।

अग्निहोत्रे गवां गोष्ठे वेदघोषपवित्रिते ।
शिवायतनसंस्थाने यदल्पमपि दीयते ॥
तदनन्तफलं ज्ञेयं शिवक्षेत्रानुभावतः ।

मत्स्यपुराणे ।

शालग्रामसमुद्भूतः शैलश्चक्राङ्कमण्डितः ।
यत्र तिष्ठति वसुधे तत्क्षेत्रं योजनत्रयम् ॥
द्वारवत्याः शिला देवि मुद्रिता मम मुद्रया ।
यत्रापि नीयते तत् स्यात् तीर्थं द्वादशयोजनम् ॥

तथा ।

प्रयागादिषु तीर्थेषु पुण्येष्वायतनेषु च ।
दत्त्वा चाक्षयमाप्नोति नदीपुण्यवनेषु च ॥

'आयतने' शङ्करादिचैत्ये ।

तदुक्तं भविष्यपुराणे ।

क्रोशमात्रं भवेत् क्षेत्रं शिवस्य परमात्मनः ।
प्राणिनां तत्र पञ्चत्वं शिवसायुज्यकारणम् ॥
फलं दत्तहुतानां च अनन्तं परिकीर्त्तितम् ।
मनुजैः स्थापिते लिङ्गे क्षेत्रे मानमिदं स्मृतम् ॥
स्वयम्भुवि सहस्रं स्यादार्षे चैव तदर्धकम् ।

अथ श्रद्धाख्यं दानाङ्गमुच्यते । स्कन्दपुराणे ।

दानं दद्यात् प्रयत्नेन श्रद्धापूतमतन्द्रितः ।
श्रद्धाकृतं स्वल्पमपि दानमानन्त्यमश्नुते ॥
अश्रद्धयापि यद्दत्तं सर्वस्वमपि सत्तम ।
न तत् फलाय भवति तस्माच्छ्रद्धां समाश्रयेत् ॥

देवलः ।

प्रदाय शाकमुष्टिं वा श्रद्धाभक्तिसमुद्यतम् ।
महते पात्रभूताय सर्वाभ्युदयमाप्नुयात् ॥

महाभारते ।

श्रद्धया साध्यते धर्मो महद्भिर्नार्थराशिभिः ।
निष्किञ्चनास्तु मुनयः श्रद्धावन्तो दिवं गताः ॥
धर्मार्थकाममोक्षाणां श्रद्धा परमकारणम् ।
पुंसामश्रद्दधानानां न धर्मो नापि तत्फलम् ॥

वह्निपुराणे ।

श्रद्धापूर्वाः सर्वधर्माः श्रद्धामध्यान्तसंस्थिताः ।
श्रद्धानिष्ठाः प्रतिष्ठाश्च धर्माः श्रद्धैव कीर्त्तिताः ॥
श्रुतिमात्ररसाः सूक्ष्माः प्रधानपुरुषेश्वराः ।

श्रद्धामात्रेण गृह्यन्ते न वाक्येन न चक्षुषा ॥
कायक्लेशैर्न बहुभिर्न चैवार्थस्य राशिभिः ।
धर्मः सम्प्राप्यते सूक्ष्मः श्रद्धाहीनैः सुरैरपि ॥
श्रद्धा धर्मः परः सूक्ष्मः श्रद्धा ज्ञानं हुतं तपः ।
श्रद्धा स्वर्गश्च मोक्षश्च श्रद्धा सर्वमिदं जगत् ॥
सर्वस्वं जीवितं चापि दद्यादश्रद्धया यदि ।
नाप्नुयात् सकलं किञ्चित् श्रद्दधानस्ततो भवेत् ॥

**वेदव्यासः ।**

श्रद्धा वै सात्विकी देवी सूर्यस्य दुहिता नृप ।
सवित्री प्रसवित्री च जीवविश्वासिनी तथा ॥
वाग्वृद्धं त्रायते श्रद्धा मनोवृद्धं च भारत ।

**महाभारते ।**

क्रियावान् श्रद्दधानश्च दाता प्राज्ञोऽनसूयकः ।
धर्माधर्मविशेषज्ञः सर्वं तरति दुस्तरम् ॥

**स्कन्दपुराणे ।**

श्रद्धा मातेव जननी ज्ञानस्य सुकृतस्य च ।
तस्माच्छ्रद्धां समुत्पाद्य ज्ञानं सुकृतमर्जयेत् ॥

**मनुः ।**

श्रद्धयेष्टं च पूर्त्तं च नित्यं कुर्यात् प्रयत्नतः ।
श्रद्धाकृते ह्यक्षये ते भवतः स्वागतैर्धनैः ॥

**याज्ञवल्क्यः ।**

दातव्यं प्रत्यहं पात्रे निमित्तेषु विशेषतः ।
याचितेनापि दातव्यं श्रद्धापूतं तु शक्तितः ॥

**बृहस्पतिः ।**

मन्त्राज्यदोषाद्धोमे तु तपसीन्द्रियदोषतः ।
न्यूनता स्यान्न दाने तु श्रद्धायुक्ते भवेत् क्वचित् ॥

एतच्च देशनिरूपणं पूर्वं व्रतखण्डादावेव प्रपञ्चितम् । इह तु पात्रादिदानाङ्गनिरूपणप्रतिज्ञानिर्वहणार्थं दिङ्मात्रमेव प्रदर्शितम् । न चात्र भविष्यपुराणमतेन दानाङ्गपञ्चके निरूप्यमाणे दानाङ्गभूतस्यापि दातुः कथं पृथगनुपादानमिति शङ्कनीयं दानस्य दातृव्यतिरेकेणानुपपत्तेस्तेनैव तदाक्षेपात् एवं तर्हि देशकालादेरप्यनुपादानंस्यात्।

अथ सामान्येनैव तदाक्षेपेऽपि ब्रह्मावर्त्तादिविशेषलाभार्थं तन्निरूपणमिति दातापि तर्हि शुचित्वादिविशेषलाभार्थं निरूपणीयः स्यात् । उच्यते तत्तद्विधायकवाक्यगताख्यातप्रत्ययोपात्तत्वादेव तदनिरूपणं नत्वाक्षेपात्। शुचित्वादिविशेषलाभस्तु वाक्यान्तरादिति कर्त्रनभिधानपक्षे तु प्रत्ययोपात्तभावनयैवासाधारण्येन तदाक्षेपाच्च देशादिसाम्यम् । एवमादिक्लेशपर्यालोचनया षडङ्गदानमितिवदता देवलेन तु निरूप्यत एव ।

**तथा हि ।**

दाता प्रतिग्रहीता च श्रद्धा देयं च धर्मयुक् ।
देशकालौ च दानानामङ्गान्येतानि षड्विदुः-इति ॥

तल्लक्षणं तु प्रागभिहितमिति तु न पुनराद्रियामहे । न तु श्रद्धादिवदितिकर्त्तव्यतापि दानाङ्गमित्यतः प्रतिपादनीयैव ।

**यदाह याज्ञवल्क्यः ।**

देशकाल उपायेन द्रव्यं श्रद्धासमन्वितम् ।
पात्रे प्रदीयते यत् तत् सकलं धर्मलक्षणम्-इति ॥

'उपायः' इतिकर्त्तव्यता अत्रोच्यते । इतिकर्त्तव्यताविशेषास्तावत् तत्र दानविशेषेष्वेव प्रतिपादयिष्यन्ते तेषामिह प्रतिपादयितुमशक्यत्वात् सामान्येनेतिकर्त्तव्यता पुनरवश्यं वक्तव्येति तदर्थमिदं प्रकरणमारभ्यते । इति श्रद्धा निरूपणम् ।

**अथ दानसामान्यविधिरुच्यते । तत्र दातृधर्माः ।**

भविष्यपुराणे ।

सम्यक् संसाधनं कर्म कर्त्तव्यमधिकारिणा ।
निष्कामेन महावीर काम्यं कामान्वितेन च ॥
आचारयुक्तः श्रद्धावान् प्राज्ञो योऽध्यात्मवित्तमः ।
कर्मणां फलमाप्नोति न्यायार्जितधनश्च यः ॥

'सम्यक्' प्रथमकल्पादिना । 'संसाधनं' यथाविहितसाधनम् । 'अधिकारिणा' अर्थिना समर्थेन विदुषा च । 'अध्यात्मवित्तमः' परलोकफलभागिन्यात्मनि दृढप्रत्ययवान् । 'न्यायार्जितधनः' स्ववृत्त्यर्जितधनः ।

आपस्तम्बः ।

प्रयोजयिताऽनुमन्ता कर्त्तेति स्वर्गनरकफलेषु
भागिनो यो भूय आरभते तस्मिन् फलविशेषः ।

या[ज्ञ]वल्क्यः ।

विधिदिष्टं तु यत्कर्म करोत्यविधिना तु यः ।
फलं न किञ्चिदाप्नोति क्लेशमात्रं हि तस्य तत् ॥

मनुः ।

प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्त्तते ।
न साम्परायिकं तस्य दुर्मतेर्विद्यते फलम् ॥

'साम्परायिकं' पारलौकिकम् ।

योगियाज्ञवल्क्यः ।

श्रद्धाविधिसमायुक्तं कर्म यत् क्रियते नृभिः ।
सुविशुद्धेन भावेन तदानन्त्याय कल्पते ॥
विधिहीनं भावदुष्टं कृतमश्रद्धया च यत् ।
तद्धरन्त्यसुरास्तस्य मूढस्य ह्यकृतात्मनः ॥

भविष्योत्तरे ।

काम्यो दानविधिः पार्थ क्रियमाणो यथातथम् ।
फलाय मुनिभिः प्रोक्तो विपरीतो भयावहः ॥

गारुडपुराणे ।

प्रशस्तदेशकाले च पात्रे दत्तं तदक्षयम् ।
कोटिजन्मार्जितं पापं ददतस्त्वस्य नश्यति ॥
सकलाङ्गोऽपि सम्भारो यस्य दानक्रियाविधौ ।
सम्भवेदपि पापीयान् स सद्यो मुक्तिमेष्यति ॥

देवीपुराणे ।

शुचिना भावपूतेन क्षान्तिसत्यव्रतादिना ।
अपि सर्षपमात्रोऽपि दातारं तारयेदिह ॥

दक्षः ।

दानं च विधिवद्देयं काले पात्रे गुणान्विते ।

यमः ।

सर्वत्र गुणवद्दानं श्वपाकादिष्वपि स्मृतम् ।
देशे काले विधानेन पात्रे दत्तं विशेषतः ॥

'गुणवत्' उत्तरफलम् ।

तथा ।

दानं हि बहुमानाद्यो गुणवद्भ्यः प्रयच्छति ।
स तु प्रेत्य धनं लब्ध्वा पुत्रपौत्रैः सहाश्नुते ॥
परं चानुपहत्येह दानं दत्त्वा विचक्षणः ।
सुखोदयं सुखोदर्कं प्रेत्य वै लभते धनम् ॥

'अनुपहत्य' पीडामनुत्पाद्य । 'सुखोदर्कं' सुखोत्तरफलम् ।

**रामायणे ।**

नावज्ञया प्रदातव्यं किञ्चिद्वा केनचित् क्वचित् ।
अवज्ञया हि यद्दत्तं दातुस्तद्दोषमावहेत् ॥

**शातातपः ।**

अभिगम्य तु यद्दानं यच्च दानमयाचितम् ।
विद्यते सागरस्यान्तस्तस्यान्तो नैव विद्यते ॥
प्रच्छन्नानि च दानानि ज्ञानं च निरहंकृतम् ।
तपांसि च सुतप्तानि तेषां फलमनन्तकम् ॥

**ब्रह्मप्रोक्ते ।**

गुप्ताध्यायी गुप्तदाता गुप्तपूजाग्निसत्क्रियः ।
पूज्यते सर्वलोकेषु सर्वदेवैः शतक्रतुः ॥

**व्यासः ।**

स्वयं नीत्वा तु यद्दानं भक्त्या पात्राय दीयते ।
तत् सहस्रगुणं भूत्वा दातारमुपतिष्ठति ॥

**बृहस्पतिः ।**

कृते प्रदीयते गत्वा त्रेतायां दीयते गृहे ।
द्वापरे च प्रार्थयति कलौ चानुगमान्विते ॥

प्रतिग्रहीतृगृहं गत्वा यद्दीयते तत् कृते युगे दत्तं भवति । प्रतिग्रहीतारं स्वगृहमाहूय यद्दीयते तत् त्रेतायुगे दत्तं भवतीत्यर्थः । एवमुत्तरत्रापि ।

**वह्निपुराणे ।**

तमोवृतस्तु यो दद्याद्भयात् क्रोधात् तथैव च ।
नृप दानं तु तत्सर्वं भुङ्क्ते गर्भस्थ एव च ॥
ईर्षामन्युमनाश्चैव दम्भार्थं चार्थकारणात् ।
यो ददाति द्विजातिभ्यः स बालत्वे तदश्नुते ॥

देशे काले च पात्रे च यो ददाति द्विजातिषु ।
परितुष्टेन मनसा यौवने तु तदश्नुते ॥
वैश्वदेवविहीनं च सन्ध्योपासनवर्जितम् ।
यद्दानं दीयते तत् तु वृद्धकाले समश्नुते ॥

आह मनुः ।

न विस्मयेत तपसा वदेदिष्ट्वा न चानृतम् ।
नार्त्तो विप्रवदेद्विप्रान् न दत्त्वा परिकीर्त्तयेत् ॥
यज्ञोऽनृतेन क्षरति तपः क्षरति विस्मयात् ।
आयुर्विप्रापवादेन दानं तु परिकीर्त्तनात् ॥

यमः ।

आशां कृत्वा ह्यदातारं दानकाले निषेधकम् ।
दत्त्वा सन्तप्यते यस्तु तमाहुर्ब्रह्मघातकम् ॥

हारीतः ।

दानं ज्ञानं तपस्त्यागो मन्त्रकर्मविधिक्रियाः ।
मङ्गलाचारनियमाः शौचभ्रष्टस्य निष्फलाः ॥

आह प्रचेताः ।

स्नातोऽधिकारी भवति दैवे पित्र्ये च कर्मणि ।
पवित्राणां तथा जाप्ये दाने च विधिचोदिते ॥

वायुपुराणे ।

क्रियां यः कुरुते मोहादनाचम्येह नास्तिकः ।
भवन्ति न तथा तस्य क्रियाः सर्वा न संशयः ॥

शाट्यायनः ।

दानमाचमनं होमं भोजनं देवतार्चनम् ।
प्रौढपादो न कुर्वीत स्वाध्यायं पितृतर्पणम् ॥

आसनारूढपादस्तु जान्वोर्वा जङ्घयोस्तथा ।
कृतावसक्थिको यश्च प्रौढपादः स उच्यते ॥

**वशिष्ठः ।**

यज्जले शुष्कवस्त्रेण स्थले चैवार्द्रवाससा ।
जपो होमस्तथा दानं तत् सर्वं निष्फलं भवेत् ॥

**विष्णुपुराणे ।**

होमदेवार्चनाद्यासु क्रियास्वाचमने तथा ।
नैकवस्त्रः प्रवर्त्तेत द्विजवाचनके जपे ॥

'द्विजवाचनके' द्विजस्वस्तिवाचनादौ ।

**शातातपः ।**

सव्यादंसात् परिभ्रष्टकटिदेशभृताम्बरः ।
एकवस्त्रं तु तं विद्यात् दैवे पित्र्ये च वर्जयेत् ॥

**गौतमः ।**

स्नाने दाने जपे होमे दैवे पित्र्ये च कर्मणि ।
बध्नीयान्नासुरीं कक्षां शेषकाले यथा रुचिः ॥

**याज्ञवल्क्यः ।**

परिधानाद्बहिः कक्षा निबद्धा ह्यासुरी भवेत् ।
धर्मकर्मणि विद्वद्भिर्वर्जनीया प्रयत्नतः ॥

'बहिः कक्षा' बहिर्निर्गता कक्षेत्यर्थः ।

**मनुः ।**

न कुर्यात् कस्यचित् पीडां कर्मणा मनसा गिरा ।
आचरन्नभिषेकं तु कर्मण्यप्यन्यथा चरन् ॥
सन्ध्ययोरुभयोर्जप्ये भोजने दन्तधावने ।
पितृकार्ये च दैवे च तथा मूत्रपुरीषयोः ॥

गुरूणां सन्निधौ दाने यागे चैव विशेषतः ।
एषु मौनं समातिष्ठन् स्वर्गं प्राप्नोति मानवः ॥

**पराशरः ।**

स्नाने दाने जपे होमे दैवे पित्र्ये च कर्मणि ।
सव्यापसव्यौ कर्त्तव्यौ सपवित्रौ करौ द्विजैः ॥

**लघुहारीतः ।**

जपे होमे तथा दाने स्वाध्याये पितृतर्पणे ।
अशून्यं तु करं कुर्यात् सुवर्णरजतैः कुशैः ॥
दर्भहीना तु या सन्ध्या यच्च दानं विनोदकम् ।
असंख्यातं च यज्जप्तं तत् सर्वं निष्प्रयोजकम् ॥

**हारीतः ।**

देवाश्च पितरश्चैव तपोयज्ञदानानामीशते मन्तारः सर्वकार्यसाधनानामार्त्तिभयोपसर्गेभ्यो रक्षितारो भवन्ति, मन्त्रा देवतास्तदा एवं सिद्धमन्त्रवत् करोति, देववत् करोति, यद्ददाति देवताभिरेव तद्ददाति, यत् प्रतिगृह्णाति देवताभिरेव तत् प्रतिगृह्णाति, तस्मान्नामन्त्रवत् प्रतिगृह्णीयात् यत्त्वमन्त्रतः प्रतिपादिता हि देवतास्तूष्णीं प्रतिगृह्णीयुर्हि शठा भवन्ति तस्मान्मन्त्रवदद्भिरवोक्ष्य दद्यादालभ्य वा ।

'अवोक्ष्य' प्रोक्षणं कृत्वा । 'आलभ्य' सोदकेन पाणिना स्पृष्ट्वा ।

**आपस्तम्बः ।**

सर्वाण्युदकपूर्वाणि दानानि यथाश्रुति वीहारे ।

'वीहारे' यज्ञे अन्वाहार्यदानादौ यथाश्रुति यावदेव श्रुतं तावदेव कुर्याच्चोदकपूर्वतादिनियम इत्यर्थः ।

**वाराहपुराणे ।**

तोयं दद्याद्द्विजकरे दाने विधिरयं स्मृतः ।

सकुशो[illegible] ददामीति तथा वदेत् ॥

गौतमः ।

अन्तर्जानुकरं कृत्वा सकुशं तु तिलोदकम् ।
फलान्यपि च संधाय प्रदद्यात् श्रद्धयान्वितः ॥

पात्रासन्निधाने तु नारदीयपुराणे विशेष उक्तः ।

मनसा पात्रमुद्दिश्य जलं* भूमौ विनिक्षिपेत् ।
विद्यते सागरस्यान्तो दानस्यान्तो न विद्यते ॥

धौम्यः ।

दानकाले तु सम्प्राप्ते पात्रस्यासन्निधौ जलम् ।
अन्यविप्रकरे दत्त्वा दानं पात्रे निधीयते ॥

षट्त्रिंशन्मते ।

पात्रं मनसि सञ्चिन्त्य क्रियावन्तं गुणान्वितम् ।
देशे काले च सम्प्राप्ते देयमप्सु विनिक्षिपेत् ॥

उभयासन्निधाने तु विशेषस्तत्रैवोक्तः ।

द्रव्यपात्रविकर्षश्चेत् परोक्षं दातुमुद्यतः ।
तद्यायाद्धै भुवं पात्रं द्रव्यमादित्यदैवतम् ॥

धौम्यः ।

परोक्षेऽपि तु यद्दत्तं तीर्थे स्नानेन सोदकम् ।
तद्दानं सोदकं प्राहुरनन्तफलदायकम् ॥
परोक्षे कल्पितं दानं पात्राभावे कथं भवेत् ।
गोत्रजेभ्यस्तथा दद्यात् तदभावे स्वबन्धुषु ॥
परोक्षेऽपि च यद्दत्तं भावपूर्वेण चेतसा ।
गुरुमित्रद्विजातिभ्यस्तत् तु दानमनन्तकम् ॥

---

* भूमौ तोयमिति क्वचित् पाठः ।

परोक्षे खलु यद्दत्तं स्वस्त्यक्षरविवर्जितम् ।
दृश्यते सागरस्यान्तस्तस्यान्तो नैव दृश्यते ॥

आपस्तम्बः ।

तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः ।
प्रवर्त्तन्ते विधानोक्ताः सततं ब्रह्मवादिनः ॥
त्रिमात्रस्तु प्रयोक्तव्यः कर्मारम्भेषु सर्वशः ।
तिस्रः सार्धास्तु कर्त्तव्या मात्रास्तत्वार्थचिन्तकैः ॥
देवताध्यानकाले न प्लुतं कुर्यान्न संशयः ।

वृद्धवशिष्ठः ।

नामगोत्रे समुच्चार्य सम्प्रदानस्य चात्मनः ।
सम्प्रदेयं प्रयच्छन्ति कन्यादाने तु पुंस्त्रयम् ॥

'पुंस्त्रयमिति' प्रपितामहादिपुरुषत्रयमित्यर्थः ।

तदुक्तम् ।

नान्दीमुखे विवाहे च प्रपितामहपूर्वकम् ।
नाम सङ्कीर्त्तयेद्विद्वानन्यत्र पितृपूर्वकम् ॥

तथा ।

दानहोमजपान् कुर्वन्नासीनः कुशसंस्तरे ।
एषां फलमनन्तं तु लभते प्राङ्मुखो नरः ॥

स्मृत्यन्तरे ।

नामगोत्रे समुच्चार्य सम्यक् श्रद्धान्वितो ददेत् ।
सङ्कीर्त्य देशकालादि तुभ्यं सम्प्रददे इति ॥
न ममेति स्वस्वत्वस्य निवृत्तिमपि कीर्त्तयेत् ।

षट्त्रिंशन्मते ।

प्रणीते तु समिद्धेऽग्नौ जुहुयाद्व्याहृतित्रयम् ।

उदगग्रेषु दर्भेषु पात्रं तेषूपपादयेत् ॥
प्रागग्रेषु स्वयं स्थित्वा दाता च परमेश्वरम् ।
ध्यात्वा स्वपुण्यमुद्दिश्य दक्षिणां प्रतिपादयेत् ॥
समस्तव्याहृतीर्हुत्वा तत्रोपरि समापयेत् ।
ब्राह्मणं प्रतिपत्याथ ततः पात्रं विसर्जयेत् ॥
अनेन विधिना दानं दातव्यं होमपूर्वकम् ।
तत्कर्मदक्षिणावर्जं होमवर्जं च नार्हति ॥

एतच्च विहिताङ्गभूतहोमकेषु होमानुवादपुरःसरमुपदर्शितं तत्तदगुणविधिपरम्। अन्यथा ह्यतथादृष्टशिष्टाचारेषु ताम्बूलादिदानेष्वपि प्रसङ्गः स्यात् ।

अथ प्रतिग्रहीतृधर्माः । ब्रह्माण्डपुराणे ।

शुचिः पवित्रपाणिश्च गृह्णीयादुत्तरामुखः ।
अभीष्टदेवतां ध्यायन् मनसा विजितेन्द्रियः ॥
कृतोत्तरीयको नित्यमन्तर्जानुकरस्तथा ।
दातुरिष्टमभिध्यायन् गृह्णीयात् प्रयतः शुचिः ॥

आपस्तम्बः ।

आर्द्रवासास्तु यः कुर्याज्जपहोमं प्रतिग्रहम् ।
सर्वं तद्राक्षसं विन्देत् बहिर्जानु च यत् कृतम् ॥

बौधायनः ।

काषायवासा कुरुते जपहोमप्रतिग्रहान् ।
तद्देवगमं भवति हव्यकव्यं स्वधा हविः ॥

छागलेयः ।

हस्तमध्ये ब्रह्मतीर्थं दक्षिणाग्रहणे न तु ।

आह प्रचेताः ।

दक्षिणमध्यहस्ते ब्राह्मणस्याग्नेयं तीर्थमाग्नेये प्रतिगृह्णीयात्–इति ।

गारुडपुराणे ।

स्नातः सम्यगुपस्पृश्य दधानो धौतवाससी ।
सपवित्रकरश्चैव प्रतिगृह्णीत धर्मवित् ॥

विष्णुधर्मोत्तरे ।

मृतके सूतके विप्रा न तु ग्राह्यः प्रतिग्रहः ।
तत्रापि च तथा ग्राह्या नरैरभयदक्षिणा ॥
कालः स एव ग्रहणे यदा भयमुपस्थितम् ।
प्रतिग्रहास्तथान्ये तु ग्राह्या नाशुचिना द्विजाः ॥
अभ्यक्तेन च धर्मज्ञास्तथा मुक्तशिखेन च ।
स्नातः सम्यगुपस्पृश्य गृह्णीयात् प्रयतः शुचिः ॥
प्रतिग्रहीता सावित्रीं सर्वत्रैवानुकीर्त्तयेत् ।
ततस्तु कीर्त्तयेत् सार्धं द्रव्येण द्रव्यदेवताम् ॥
समापयेत् ततः पश्चात् कामस्तुत्या प्रतिग्रहम् ।
तदन्ते कीर्त्तयेत् स्वस्ति प्रतिग्रहविधिस्त्वयम् ॥

'सावित्री' सवितृदेवत्या ऋक् देवस्यत्वेत्यादिप्रसिद्धा । 'द्रव्यदेवतां' अभयं सर्वदैवत्यमित्यादिवक्ष्यमाणाम् । 'कामस्तुत्या' कोदात् कस्मा अदादितिमन्त्रेण । शाखान्तरे तु कामः कामायेत्यादिप्रसिद्धा ।

आदित्यपुराणे ।

ॐकारमुच्चरन् प्राज्ञो द्रविणं स कुशोदकम् ।
गृह्णीयाद्दक्षिणे हस्ते तदन्ते स्वस्ति कीर्त्तयेत् ॥

तथा ।

प्रतिग्रहं पठेदुच्चैः प्रतिगृह्य द्विजोत्तमात् ।
मन्द्रं पठेत् तु राजन्ये उपांशु च तथा विशि ॥
मनसा तु तथा शूद्रे स्वस्तिवाचनमेव च ।

सोँकारं ब्राह्मणे कुर्यान्निरोँकारं महीपतौ ॥

उपांशु च तथा वैश्ये मनसा स्वस्ति शूद्रजे ।

'प्रतिग्रहम्' प्रतिग्रहमन्त्रः । 'मन्द्रं' मध्यमस्वरम् । ब्राह्मणे दातरि सोँकारं स्वस्तिवाचनं कुर्यात् । एवं क्षत्रियादिषु ।

## विष्णुधर्मोत्तरे ।

अभयं सर्वदैवत्यं भूमिर्वै विष्णुदेवता ।

कन्या दासस्तथा दासी प्राजापत्याः प्रकीर्त्तिताः ॥

तथा चैकशफं सर्वं कथितं यमदैवतम् ।

महिषश्च तथा याम्य उष्ट्रो वै नैर्ऋतो भवेत् ॥

रौद्री धेनुर्विनिर्दिष्टा छागमाग्नेयमादिशेत् ।

मेषं तु वारुणं विन्द्याद्वराहं वैष्णवं तथा ॥

आरण्याः पशवः सर्वे कथिता वायुदेवताः ।

जलाशयानि सर्वाणि वारिधानीं कमण्डलुम् ॥

कुम्भं च करकं चैव वारुणानि निबोधत ।

समुद्रजानि रत्नानि वारुणानि द्विजोत्तमाः ॥

आग्नेयं कनकं प्रोक्तं सर्वलोहानि चाप्यथ ।

प्राजापत्यानि सर्वाणि पक्वान्नमपि च द्विजाः ॥

ज्ञेयाश्च सर्वगन्धास्तु गान्धर्वा वै विचक्षणैः ।

बार्हस्पत्यं स्मृतं वासः सौम्या ज्ञेया रसास्तथा ॥

पक्षिणस्तु तथा सर्वे वायव्याः परिकीर्त्तिताः ।

विद्या ब्राह्मी विनिर्दिष्टा विद्योपकरणानि च ॥

सारस्वतानि ज्ञेयानि पुस्तकादीनि पण्डितैः ।

सर्वेषां शाल्यभाण्डानां विश्वकर्मानुदैवतः ॥

द्रुमाणामथपुष्पाणां शाकैर्हरितकैः सह ।

फलानामपि सर्वेषां तथा ज्ञेयो वनस्पतिः ॥
मत्स्यमांसे विनिर्दिष्टे प्राजापत्ये तथैव च ।
छत्रं कृष्णाजिनं शय्यां रथमासनमेव च ॥
उपानहौ तथा यानं यच्चान्यत् प्राणिवर्जितम् ।
यत् तु चाङ्गिरसत्वेन प्रतिगृह्णीत मानवः ॥
शूरोपयोगि यत् सर्वं शस्त्रधर्मध्वजादिकम् ।
रणोपकरणं सर्वं विज्ञेयं सर्वदैवतम् ॥
गृह्णन्तु शक्रदैवत्यं यदनुक्तं द्विजोत्तमाः ।
तज्ज्ञेयं विष्णुदैवत्यं सर्वं वा द्विजसत्तमाः ॥
द्रव्याणामथ सर्वेषां देवसंश्रयणान्नरः ।
वाचयेज्जलमादाय करेणाऽथ प्रतिग्रहम् ॥
दातुमत्र प्रयोगाऽन्ते* ह्यमुकस्मै सुराय वै ।
इदमोँप्रतिगृह्णामि तदन्ते स्वस्ति कीर्त्तयेत् ॥

तद्यथा । अग्नये हिरण्यं प्रतिगृह्णामीति ।

द्रव्याण्यव्यथमादाय स्पृष्ट्वा तान् ब्राह्मणः पठेत् ।
कन्यादाने तु न पठेद्द्रव्याणां तु पृथक् पृथक् ॥
प्रतिग्रहे द्विजश्रेष्ठास्तथैवान्तर्भवन्ति ते ।
प्रतिग्रहस्य यो धर्म्यं न जानाति द्विजो विधिम् ॥
द्रव्यस्तैन्यसमायुक्तो नरकं प्रतिपद्यते ।
विधिं तु धर्म्यं विज्ञाय ब्राह्मणस्तु प्रतिग्रहे ॥
दात्रा सह तरत्येव महादुर्गाण्यसौ ध्रुवम् ।
तस्मादुक्तं विधिं कृत्वा ब्राह्मणस्तु प्रतिग्रहे ॥
आत्मनः श्रेयसो योगं कुर्याद्दानं तथैव च ।

---

* दातुर्मन्त्रप्रयोगान्त इति पाठान्तरम् ।

तस्मात् सर्वप्रयत्नेन विधिर्ज्ञेयः प्रतिग्रहे ॥

तथा ।

भूमेः प्रतिग्रहं कुर्याद्भूमिं कुर्वन् प्रदक्षिणम् ।
करे गृहीत्वा कन्यां तु दासदास्यौ द्विजोत्तमः ॥
करं तु हृदि विन्यस्य धर्म्यो ज्ञेयः प्रतिग्रहः ।

'प्रतिग्रहं, स्वीकारम् ।

आरुह्य च गजस्योक्तः कर्णे चाश्वस्य कीर्त्तितः ।
तथा चैकशफानां तु सर्वेषां वा विशेषतः ॥
प्रतिगृह्णीत तान् शृङ्गे पुच्छे कृष्णाजिनं तथा ।

सामान्येनैकशफानां कर्णे प्रतिग्रह उक्तः । येत्वेकशफाः शृङ्गिणस्तान् विशेषतः शृङ्गे प्रतिगृह्णीतेत्यर्थः ।

कर्णजाः पशवः सर्वे ग्राह्या पुच्छे विचक्षणैः ।
गृह्णीयान्महिषं शृङ्गे खरं वै पृष्ठदेशतः ॥
प्रतिग्रहमथोष्ट्रस्य यानानां चाधिरोहणात् ।
वीजानां मुष्टिमादाय रत्नान्यादाय सर्वतः ॥
वस्त्रं दशान्तादादद्यात् * परिधायाथ वा पुनः ।
आरुह्योपानहौ मञ्चमारुह्यैव च पादुके ॥
धर्मध्वजौ च संस्पृष्ट्वा प्रविश्य च तथा गृहम् ।
अवतीर्य च सर्वाणि जलस्थानानि वै द्विजाः ॥
ईषायां तु रथो ग्राह्यः छत्रं दण्डे तथैव च ।
द्रुमांश्च प्रतिगृह्णीयान्मूलन्यस्तकरो द्विजः ॥
आयुधानि समादाय तथाऽऽमुच्य विभूषणम् ।

'ईषायां' दण्डाग्रे । 'आमुच्य' बद्ध्वेत्यर्थः ।

---

* वस्त्रं दशान्तमादद्यादिति पाठान्तरम् ।

परिशिष्टे ।

परिगृह्णीत गां पुच्छे कर्णे वा हस्तिनं करे ।
मूर्ध्नि दासीमजां चैव पृष्ठेऽश्वतरगर्दभौ ॥
अश्वं कर्णे शटे वापि अन्तमुद्दिश्य धारयेत् ।
शय्यासनगृहक्षेत्रं संस्पृश्यादाय काञ्चनम् ॥
उष्ट्रं च ककुदि स्पृष्ट्वा मृगाँश्च महिषादिकान् ।
गोधामश्वविधानेन पुच्छे संस्पृश्य पक्षिणः ॥
दंष्ट्रिणो दंशितं चैव तथा क्षुद्रमृगाँश्च ये ।
अजादीनां तु सत्वानामेष एव विधिः स्मृतः ॥
छत्रं दण्डे तरून् मूले फलं संगृह्य गौरवात् ।
प्रगृह्योपानहौ मन्त्रं वाचयेत् प्रतिमुच्य वै ॥
वासस्त्वथ समादाय कन्या शीर्षेऽथवा करे ।
ऋतौ भार्यां परपूर्वां प्रतिगृह्णीत चाक्षताम् ॥
पुत्रमुत्सङ्गमारोप्य प्रतिगृह्णीत दत्तकम् ।
रथं रथमुखे स्पृष्ट्वा प्रतिगृह्णीत कूवरे ॥

'कूवरः' युगाधारकाष्ठम् ।

युग्यकाञ्चनवस्त्राणां नाऽङ्कयुक्ते प्रतिग्रहः ।

अथोभयधर्माः । गरुडपुराणे ।

दैवं वा कर्म पित्र्यं वा नाशुचिः कर्तुमर्हसि ।
स्नानमेव द्विजातीनां परं शुद्धिकरं स्मृतम् ॥
अतः स्नातोऽर्हतामेति दाने चैव प्रतिग्रहे ।
कृतमस्नायिना कर्म राक्षसत्वाय कल्पते ॥
प्रजापतिः कर्मगुप्तेः पवित्रमसृजत् पुरा
रक्षोघ्नमेतत् परमं मुनिभिः कल्पितं सदा ॥

तस्मात् तत्करयोर्धार्यं ददता प्रतिगृह्णता ।
स्नानहोमजपादीनि कुर्वता च विशेषतः ॥
संत्यज्य वैष्णवं मार्गं ब्रह्ममार्गविनिर्गतम् ।
सकृत् प्रदक्षिणीकृत्य पवित्रमभिधीयते ॥

वायुपुराणे ।

दानं प्रतिग्रहो होमो भोजनं वलिरेव च ।
साङ्गुष्ठेन सदा कार्यमसुरेभ्योऽन्यथा भवेत् ॥

'साङ्गुष्ठेन' अङ्गुलीसङ्गताङ्गुष्ठेन ।

एतान्येव च कार्याणि दानादीनि विशेषतः ।
अन्तर्जानु विधेयानि तद्वदाचमनं नृप ॥

बौधायनः ।

भोजनं हवनं दानमुपहारः प्रतिग्रहः ।
बहिर्जानु न कार्याणि तद्वदाचमनं स्मृतम् ॥

ब्रह्माण्डपुराणे ।

नाधिकारी मुक्तकच्छो मुक्तचूडस्तथैव च ।
दाने प्रतिग्रहे यज्ञे ब्रह्मयज्ञादिकर्मसु ॥
देवाः समेत्य वस्त्रं हि तच्च पुंसामकल्पयन् ।
ततश्च वाससा हीनमसम्पूर्णं प्रचक्षते ॥
सोत्तरीयस्ततः कुर्यात् सर्वकर्माणि भाविनः ।
अधौतं काकधौतं च परिदध्यान्न वाससी ॥
ददानः प्रतिगृह्णँश्च दध्यादहतमेवच ।

वाराहपुराणे ।

सुस्नातः सम्यगाचान्तः कृतसंध्यादिकक्रियः ।
कामक्रोधविहीनश्च पाषण्डस्पर्शवर्जितः ॥
जितेन्द्रियः सत्यवादी पात्रं दाता च शस्यते ।

तथा ।

प्रमीते गोत्रपुरुषे सूतके वा समागते ।
दशरात्रमनर्हः स्यात् कर्त्तुं दानप्रतिग्रहौ ॥
पिण्डोदकादि मृतके दातुं प्रेताय युज्यते ।
अच्छिन्नायां तथा नाड्यां दानार्हौ मृतसूतके ॥

विष्णुधर्मोत्तरे ।

शुचिर्नाप्यशुचिर्वापि दद्यादभयदक्षिणाम् ।
शुचिनाऽशुचिना वापि ग्राह्या भय उपस्थिते ॥

छन्दोगपरिशिष्टे कात्यायनः ।

कुशोपरि निविष्टेन तथा यज्ञोपवीतिना ।
देयं प्रतिग्रहीतव्यमन्यथा विफलं हि तत् ॥

आह जातूकर्ण्यः ।

ओँकारेण दद्यात् प्रतिगृह्णीयाच्च ।

स्कन्दपुराणे ।

प्रणवो जगतां बीजं वेदानामादिरेव च ।
एष एव परं ब्रह्म पवित्रमयमुत्तमम् ॥
तस्मात् प्रणवमुच्चार्य कार्यौ दानप्रतिग्रहौ ।

यमः ।

योऽर्चितं प्रतिगृह्णाति योऽर्चयित्वा प्रयच्छति ।
तावुभौ गच्छतः स्वर्गं विपरीते विपर्ययः ॥

लिङ्गपुराणे ।

दद्याद्दानं यथाशक्त्या सदाऽभ्यर्चनपूर्वकम् ।
ब्राह्मणश्चापि गृह्णीयाद्भक्त्या दत्तं प्रतिग्रहम् ॥

**शातातपः ।**

प्रश्नपूर्वं तु यो दद्याद्ब्राह्मणाय प्रतिग्रहम् ।
स पूर्वं नरकं याति ब्राह्मणस्तदनन्तरम् ॥

'प्रश्नपूर्वमिति' एतमध्यायमेतमनुवाकं वा यदि त्वमस्खलितं पठसि तदा त एतावद्ददामीत्युक्त्वा तथा कृते यद्दीयते तत् 'प्रश्नपूर्वकम्'।

**व्यासः ।**

अवमानेन यो दद्याद्गृह्णीयाद्यः प्रतिग्रहम् ।
तावुभौ नरके मग्नौ वसेतां शरदां शतम् ॥

**शातातपः ।**

कार्यलोभेन यो दद्याद्गृह्णीयाद्यः प्रतिग्रहम् ।
दाताऽग्रे नरकं याति ब्राह्मणस्तदनन्तरम् ॥

**विष्णुधर्मोत्तरे ।**

प्रतिग्रहो यो विधिना प्रदत्तः प्रतिग्रहो यो विधिना गृहीतः ।
द्वयोः प्रयोगश्चरमं तु कार्यः श्रेयस्तथाप्नोति न संशयोऽत्र ॥

**अथ मिश्रधर्माः । नन्दिपुराणे ।**

दाने विधिमविज्ञाय न हि तद्दातुमर्हति ।
प्रतिग्रहानभिज्ञश्च गृह्णन् निरयमश्नुते ॥
सावज्ञं प्रतिगृह्णानो ग्रहीताऽपि पतत्यधः ।
किं त्वं वेत्सीति वक्तव्यो न दात्रा ब्राह्मणः क्वचित् ॥
सोऽपि पृष्टः स्वयं तेन दानार्थं तं न कीर्त्तयेत् ।

यदि त्वमेतत् पठसि तदा तुभ्यमेतद्ददामीति साक्षात् परीक्षणमत्र निषिध्यते । पात्रत्वबोधार्थमुपायान्तरेण परीक्षणत्वमनुमतमेव ।

**तदुक्तं यमेन ।**

शीलं संवसनाज्ज्ञेयं शौचं संव्यवहारतः ।

प्रज्ञा संकथनाज्ज्ञेया त्रिभिः पात्रं परीक्ष्यते ॥

'संकथनं' शुद्धभावेन विद्याकथा ।

## वाराहपुराणे ।

अपि सर्षपमात्रं हि न देयं विचिकित्सता ।
मनसा ह्यननुज्ञातः प्रतिगृह्णीत नैव हि ॥
ददानः प्रतिगृह्णंश्च यतो लोभभयादिना ।
नाप्नोति श्रेयसा योगं निरयं चैव गच्छति ॥

## नारदीयपुराणे ।

देशकालविधानाद्यैर्हीनं दानं भयावहम् ।
दातुः प्रतिग्रहीतुश्च गृहीतमसतः सदा ॥

## षट्त्रिंशन्मते ।

नामगोत्रे समुच्चार्य प्राङ्मुखो देयकीर्त्तनात् ।
उदङ्मुखाय विप्राय दत्वाऽन्ते स्वस्ति वाचयेत् ॥

'देयकीर्त्तनादिति' देयकीर्त्तनोत्तरकालं दत्त्वेत्यर्थः ।

प्राकप्रत्यगास्या वोद्वाहे दातृग्राहकयोः स्थितिः ।
दद्यात् पूर्वमुखो द्रव्यमेष एव विधिः सदा ॥

यत् तु कीर्त्तयन्ति-

प्राङ्मुखस्तु प्रगृह्णीयाद्विवाहे तु विपर्ययः ।

इति तस्य समूलत्वे सिद्धे अनुष्ठानविकल्पः । तत्राप्युदङ्मुखसंप्रदानविशिष्टस्मतेस्तदेवानुष्ठेयम् ।

## तदुक्तं स्मृत्यन्तरे ।

दद्यात् पूर्वमुखो दानं गृह्णीयादुत्तरामुखः ।
आयुर्विवर्धते दातुर्ग्रहीतुः क्षीयते तु तत् ॥

इति श्रीमहाराजाधिराजश्रीमहादेवस्य समस्तकरणाधीश्वरसकलविद्याविशारदश्रीहेमाद्रिविरचिते चतुर्वर्गचिन्तामणौ दानखण्डे दानाङ्गप्रकरणम् ॥ ३ ॥

अथ परिभाषाः ।

सिन्धौ दुर्धरकालकूटकुटिले* पीयूषशङ्केव का
कान्तानां मधुराधरासवरसस्पर्द्धा सुनिर्धारिता ।
इन्दुं निन्दितमाह राहुरसनायोगो वियोगोत्तर-
स्तन्निःसीमसुधानिधानमधुना हेमाद्रिसूरेर्गिरः ॥
अनेन सामान्यतया प्रतीयते महीतलम् ।
अनेन सामान्यतया परिभाषेह कथ्यते ॥

तत्राह याज्ञवल्क्यः ।

आर्षं छन्दश्च दैवत्यं विनियोगस्तथैव च ।
वेदितव्यं प्रयत्नेन ब्राह्मणेन विशेषतः ॥
अविदित्वा तु यः कुर्याद्याजनाध्ययनं जपम् ।
होममन्तर्जलादीनि तस्य चाल्पफलं भवेत् ॥

तथा ।

यश्च जानाति तत्त्वेन आर्षं छन्दश्च दैवतम् ।
विनियोगं ब्राह्मणं च मन्त्रार्थं ज्ञानकर्म च ॥
एकैकस्य ऋषेः सोपि वन्द्यो ह्यतिथिवद्भवेत् ।
देवतायाश्च सायुज्यं गच्छत्यत्र न संशयः ॥
पूर्वोक्तेन प्रकारेण ऋष्यादीन् वेत्ति यो द्विजः ।
अधिकारी भवेत् तस्य रहस्यादिषु कर्मसु ॥

तथा ।

येन यदृषिणा दृष्टं सिद्धिः प्राप्ता च येन वै ।
मन्त्रेण तस्य तत् प्रोक्तमृषेर्भावस्तदार्षकम् ॥

---

* सिन्धौ बन्धुरकालकूटकुटिल इति क्वचित् पाठः ।

छन्दसा छन्द उद्दिष्टं* वाससी इव चाकृते: ।
आत्मा संच्छादितो देवैर्मृत्योर्भीतैस्तु वै पुरा ॥
आदित्यैर्वसुभी रुद्रैस्तेन छन्दांसि तानि वै ।
यस्य यस्य तु मन्त्रस्य उद्दिष्टा देवता तु या ॥
तदाकारं भवेत् तस्य देवत्वं देवतोच्यते ।
पुराकल्पे समुत्पन्ना मन्त्रा: कर्मार्थ एव च ॥
अनेन चेदं कर्त्तव्यं विनियोगः स उच्यते ।
निरुक्तं यस्य मन्त्रस्य विनियोग†प्रयोजनम् ॥
प्रतिष्ठानं स्तुतिश्चैव ब्राह्मणं तदिहोच्यते ।
एवं पञ्चविधं प्रोक्तं जपार्थं गृह्यनुस्मरेत् ॥
होमे चान्तर्जले योगे स्वाध्याये याजने तथा ।

छन्दोगपरिशिष्टे कात्यायनः ।

अक्रिया त्रिविधा प्रोक्ता विद्वद्भिः कामकारिणाम् ।
अक्रिया च परोक्ता च तृतीया वा यथाक्रिया ॥
स्वशाखाशेषमुत्सृज्य परशाखाश्रयं च यः ।
कर्त्तुमिच्छति दुर्मेधा मोघं तत् तस्य यत् फलम् ॥
यन्नाऽऽम्नातं स्वशाखायां पारक्यमविरोधि‡ यत् ।
विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकर्मवत् ॥

'अग्निहोत्रं' यजुर्वेदशाखासु विहितं यथा छन्दोगादिभिरनुष्ठीयते ॥

गृह्यपरिशिष्टकारः ।

बह्वल्पं वा स्वगृह्योक्तं यस्य कर्म प्रकीर्त्तितम् ।

---

* छादनात् छन्द इति पाठान्तरम् ।

† समुत्पत्तिरिति पाठान्तरम् ।

‡ परोक्तमविरोधीति क्वचित् पाठः ।

तस्य तावति शास्त्रार्थे कृते सर्वः कृतो भवेत् ॥

प्रवृत्तमन्यथा कुर्याद्यदि मोहात् कथञ्चन ।
यतस्तदन्यथाभूतं तत एव समापयेत् ॥

'प्रवृत्तम्' आरब्धम् । 'अन्यथाभूतं' क्रमाद्यन्यत्वेन यद्वैपरीत्यमापन्नम् ।

समाप्ते यद्विजानी*यान्मयैतदयथाकृतम् ।
तावदेव पुनः कुर्यान्नावृत्तिः सर्वकर्मणः ॥

एतत् तु कर्मसमाप्तावन्यथाकरणताविषयम् ।

प्रधानस्याक्रिया यत्र साङ्गं तत् क्रियते पुनः ।
तदङ्गस्याक्रियायां तु नावृत्तिर्न च तत्क्रिया ॥

यत्र प्रधानकर्माकरणं तत्साङ्गमेव पुनःकर्त्तव्यम् । तदङ्गाकरणे पुनर्न साङ्गप्रधानावृत्तिर्नाऽपि तावन्मात्रस्याङ्गस्य करणं किं तु प्रायश्चित्तमेव कार्यम् ।

## गृह्यपरिशिष्टे ।

दर्भाः कृष्णाजिनं मन्त्रा ब्राह्मणा हविरग्नयः ।
अयातयामान्येतानि नियोज्यानि पुनः पुनः ॥

## मरीचिः ।

मासे नभस्यमावास्या तस्यां दर्भचयो मतः ।
अयातयामास्ते दर्भा विनियोज्याः पुनः पुनः ॥

## छन्दोगपरिशिष्टे कात्यायनः ।

हरिता यज्ञिया दर्भाः पीतकाः पञ्चयज्ञियाः ।
समूलाः पितृदैवत्याः कल्माषा वैश्वदेविकाः ॥

ह्रस्वाः प्रवरणीयाः स्युः कुशा दीर्घाश्च बर्हिषः ।

'पञ्चयज्ञियाः' पञ्चयज्ञार्हाः । प्रवरणमनुष्ठानं तदर्हाः 'प्रवरणीयाः' ।

---

* यदि जानीयादिति क्वचित् पाठः ।

लघुहारीतः ।

चितौ दर्भाः पथि दर्भा ये दर्भा यज्ञभूमिषु ।
स्तरणासनपिण्डेषु षट् कुशान् परिवर्जयेत् ॥
पिण्डार्थं ये कृता दर्भा यैः कृतं पितृतर्पणम् ।
मूत्रोच्छिष्टधृता ये च तेषां त्यागो विधीयते ॥
नीवीमध्येषु ये दर्भा ब्रह्मसूत्रे च ये कृताः ।
पवित्राँस्तान् विजानीयाद्यथा काय*स्तथा कुशाः ॥
अनन्तगर्भिणं साग्रं कौशं द्विदलमेव च ।
प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित् ॥
तदेव दर्भपिञ्जल्या लक्षणं समुदाहृतम् ।
आज्यस्योत्पवनार्थं यत् तदप्येतावदेव तु ॥

आपस्तम्बः ।

देवागारे तथा श्राद्धे गवां गोष्ठे तथाऽध्वरे ।
सन्ध्ययोश्च द्वयोः साधुसङ्गमे गुरुसन्निधौ ॥
अग्न्यागारे विवाहेषु स्वाध्याये भोजने तथा ।
उद्धरेद्दक्षिणं पाणिं ब्राह्मणानां क्रियापथे ॥

'उद्धरेद्दक्षिणं पाणिमिति' सव्यांशे वस्त्रं निधाय दक्षिणं बाहुमुत्तरीयाद्बहिः कुर्यादित्यर्थः ।

याज्ञवल्क्यः ।

रौद्रपित्रासुरान् मन्त्राँस्तथा दैवाभिचारिकान् ।
व्याहृत्यालभ्य चात्मानमपः स्पृष्ट्वान्यदाचरेत् ॥

छन्दोगपरिशिष्टे कात्यायनः ।

पित्र्यमन्त्रप्रवरणे आत्मालम्भे अवेक्षणे ।

---

* यथा काशा इति पाठान्तरम् ।

अधोवायुसमुत्सर्गे प्रहासेऽनृतभाषणे ॥

मार्जारमूषिकस्पर्शे आक्रुष्टे क्रोधसम्भवे ।

निमित्तेष्वेषु सर्वत्र कर्म कुर्वन्नपः स्पृशेत् ॥

'आत्मालम्भे' हृदयस्पर्शे यज्ञादौ विहिते । अवेक्षणमपि यज्ञादिविहितमेव ग्राह्यम् ।

**याज्ञवल्क्यः ।**

यदि वाग्यमलोपः स्याज्जपादिषु कथञ्चन ।

व्याहरेद्वैष्णवं मन्त्रं स्मरेद्वा विष्णुमव्ययम् ॥

अज्ञानाद्यदि वा मोहात् प्रच्यवेताध्वरेषु यत् ।

स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति श्रुतिः ॥

**तथा शतपथश्रुतिः ।**

अथ यद्वाचंयमो व्याहरति तस्मादुहैष विसृजो यज्ञः पराङावर्त्तते तत्र वैष्णवीमृचं वा यजुर्वा जपेदित्यादि ।

**छन्दोगपरिशिष्टे कात्यायनः ।**

यत्रोपदिश्यते कर्म कर्तुरङ्गं न सूच्यते ।

दक्षिणस्तत्र विज्ञेयः कर्मणां पारगः करः ॥

यत्र दिङ्नियमो नास्ति जपहोमादिकर्मसु ।

तिस्रस्तत्र दिशः प्रोक्ता ऐन्द्री सौम्याऽपराजिता ॥

'ऐन्द्री' प्राची । 'सौम्या' उत्तरा । 'अपराजिता' ईशानदिक् ।

आसीन ऊर्ध्वः प्रह्वो वा नियमो यत्र नेदृशः ।

तदासीनेन कर्तव्यं न प्रह्वेण न तिष्ठता ॥

'प्रह्वः' प्रणतजानुकः । 'प्रह्वेण' नम्रेण । 'तिष्ठता' ऊर्ध्वेण ।

**वशिष्ठः ।**

[illegible]ेषु धौतवस्त्रधरो भवेत् ।

अलङ्कृतः शुचिर्मौनी श्रद्धावान् विजितेन्द्रियः ॥

**कात्यायनः ।**

सदोपवीतिना भाव्यं सदा बद्धशिखेन तु ।
विशिखोऽनुपवीतश्च यत् करोति न तत् कृतम् ॥

**निगमपरिशिष्टे ।**

वामस्कन्धे यज्ञोपवीतं दैवे प्राचीनावीतमितरथा पितृयज्ञे नाभ्यां द्विकण्ठासक्तमुत्सर्गे निवीतं पृष्ठदेशावलम्बि ग्राम्यधर्मेषु ।

'ग्राम्यधर्मः' स्त्रीसंयोगः ।

**बौधायनः ।**

कर्मयुक्तो नाभेरधःस्पर्शं वर्जयेत् ।

**आह मनुः ।**

चण्डालश्च वराहश्च कुक्कुटः श्वा तथैव च ।
रजस्वला च षण्डश्च नेक्षेरन्नश्नतो द्विजान् ॥
होमे प्रदाने भोज्ये च यदेभिरभिवीक्ष्यते ।
दैवे हविषि पित्र्ये वा तद्गच्छत्ययथातथम् ॥

**स्कन्दपुराणे ।**

पाषण्डिनश्च पतिता ये च वै नास्तिका जनाः ।
पुण्यकर्मणि तेषां वै सन्निधिर्नेष्यते क्वचित् ॥

**विज्ञानललिते ।**

पृथिव्यप्तेजसां वायोर्मण्डलानि क्रमेण तु ।
पीतं वक्ति चतुष्कोणं पार्थिवं शक्रदैवतम् ॥
वृत्ताब्जमाप्यं पद्माकं शुक्लं वरुणदैवतम् ।
अस्त्रं स्वस्तिकसंयुक्तं तैजसं वह्निदैवतम् ॥
वृत्तं बिन्दुवृतं वायुदैवतं कृष्णमानिलम् ।

गरुडपुराणे ।

कस्तूरिकाया द्वौ भागौ चत्वारश्चन्दनस्य च ।
कुङ्कुमस्य त्रयश्चैका शशिनः स्याच्चतुःसमम् ॥
कर्पूरश्चन्दनं दर्पकुङ्कुमं च समांशकम् ।
सर्वगन्धमिति प्रोक्तं समस्तसुरवल्लभम् ॥

तथा ।

कर्पूरमगुरुश्चैव कस्तूरी चन्दनं तथा ।
कक्कोलं च भवेदेभिः पञ्चभिर्यक्षकर्दमः ॥

शिवधर्मे ।

पञ्चामृतं दधि क्षीरं सिता मधु घृतं नृप ।

स्कन्दपुराणे ।

गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ।
पञ्चगव्यमिति प्रोक्तं सर्वपातकनाशनम् ॥

ब्रह्माण्डपुराणे ।

अश्वत्थोदुम्बरप्लक्षचूतन्यग्रोधपल्लवाः ।
पञ्चभङ्गा इति प्रोक्ताः सर्वकर्मसु शोभनाः ॥

पञ्चरात्रे ।

रजांसि पञ्चवर्णानि मण्डलार्थं हि कारयेत् ।
शालितण्डुलचूर्णेन शुक्लं वा यवसम्भवम् ॥
रक्तं कुसुम्भसिन्दूरगैरिकादिसमुद्भवम् ।
हरितालोद्भवं पीतं रजनीसम्भवं क्वचित् ॥
कृष्णैर्द्रव्यैर्वै हरितं पीतकृष्णाविमिश्रितम् ।

'रजनी' हरिद्रा ।

आदित्यपुराणे ।

अभावे सर्वरत्नानां हेम सर्वत्र योजयेत् ।
रुद्रवीजं परं पूतं यतस्तस्यैव सर्वदा ॥

भविष्यपुराणे ।

मधुरोऽम्लश्च लवणं कषायस्तिक्त एव च ।
कटुकश्चेति राजेन्द्र रसषट्कमुदाहृतम् ॥

स्कन्दपुराणे ।

दधि क्षीरमथाज्यं च माक्षिकं लवणं गुडः ।
तथैवेक्षुरसश्चेति रसाः प्रोक्ता मनीषिभिः ॥

भविष्यपुराणे ।

अनुक्तद्रव्यतत्संख्यादेवताप्रतिमा नृप ।
सौवर्णी राजती ताम्री वृक्षजा मार्त्तिकी तथा ॥
चित्रजा पिष्टलेपोत्था निजवित्तानुरूपतः ।
आमाषात् पलपर्यन्तं कर्त्तव्या शाठ्यवर्जितैः ॥
सुवर्णं रजतं ताम्रमारकूटं तथैव च ।
लोहं त्रपु तथा सीसं धातवः परिकीर्त्तिताः ॥

तथा ।

आपः क्षीरं कुशाग्राणि दध्यक्षततिलास्तथा ।
यवाः सिद्धार्थकाश्चैवमर्घोऽष्टाङ्गः प्रकीर्त्तितः ॥

तथा ।

दूर्वा यवाङ्कुराश्चैव बालकं चूतपल्लवाः ।
हरिद्राद्वयसिद्धार्थशिखिपत्रोरगत्वचः ॥
कङ्कणौषधयश्चैताः कौतुकाख्या नव स्मृताः ।

### छन्दोगपरिशिष्टे ।

*कुष्ठं मांसी हरिद्रे द्वे मुरा शैलेयचन्दनम् ।
वचा चम्पकमुस्तं च सर्वौषध्यो दश स्मृताः ॥

आवाहनासनार्घं पाद्याचमनमधुपर्कस्नानापश्च वासोभूषणगन्धसुमनोधुतधूप दीपभोज्यानि प्रार्दक्षिण्यं नतिरिति कथयन्त्युपचारषोडशकम् ।

### विष्णुधर्मोत्तरे ।

हैमराजतताम्रा वा मृण्मया लक्षणान्विताः ।
यात्रोद्वाहप्रतिष्ठादौ कुम्भाः स्युरभिषेचने ॥
पञ्चाशाङ्गुलवैपुल्या उत्सेधे षोडशाङ्गुलाः ।
द्वादशाङ्गुलकं मूलं मुखमष्टाङ्गुलं भवेत् ॥

'पञ्चाशाङ्गुलेति' आशा दिशः ताश्च दशसंख्यावाचकत्वेन ज्योतिःशास्त्रादौ प्रतिद्धाः । पञ्च च आशाश्च पञ्चाशाः । तावन्ति अङ्गुलानि वैपुल्यं येषां ते तथाभूताः । मध्यप्रदेशे तिर्यङ्मानेन पञ्चदशाङ्गुला इत्यर्थः । अथवा बाह्यप्रदेशे वलयाकृतिना सूत्रेण नीयमाना मध्यस्थाने पञ्चदशाङ्गुला इत्यर्थः । अस्मिन् पक्षे पञ्चाशाङ्गुलेति छान्दसः प्रयोगः । इति सङ्कीर्णविधिः ।

## अथ दक्षिणादिनिर्णयः ।

### तत्र शतपथश्रुतिः ।

स एष यज्ञोऽहतो नादक्षत देवा दक्षिणाभिरदक्षयंस्तद्यदेनं दक्षिणाभिरदक्षयंस्तस्माद्दक्षिणा नामेति ।

### भविष्यपुराणे ।

अदत्तदक्षिणं दानं व्रतं चैव नृपोत्तम ।
विफलं तद्विजानीयाद्भस्मनीव हुतं हविः ॥

---

* मुरा मांसी वचा कुष्ठं शैलेयं रजनीद्वयम् ।
शठी चम्पकमुस्तं च सर्वौषधिगणः स्मृत इति स्मार्त्ताः ।

षट्त्रिंशन्मते ।

श्रद्धायुक्तः शुचिर्दान्तो दानं दद्यात् सदक्षिणम् ।
अदक्षिणं तु यद्दानं तत् सर्वं निष्फलं भवेत् ॥

मैत्रायणीयपरिशिष्टे ।

दक्षिणालाभे मूलानां भक्ष्याणां ददाति न त्वेवं यजेत् ।

तथा च शतपथश्रुतिः ।

तस्मान्नादक्षिणं हविः स्यादिति ।

भविष्योत्तरे ।

काम्यं यद्दीयते किञ्चित् तत् समग्रं सुखावहम् ।
असमग्रं तु दोषाय भवतीह परत्र च ॥
तस्मान्न दक्षिणाहीनं विधानविकलं न च ।
देयं दानं महाराज समग्रफलकाङ्क्षया ॥
अन्यथा दीयमानं तदपकाराय केवलम् ।
प्रत्यक्षतश्चार्थहानिर्न च तत् फलदं भवेत् ॥

आह भगवान् व्यासः ।

सुवर्णं परमं दानं सुवर्णं दक्षिणा परा ।
सर्वेषामेवदानानां सुवर्णं दक्षिणेष्यते ॥

एतच्च विशेषविहितगोवस्त्रादिदक्षिणकदानवर्ज्जं सामान्यविहितदक्षिणेषु दानेषु व्यवतिष्ठते तत्रापि 'परा' श्रेष्ठतमेति प्राशस्त्यं दर्शयति नत्वन्यां दक्षिणां निराचष्टे आनन्त्यार्थत्वाद्दक्षिणायाः सुवर्णस्य प्रकृष्टत्वात् सर्वदानेषु सुवर्णं दक्षिणेतिवचनार्थः । अन्यदपि पुरुषस्याहारोपयिकं तण्डुलादिकं दक्षिणार्थेन योज्यम् ।

यत् तु श्रूयते–

अन्येषां चैव दानानां सुवर्णं दक्षिणा स्मृता ।
सुवर्णे दीयमाने तु रजतं दक्षिणेष्यते ॥

इति तदेतच्छ्रोतारतम्यं परिज्ञाय श्रद्धातव्यम् ।

सुवर्णं रजतं ताम्रं तण्डुला धान्यमेव च ।
नित्यश्राद्धं देवपूजा सर्वमेव सदक्षिणम् ॥

स्कन्दपुराणे ।

देयद्रव्यतृतीयांशं दक्षिणां परिकल्पयेत् ।
अनुक्तदक्षिणे दाने दशांशं वाऽपि शक्तितः ॥

तुलापुरुषादिदानानि अधिकृत्य । लिङ्गपुराणे ।

दक्षिणा च शतं चार्धं तदर्धं वा प्रदापयेत् ।
ऋत्विजां चैव सर्वेषां दश निष्कान् प्रदापयेत् ॥

भविष्योत्तरे ।

ज्ञेयं निष्कशतं पार्थ दानेषु विधिरुत्तमः ।
मध्यमस्तु तदर्धेन तदर्धेनाधमः स्मृतः ॥
मेष्यां च कालपुरुषे तथान्येषु महत्स्वपि* ।
एवं वृक्षे तथाश्वे च धेनोः कृष्णाजिनस्य च ॥
अशक्तस्याऽपि कृतोऽयं पञ्चसौवर्णिको विधिः ।
अतोऽप्यल्पेन यो दद्यान्महादानं नराधमः ॥
प्रतिगृह्णाति वा तस्य दुःखशोकावहं भवेत् ।

जयाभिषेकमुदाहृत्य । लिङ्गपुराणे ।

अष्टषष्टिपलोन्मानं दद्याद्वै दक्षिणां गुरोः ।
होतॄणां चैव सर्वेषां त्रिंशत्पलमुदाहृतम् ॥
अध्येतॄणां तदर्धेन द्वारपाणां तदर्धतः ।

एतेनान्यत्राऽपि गुरोर्वृद्धऋत्विजां तदर्धं जापकानां तदर्धं द्वारपालानामिति दक्षिणाविभागोऽवगन्तव्यः ।

---

* महत्सु चेति क्वचित् पाठः ।

ब्रह्मवैवर्त्ते सुबाहुरुवाच ।

देवानां प्रतिमां विप्र गृहीत्वा ब्राह्मणः स्वयम् ।
आत्मोपयोगं कुरुते विक्रीत्वा वा विभज्य वा ॥
तिलधेन्वादयश्चैव कथं भक्ष्या विजानता ।
धेनुत्वाद्भक्षणं शस्तं न शस्तं चेति संशयः ॥

विश्वामित्र उवाच ।

धर्मे च मूलं प्रथमं श्रुतिं वेदविदो जगुः ।
श्रुतिर्मूलं स्मृतीनां तु पुराणं सेतिहासकम् ॥
श्रुतिमूलं समाख्यातं तदुक्तं नैव चालयेत् ।
दानकाले तु देवत्वं प्रतिमानां प्रकीर्त्तितम् ॥
धेनूनामपि धेनुत्वं श्रुत्युक्तं दानयोगतः ।
दातुर्वै दानकाले तु धेनवः परिकीर्त्तिताः ॥
विप्रस्य व्ययकाले तु द्रव्यं तदिति निश्चयः ।
दानसम्बन्धि विप्रेण द्रव्यमागच्छता गृहम् ॥
तत् सर्वं विदुषा तेन विक्रेयं स्वेच्छया विभो ।
कुटुम्बभरणं कार्यं धर्मकार्यं च सर्वशः ॥
अन्यथा नरकं यातीत्येवमाह पितामहः ।
कथं तिलानां धेनुत्वं देवत्वं प्रतिमासु च ॥
उभयोः शास्त्रतो विद्याद्धेनुत्वं देवतां तथा ।
शास्त्रं प्रमाणं परमं प्रमाणानामिति स्थितिः ॥
आगमादेव लोकस्य प्रतीतिर्नान्यतः कुतः ।
पुराणं मानवो धर्मः साङ्गो वेदश्चिकित्सितम् ॥
आज्ञासिद्धानि चत्वारि न हन्तव्यानि हेतुभिः ।

अथ द्रव्यदानम् । ब्रह्मपुराणे ।

धर्मशास्त्रेषु मानार्थं याः संज्ञा मुनिभिः स्मृताः ।
ताः सर्वा व्यवहारार्थं बोद्धव्याः सम्प्रदायतः ॥

मनुः ।

लोकसंव्यवहारार्थं याः संज्ञाः प्रथिता भुवि ।
ताम्ररूप्यसुवर्णनां ताः प्रवक्ष्याम्यशेषतः ॥
जालान्तरगते भानौ यत् सूक्ष्मं दृश्यते रजः ।
परमं तत् प्रमाणानां* त्रसरेणुः प्रचक्ष्यते ॥
त्रसरेण्वष्टकं† ज्ञेया लिक्षैका ‡परमाणुतः ।
ता राजसर्षपस्तिस्रस्ते त्रयो गौरसर्षपः ॥
सर्षपाः षट् यवो मध्यस्त्रियवं त्वेककृष्णलः ।
पञ्चकृष्णलको माषस्ते सुवर्णस्तु षोडश ॥
पलं सुवर्णाश्चत्वारः पलानि धरणं दश ।
द्वे कृष्णले समधृते विज्ञेयो रौप्यमाषकः ॥
ते षोडश स्याद्धरणं पुराणश्चैव राजतः ।
कार्षापणस्तु विज्ञेयस्ताम्रिकः कार्षिकः पणः ॥
धरणानि दश ज्ञेयः शतमानस्तु राजतः ।
चतुःसौवर्णिको निष्को विज्ञेयस्तु प्रमाणतः ॥

याज्ञवल्क्यः ।

जालसूर्यमरीचिस्थं त्रसरेणुरजः स्मृतम् ।
तेऽष्टौ लिक्षा तु तास्तिस्रो राजसर्षप उच्यते ॥

---

* प्रथमं तत् प्रमाणानामिति क्वचित् पाठः ।

† त्रसरेणवोऽष्टाविति वा पाठः ।

‡ परिमाणत इति क्वचित् पाठः ।

गौरस्तु ते त्रयः षट् ते यवो मध्यस्तु ते त्रयः ।
कृष्णलः पञ्च ते माषस्ते सुवर्णस्तु षोडश ॥
पलं सुवर्णाश्चत्वारः पञ्च वापि प्रकीर्त्तितम् ।
द्वे कृष्णले रूप्यमाषो धरणं षोडशैव ते ॥
शतमानं तु दशभिर्धरणैः पलमेव च ।
निष्कः सुवर्णाश्चत्वारः कार्षिकस्ताम्रिकः पणः ॥

आह विष्णुः ।

जालस्थानमरीचिगतं रजस्त्रसरेणुसंज्ञं तदष्टकं लिक्षा, त्रयो राजसर्षपः, तत्त्रयं गौरसर्षपः, ते षट् यवः, तत्त्रयं कृष्णलं, तत्पञ्चकं माषः, तद्द्वादशकमक्षार्धं, तच्चतुर्माषकं सुवर्णः, तच्चतुःसौवर्णिको निष्कः । द्वे कृष्णले रूप्यमाषकः, ते षोडश धरणम् । ताम्रिकः कार्षापण ।

कात्यायनः ।

माषो विंशतिभागश्च ज्ञेयः कार्षापणस्य तु ।
काकिणी तु चतुर्भागो माषस्य च पणस्य च ॥
पञ्चनद्याः प्रदेशे तु संज्ञेयं व्यावहारिकी ।
कार्षापणप्रमाणं तु तन्निबद्धमिहैव या ॥
कार्षापणस्यैका ज्ञेया ताश्चतस्रस्तु धानकः ।
ते द्वादश सुवर्णस्तु दीनारस्तु त्रिकः स्मृतः ॥

नारदः ।

कार्षापणो दक्षिणस्यां दिशि रौप्यः प्रवर्त्तते ।
पणैर्निबद्धः पूर्वस्या षोडशैव पणस्य तु ॥

अगस्तिप्रोक्तेऽपि ।

यवः स्यात् सर्षपैः षड्भिर्गुञ्जा च स्यात् त्रिभिर्यवैः ।
गुञ्जाभिः पञ्चभिश्चैवेत्र माषकः परिकीर्त्तितः ॥

भवेत् षोडशभिर्माषैः सुवर्णस्तैः पुनः स्मृतम् ।
चतुर्भिः पलमेकस्य दशशो धरणं विदुः ॥
अष्टभिर्भवति व्यक्तैस्तण्डुलो गौरसर्षपैः ।
स वैणवो यवः प्रोक्तो गोधूमं चापरे जगुः ॥

**विष्णुगुप्तः ।**

पञ्च गुञ्जा भवेन्माषः शाणस्तैश्च चतुर्गुणैः ।
कणजो धरणं प्राहुर्मणिमानविशारदाः ॥
मञ्जाटिका कणजविशेषस्तौल्ये गुञ्जाद्वयं विदुः ।
मञ्जाटिकाविंशतिस्तु धरणं तद्विदां मतम् ॥
स्थूलमध्यातिसूक्ष्माणां सुसूक्ष्माणामपि स्मृतम् ।
माषकैः पद्मरागः स्यादिन्द्रनीलादिषु स्मृतम् ॥
कुहुस्तत्र प्रयोक्तव्यो न यस्मिन् मानमीरितम् ।
दीनारो रौपकैरष्टाविंशत्या परिकीर्त्तितः ॥
सुवर्णस्य सप्ततिमो भागो रौपक इष्यते ।

**प्रकारान्तरेणाप्याह ।**

सुक्षेत्रे यथावन्मध्यपाककाले निष्पन्ना धान्यमाषा दश सुवर्णमाषः, पञ्च वा गुञ्जाः सुवर्णमाषकः ते षोडश सुवर्णः, एवं प्रमाणसिद्धस्य द्वितीया संज्ञा कर्ष इति । चतुष्कर्षं पलं, पलानां शतेन तुला, विंशतितौलिकौ भारः, अस्यैव भारस्य उदतौलिक इति द्वितीया संज्ञा ।

**ब्रह्मप्रोक्ते ।**

पलानां विंशतिर्वीशः पञ्चवीशास्तुला मता ।
उदतौलिकः स एव स्याद्भारो विंशतितौलिकः ॥

**विष्णुगुप्तः ।**

रूप्यस्य सुवर्णाद्भिन्नमानमभिधीयते । अष्टाशीति गौरसर्षपा रूप्य-

माषकः, ते षोडश धरणं निष्पावा विंशतिर्वा, रूप्यपलं च दशधरणकं, तत्पलानां शतं तुला, तत्तुलाविंशतिर्भार इति। विंशत्या व्रीहितण्डुलैस्तुलायां विधृतैर्वज्राख्यरत्नस्य धरणं भवति। अष्टभिर्गौरसर्षपैस्तण्डुलं कल्पयेदिति केचित्।

तथा निघण्टौ।

मानं तुलाङ्गुलिप्रस्थैर्गुञ्जाः पञ्चाद्यमाषकः।
ते षोडशाक्षः कर्षोऽस्त्री पलं कर्षचतुष्टयम्॥
सुवर्णविस्तौ हेम्नोऽक्षे कुरुविस्तस्तु तत्पले।
तुला स्त्रियां पलशतं भारः स्याद्विंशतिस्तुलाः॥
आचितं दश भाराः स्युः शाकटो भार आचितः।
कार्षापणः कार्षिकः स्यात् कार्षिकस्ताम्रिकः पणः॥

आदित्यपुराणे।

एकं दश शतं चैव सहस्रं चेति सत्तम।
यथोत्तरं दशगुणं सहस्राणि दशायुतम्॥
शताहतं सहस्रं तु प्रोच्यते नियुतं* बुधैः।
तथा शतसहस्राणि दश प्रयुतमुच्यते॥
शतं शतसहस्राणि कोटिरित्यभिधीयते।
अर्बुदं दशकोट्यस्तु वृन्दं कोटिशतं विदुः॥
सहस्रं कोटयश्चापि खर्वमाहुश्च तद्विदः।
दशकोटिसहस्राणि निखर्वमिति संज्ञितम्॥
शतं कोटिसहस्राणां शङ्कुरित्यभिधीयते।
सहस्रं कोटयश्चापि पद्ममात्रं तु तद्विदुः॥

---

* नियुतमित्यत्र लक्षं प्रयुतमित्यत्र च नियुतमिति केचिदाहुरिति।

सहस्रं तु सहस्राणां कोटीनां दशधा पुनः ।
गणितं तु समुद्रं वै प्राहुः संख्याविदो जनाः ॥

तथा धान्यमानम् । मार्कण्डेयपुराणे ।

जज्ञिरे तानि वीजानि ग्राम्यारण्याभिधानि च ।
ओषध्यः फलपाकान्ताः शतं सप्तदश स्मृताः ॥
व्रीहयश्च यवाश्चैव गोधूमाः कङ्गुकास्तिलाः ।
प्रियङ्गवः कोविदाराः कोरदूषाः सचीनकाः ॥
माषा मुद्गा मसूराश्च निष्पावाः सकुलीत्थकाः ।
आढक्यश्चणकाश्चैव शणः सप्तदश स्मृताः ॥
इत्येता ओषधीनां तु ग्राम्याणां जातयः स्मृताः ।
ओषध्यो यज्ञिया ज्ञेया ग्राम्यारण्याश्चतुर्दश ॥
व्रीहयश्च यवाश्चैव गोधूमाः कङ्गुसर्षपाः ।
माषा मुद्गाः सप्तमाश्च अष्टमाश्च कुलीत्थकाः ॥
श्यामाकाश्चैव नीवारा जर्तिलाः स गवेधुकाः ।
कोविदारसमायुक्तास्तथा वेणुयवाश्च ये ॥
ग्राम्यारण्याः स्मृता ह्येता ओषध्यश्च चतुर्दश ।

स्कन्दपुराणे ।

यवगोधूमधान्यानि तिलाः कङ्गुकुलीत्थकाः ।
माषा मुद्गा मसूराश्च निष्पावाः श्यामसर्षपाः ॥
गवेधुकाश्च नीवारा आढक्योऽथ सतीनकाः ।
चणकाश्चीनकाश्चैव धान्यान्यष्टादशैव तु ॥

'धान्यानि' व्रीहयः । 'गवेधुकाः' कसेरुकाः । 'नीवाराः' आरण्यव्रीहयः । 'सतीनकाः' वर्त्तुलकलायाः । 'चीनकाः' षष्टिकविशेषाः ।

षट्त्रिंशन्मते ।

यवा गोधूमधान्यानि तिलाः कङ्गुस्तथैव च ।
श्यामाकं चीनकं चैव सप्तधान्यमुदाहृतम् ॥

भविष्यपुराणे ।

पलद्वयं तु प्रसृतं द्विगुणं कुडवं मतम् ।
चतुर्भिः कुडवैः प्रस्थः प्रस्थाश्चत्वार आढकः ॥
आढकैस्तैश्चतुर्भिश्च द्रोणस्तु कथितो बुधैः ।
कुम्भो द्रोणद्वयं सूर्पखारी द्रोणास्तु षोडश ॥

विष्णुधर्मोत्तरे ।

पलं च कुडवः प्रस्थ आढको द्रोण एव च ।
धान्यमानेषु बोद्धव्याः क्रमशोऽमी चतुर्गुणाः ॥
द्रोणैः षोडशभिः खारी विंशत्या कुम्भ उच्यते ।
कुम्भैस्तु दशभिर्वाघी धान्यसंख्याः प्रकीर्तिताः ॥

वाराहपुराणे ।

पलद्वयं तु प्रसृतं मुष्टिरेकं पलं स्मृतम् ।
अष्टमुष्टिर्भवेत् कुञ्चिः कुञ्चयोऽष्टौ तु पुष्कलम् ॥
पुष्कलानि च चत्वारि आढकः परिकीर्तितः ।
चतुराढको भवेद्द्रोण इत्येतन्मानलक्षणम् ॥
चतुर्भिः सेतिकाभिस्तु प्रस्थ एकः प्रकीर्तितः ।

मुष्टिर्यजमानस्येति केचित् । मुष्टिरेकं पलं स्मृतमिति प्रोक्तम् । सेतिकेति कुडवः ।

पाद्मे ।

चतुर्भिः कुडवैः प्रस्थः प्रस्थैश्चतुर्भिराढकः ।
चतुराढको भवेद्द्रोण इत्येतन्मानलक्षणम् ॥

गोपथब्राह्मणे ।

पञ्चकृष्णलको माषस्तैश्चतुःषष्टिभिः पलम् ।
पलैर्द्वात्रिंशद्भिः प्रस्थो मागधेषु प्रकीर्तितः ॥
आढकस्तैश्चतुर्भिश्च द्रोणः स्याच्चतुराढकः ।

द्रवद्रव्यविषये स्कन्दपुराणे ।

पलद्वयेन प्रसृतं द्विगुणं कुडवं मतम् ।
चतुर्भिः कुडवैः प्रस्थ आढकस्तैश्चतुर्गुणैः ॥
चतुर्गुणो भवेद्द्रोण इत्येतद्द्रवमानकम् ।

अथ भूमानम् ।

जालान्तरगते भानौ यत् सूक्ष्मं दृश्यते रजः ।
प्रथमं तत् प्रमाणानां त्रसरेणुं प्रचक्षते ॥
त्रसरेणुस्तु विज्ञेयो ह्यष्टौ ये परमाणवः ।
त्रसरेणवस्तु ते ह्यष्टौ रथरेणुस्तु स स्मृतः ॥
रथरेणवस्तु ते ह्यष्टौ बालाग्रं तत् स्मृतं बुधैः ।
बालाग्राण्यष्ट लिक्षा तु यूका लिक्षाष्टकं बुधैः ॥
अष्टौ यूका यवं प्राहुरङ्गुलं तु यवाष्टकम् ।
द्वादशाङ्गुलमात्रा वै वितस्तिस्तु प्रकीर्तिता ॥
अङ्गुष्ठस्य प्रदेशिन्या व्यासः प्रादेश उच्यते ।
तालः स्मृतो मध्यमया गोकर्णश्चाप्यनामया ॥
कनिष्ठया वितस्तिस्तु द्वादशाङ्गुलिका स्मृता ।
रत्निस्त्वङ्गुलपर्वाणि विज्ञेयस्त्वेकविंशतिः ॥
चत्वारि विंशतिश्चैव हस्तः स्यादङ्गुलानि तु ।
किष्कुः स्मृतो द्विरत्निस्तु द्विचत्वारिंशदङ्गुलः ॥
षण्णवत्यङ्गुलैश्चैव धनुर्दण्डः प्रकीर्तितः ।

धनुर्दण्डयुगं नालिर्ज्ञेयो ह्येते यवाङ्गुलैः ॥
धनुषा त्रिंशता नल्वमाहुः संख्याविदो जनाः ।
धनुःसहस्रे द्वे चापि गव्यूतिरुपदिश्यते ॥
अष्टौ धनुःसहस्राणि योजनं तु प्रकीर्तितम् ।

मार्कण्डेयपुराणे ।

परमाणुः परं सूक्ष्मं त्रसरेणुर्महीरजः ।
बालाग्रं चैव लिक्षा च यूका चाथ यवोऽङ्गुलम् ॥
क्रमादष्टगुणान्याहुर्यवा अष्टौ ततोऽङ्गुलम् ।
षडङ्गुलं पदं प्राहुर्वितस्तिर्द्विगुणं स्मृतम् ॥
द्वौ वितस्ती ततो हस्तो ब्रह्मतीर्थं द्विचेष्टनैः ।
चतुर्हस्तो धनुर्दण्डो नालिका तद्युगेन तु ॥
क्रोशो धनुःसहस्रे द्वे गव्यूतिश्च चतुर्गुणा ।
द्विगुणं योजनं तस्मात् प्रोक्तं संख्यानकोविदैः ॥

बृहस्पतिः ।

दशहस्तेन दण्डेन त्रिंशद्दण्डा निवर्त्तनम् ।
दश तान्येव गोचर्म ब्राह्मणेभ्यो ददाति यः ॥

वशिष्ठः ।

दशहस्तेन वंशेन दश वंशान् समन्ततः ।
पञ्च चाभ्यधिकान् दद्यादेतद्गोचर्म चोच्यते ॥

विष्णुधर्मोत्तरे ।

यदुत्पन्नमथाश्नाति नरः संवत्सरं द्विजः ।
एकं गोचर्ममात्रं तु भुवः प्रोक्तं विचक्षणैः ॥

मत्स्यपुराणे ।

दण्डेन सप्तहस्तेन त्रिंशद्दण्डा निवर्त्तनम् ।

त्रिभागहीनं गोचर्ममानमाह प्रजापतिः ॥

**वृद्धवशिष्ठः ।**

गवां शतं वृषश्चैको यत्र तिष्ठेदयन्त्रितः ।
एतद्गोचर्ममात्रं तु प्राहुर्वेदविदो जनाः ॥

**अथ मण्डपादिलक्षणम् । बौधायनः ।**

मध्याङ्गुलीकूर्परयोर्मध्ये प्रामाणिकः करः ।

**छन्दोगपरिशिष्टे ।**

अङ्गुष्ठाङ्गुलमानं तु यत्र यत्रोपदिश्यते ।
तत्र तत्र बृहत्पर्वग्रन्थिभिर्मिनुयाद्बुधः ॥

**पञ्चरात्रे ।**

कुर्याद्वैष्णवयागेषु चतुर्द्वारांश्च मण्डपान् ।
सारदारुभवान् स्तम्भान् दृढान् कुर्यादृजून् समान् ॥
मण्डपार्धोच्छ्रितान् वेदसंख्यांश्चूडान्वितांस्तथा ।
वलिका मूर्धतस्तेषां स्तम्भद्वादशकं पुनः ॥
बाह्ये पीठप्रमाणेन तत्र सूत्रविभागतः ।
मध्यमोत्तमयोर्वेदी मण्डपस्य त्रिभागतः ॥
चतुर्थांशोच्छ्रितिस्तस्यास्त्रिसप्तपञ्चतोऽपि वा ।
नवैकादशहारं वा इष्टकाभिः प्रकल्पयेत् ॥
कनीयान् दशहस्तः स्यान्मध्यमो द्वादशोन्मितः ।
तथा षोडशभिर्हस्तैर्मण्डपः स्यादिहोत्तमः ॥

'वेदसंख्यान्' चतुःसंख्यानित्यर्थः । 'चूडा' शिखा सा च स्तम्भशिरस्युपरितन-सरन्ध्रवलिकाप्रवेशनार्थं क्रियते । 'बाह्य' इति अन्तर्विन्यस्तस्तम्भचतुष्टयापेक्षया बाह्यत्वम् । अयमर्थः । पूर्वं मध्यस्तम्भचतुष्टयं विन्यस्य ततो बाह्यपरिधौ स्तम्भद्वादशकं विन्यसेत । एवं च षोडशस्तम्भो मण्डपः संप्रपद्यते । 'सूत्रविभागत इति' प्राक्पश्चि-

मायतस्य दक्षिणोत्तरायतस्य वा क्षेत्रसूत्रस्य तृतीयांशपरिमितमन्तरालं विहाय स्तम्भा निवेशनीया इत्यर्थः। "कन्यसे द्विकरमिति" कन्यसे मण्डपे द्विहस्तविस्तारं द्वारं कार्यम्। मध्यमोत्तमयोस्तु चतुरङ्गुलाभिवृद्ध्या विधेयम्।

## विश्वम्भरवास्तुशास्त्रे।

मण्डपान्तरमुत्सृज्य कर्त्तव्यं मण्डपद्वयम्।
धाम्नो धाम्नान्तरं त्यक्त्वा धामाग्रे यज्ञमण्डपः॥
दशद्वादशहस्तो वा कलाहस्तोऽथवा पुनः।

यदा मण्डपद्वयं क्रियते तदा प्रथममण्डपपरिमितमन्तरं त्यक्त्वा द्वितीयमण्डपं कुर्यात्। यदा तु धामाग्रे मण्डपः क्रियते तदा तद्धामपरिमाणमन्तरं त्यक्त्वा परतो मण्डपं कुर्यादित्यर्थः। 'कलाहस्तः' षोडशहस्तः।

करैः षड्भिस्तु संछाद्या विजयाद्यास्तु मण्डपाः।
अश्वत्थोडुम्बरप्लक्षवटशाखाकृतानि तु॥
मण्डपस्य प्रतिदिशं द्वाराण्येतानि कारयेत्।
पञ्चहस्तप्रमाणास्ते विस्तारेण द्विहस्तकाः॥
षडङ्गुलाभिवृद्धास्तु सप्तहस्ता यथोत्तमे।

'पञ्चहस्तेति' कन्यसे मण्डपे पञ्चहस्ताः। मध्यमे षड् हस्ताः। उत्तमे सप्तहस्ता द्वारशाखा विधेयाः।

तथा हि। हस्तात् प्रभृति षडङ्गुलाभिवृद्ध्या विस्तारो विधेयः।

मस्तके द्वादशांशेन शङ्खचक्रगदाम्बुजम्।
प्रागादिक्रमयोगेन न्यसेत् तेषां सुदारुजम्॥
पञ्चमांशं न्यसेद्भूमौ सर्वसाधारणो विधिः।

## तत्र संग्रहे।

प्रतिकुण्डं पताकास्तु प्रोक्ताः शास्त्रार्थकोविदैः।
सप्तहस्ताः पताकाः स्युः सप्तमांशेन विस्तृताः॥

लोकपालानुवर्णेन वडभीतु* हिमप्रभा ? ।
पीतरक्तादिवर्णाश्च पञ्चहस्ता ध्वजाः स्मृताः ॥
द्विपञ्चहस्तैर्दण्डैस्तैर्वंशजैः संयुता मताः ।

'द्विपञ्चहस्तैः' दशहस्तैः ।

**गरुडपुराणे ।**

पञ्चहस्ता ध्वजाः कार्या वैपुल्येन द्विहस्तकाः ।
सप्तहस्ताः पताकाः स्युर्विंशत्यङ्गुलविस्तृताः ॥
दशहस्ताः पताकानां दण्डाः पञ्चाशवेशिताः ।
सिन्दूराः कर्बुरा धूम्रा धूसरा मेघसन्निभाः ॥
हरिताः पाण्डुवर्णाश्च शुभ्राः पूर्वादितः क्रमात् ।
एवं वर्णाः शुभाः कार्याः पताकाः पाकशासन ॥

**भविष्यपुराणे ।**

वेदिपादान्तरं त्यक्त्वा कुण्डानि नव पञ्च वा ।
वेदाऽस्राण्येव तानि स्युर्वर्त्तुलान्यथ वा क्वचित् ॥

'वेदाऽस्राणि' चतुरस्राणि ।

**आम्नायरहस्ये ।**

कुण्डानि चतुरस्राणि वृत्तनालाकृतीनि वा ।
नव पञ्चाऽथ चैकं वा कर्त्तव्यं लक्षणान्वितम् ॥
नवकुण्डविधाने तु दिक्षु कुण्डाष्टके स्थिते ।
नवमं कारयेत् कुण्डं पूर्वेशानदिगन्तरे ॥
विधाने पञ्चकुण्डानामीशाने पञ्चमं भवेत् ।

**ज्ञानरत्नावल्याम् ।**

दिक्षु वेदास्रवृत्तानि पञ्चमं त्वीशगोचरे ।

---

* नवमी तु क्वचित् पाठः ।

नारदीयेऽपि ।

यत्रोपदिश्यते कुण्डचतुष्कं तत्र कर्मणि ।
वेदास्रमर्धचन्द्रं च वृत्तं पद्मनिभं तथा ॥
कुर्यात् कुण्डानि चत्वारि प्राच्यादिषु विचक्षणः ।
कुण्डवेद्यन्तरं चैव सपादकरसम्मितम् ॥
पीठबद्धं तु यत् कुण्डं सुप्रमाणं सुगर्त्तकम् ।

बह्वृचपरिशिष्टे ।

भुक्तौ मुक्तौ तथा पुष्टौ जीर्णोद्धारे विशेषतः ।
सदा होमे तथा शान्तौ वृत्तं वरुणदिग्गतम् ॥

कामिके तु तत्तद्दिक्षु तत्तत्फलार्थं कुण्डोक्तिर्यथा ।

ऐन्द्र्यां स्तम्भे चतुष्कोणे अग्नौ भोगे भगाकृतिः ।
चन्द्रार्धं मारणे याम्ये नैर्ऋते त्रित्रिकोणकम् ॥
वारुण्यां शान्तिके वृत्तं षट्सु उच्चाटनेऽनिले ।
उदीच्यां पौष्टिके पद्मं रौद्र्यामष्टास्रमुक्तिदम् ॥

सर्वेषु चैतेषु होमानुसारेण हस्तादिमात्रं चेत्रफलमुपकल्पनीयम् ।

तदुक्तं भविष्यपुराणे ।

मुष्टिमानं शतार्धे तु शते चारत्निमात्रिकम् ।
सहस्रे त्वथ होतव्ये कुर्यात् कुण्डं करात्मकम् ॥
द्विहस्तमयुते तच्च लक्षहोमे चतुःकरम् ।
अष्टहस्तात्मकं कुण्डं कोटिहोमेषु नाधिकम् ॥

'मुष्टिमानमिति' बद्धमुष्टिहस्तमात्रमित्यर्थः ।

इदानीं चतुरस्रादिकुण्डानामुद्धारक्रमोऽभिधीयते । चतुरस्रं तावदाह विश्वकर्मा ।

कृत्वा प्राक्सूत्रमर्धाङ्कं दक्षिणोत्तरमत्स्ययोः ।

न्यस्यं सूत्रं ततः कोणैरङ्कितैश्चतुरस्त्रकम् ॥

पूर्वं केनाप्युपायेन प्राचीं निश्चित्य प्राक्पश्चिमायतां रेखामालिख्य तामर्धभागे लाञ्छयित्वा दक्षिणोत्तरदिशोर्मत्स्यद्वयं कुर्यात्। सूत्रोपरि सूत्रान्तरनिपातनात् स्वस्तिकमध्याकृतिः शिल्पशास्त्रेषु मत्स्य इत्युच्यते। मत्स्यद्वयनिष्पत्तिश्चात्रैवं कार्या। पूर्वोक्तरेखापरिमितस्य सूत्रस्यादिं तस्या एव रेखाया मूले निधाय तत्सूत्रान्तरं परिभ्रम्य वृत्तं रचयेत्। तस्या एव रेखाया अपरप्रान्ते तस्यैव सूत्रस्यादिं निधाय तत्सूत्रान्तं परिभ्रम्य द्वितीयं तं कुर्यात्। एवं वृत्ते द्वये कृते दक्षिणोत्तरदिशोर्मत्स्यद्वयं निष्पद्यते। अथ मत्स्यद्वये पूर्वोक्तरेखालाञ्छने चैकं सूत्रं निपात्य दक्षिणोत्तरायतां रेखां लिखेत्। एवं दिक्षु साधितासु विदिक्साधनार्थं कोणान् लाञ्छयेत्। तत्राऽयं प्रकारः। पूर्वनिष्पन्नरेखाप्रान्तचतुष्टयस्य प्रत्येकं पार्श्वद्वये चिकीर्षितपरिमाणस्यार्धमर्धं निधाय तत्सन्धौ कोणलाञ्छनानि कुर्यात्। ततः कोणलाञ्छनेषु सूत्रचतुष्टयनिपातनात् पूर्वदिश्युदङ्मुखयोनिकं चतुरस्रं कुण्डं कुर्यात्।

## योन्याकारादीनामुद्धारश्चतुरस्रक्षेत्रैकस्तु कामिकशास्त्रे ।

पञ्चमांशं पुरो न्यस्य मध्ये वेदांशमानतः ।
भ्रमादश्वत्थपत्राभं कुण्डमाग्नेयमुच्यते ॥

क्षेत्रस्य पञ्चमभागं पुरः प्राच्यां दिशि विन्यस्य मध्ये कोणसूत्रस्येति शेषः। 'वेदांशः' तुरीयांशः। 'भ्रमात्' सूत्रान्तपरिभ्रमणेनाऽश्वत्थपत्राकारं कुण्डमाग्नेय्यांदिशि कुर्यादिति। तत्राऽयं निर्माणप्रकारः। पूर्वोक्तन्यायेन समचतुरस्रीकृतस्य क्षेत्रस्य पश्चिमरेखामध्यात् पूर्वरेखामध्यभेदिनीं क्षेत्रसूत्रपञ्चमांशाधिकां गर्भरेखामालिख्य नैर्ऋत्यदेशे कोणसूत्रान्तरीयांशे लाञ्छयित्वा तल्लाञ्छनोपरि विन्यस्तादेः सूत्रस्य पूर्वोक्तगर्भरेखामूलाविन्यस्तं प्रान्तं परिभ्रम्य बहिर्वृत्तार्धं निष्पाद्य वायव्यकोणेऽप्येवमेव वृत्तार्धं रचयेत्। ततो गर्भरेखाप्रान्ताद्वृत्तद्वयप्रान्तस्पर्शि सूत्रद्वयं निपात्य पिप्पलपत्राकारमाग्नेयदिश्युदङ्मुखयोनिकं योनिकुण्डं विदध्यात्।

चतुरस्रे ग्रहैर्भक्ते त्यक्त्वाऽऽद्यन्तौ तदंशकौ ।
मध्यसप्तांशमाने तु कुण्डं खण्डेन्दुवत् क्रमात् ॥

चतुरस्रे क्षेत्रे ग्रहैर्नवभिर्विभक्ते आद्यन्तौ त्यक्त्वाऽवशिष्टसप्तमांशमानेन सूत्र-

वमध्यात् खण्डेन्दुसदृशं कुण्डं कुर्यात्। अत्रैवं कृतिः। चतुरस्रं क्षेत्रं नवधा विभज्य तत्र प्रथमोऽन्तिमश्चेति भागद्वयं परित्यज्याऽवशिष्टसप्तभागादिमरेखागर्भदेशे सूत्रादिं निधाय तस्यैव भागसप्तकस्यान्तिमरेखागर्भदेशे सूत्रान्तं निवेश्य तत्सूत्रपरिभ्रमणेन प्रथमरेखातुल्यं विश्रान्तप्रान्तवृत्तार्धं विरचयेत्। अथ प्रथमरेखाप्रान्तद्वयमपि वृत्तार्धे संयोज्य दक्षिणदिगवस्थितमुत्तराशाभिमुखयोनिकं खण्डं चन्द्रखण्डं विदध्यात्।

त्रिभागवृद्धितो मत्स्यैस्त्रिभिर्नैशाचरं भवेत्।

स्थानत्रये तृतीयांशत्रयं वृद्ध्या मत्स्यत्रयेण नैशाचरं नैर्ऋत्यदिक्सम्बन्धि कुण्डं कुर्यात्। इहाऽयं सम्प्रदायः। पूर्ववत् समचतुरस्रं क्षेत्रं निर्माय तत्तिरश्चीनपश्चिमरेखामध्यात् तिर्यगवस्थितपूर्वरेखामध्यभेदिनीं क्षेत्रसूत्रतृतीयभागाधिकां गर्भरेखामालिख्य पूर्वोक्तपश्चिमरेखाप्रान्तद्वयमपि क्षेत्रसूत्रतृतीयभागाधिकं कुर्यात्। ततो गर्भरेखाप्रान्तात् पूर्वोक्तपश्चिमरेखाप्रान्तद्वयमपि क्षेत्रसूत्रतृतीयभागाधिकं कुर्यात्। ततो गर्भरेखाप्रान्तात् पूर्वोक्तपश्चिमरेखाप्रान्तद्वयस्पर्शि सूत्रद्वयं निपात्य नैर्ऋत्यदिशि पूर्वाभिमुखयोनिकं त्रिकोणं कुण्डमुत्पादयेत्। एवं च विधीयमाने स्थानत्रये तृतीयांशत्रयवृद्धिस्तत्रैवमत्स्यत्रयमपि निष्पद्यत इति।

कर्मार्धाष्टांशसंन्यासाद्वृत्तं कुण्डमिहोदितम्।

कर्मसूत्रार्धस्य योऽष्टमांशस्तस्य संन्यासात् वृत्तं कुण्डं स्यादिति। अत्रैवं रचनाप्रकारः। चतुरस्रे क्षेत्रे कोणात् कोणान्तरगामिनः सूत्रस्यार्धं कोणार्धशब्दवाच्यमष्टधा विभज्य यावानष्टमो भागस्तावन्तं भागं चतुर्दिक्षु बहिर्विन्यसेत्। ततः क्षेत्रगर्भदेशे सूत्रादिं निधाय बहिःस्थिताष्टमभागविन्यस्तं तस्यैव सूत्रस्य प्रान्तं सर्वतः परिभ्रम्य पश्चिमदिशि पूर्वाभिमुखयोनिकं वृत्तकुण्डं कुर्यात्।

षड्भागवृद्धितो मत्स्यैश्चतुर्भिः स्यात् षडस्रकम्।

क्षेत्रपार्श्वयोः प्रत्येकं षष्ठभागवृद्धं कृत्वाऽवशिष्टदिशोर्मत्स्यचतुष्टयमुत्पाद्य सूत्रषट्कपातात् षडस्रकुण्डनिष्पत्तिरिति। अत्रैवं सम्प्रदायः। समचतुरस्रं क्षेत्रं षोढा विभज्य यावान् षष्ठो भागस्तावता मानेन क्षेत्रस्य दक्षिणोत्तरपार्श्वे समन्ताद्वर्धयित्वा तदेवक्षेत्रमायतचतुरस्रं सम्पादयेत्। अथानन्तरोक्तपार्श्वद्वयरेखास्पर्शिनीं दक्षिणोत्तरायतां गर्भरेखां रचयेत्। ततः क्षेत्रमध्यादुत्तरपार्श्वरेखामध्याच्च पूर्वोक्तगर्भरेखार्धपरिमितमेकैकं

सूत्रं निपात्य पूर्वशानदिशोरन्तराले मत्स्यमुत्पाद्य तेनैव प्रकारेण पश्चिमवायव्ययोरन्तराले मत्स्यं कुर्यात् । अथ भूयोऽपि क्षेत्रमध्याद्दक्षिणपार्श्वरेखामध्याच्च प्रागुक्तगर्भरेखाप्रान्तद्वयाल्लाञ्छनचतुष्टयस्पर्शि सूत्रं चतुष्टयं निपातयेत् । एवं लाञ्छनानन्तरालस्थितमूत्रद्वयेन सह सूत्रषट्कप्रयोगाद्वायव्यदिशि प्राङ्मुखयोनिकं षट्कोणकुण्डं कुर्यात् ।

चतुरस्राष्टभागेन कर्णिका स्याद्विभागशः ।
तद्बहिस्त्वेकभागेन केसराणि प्रकल्पयेत् ॥
तृतीये दलमध्यानि तुरीये दलकोटयः ।
भ्रमणात् पद्मदलं स्याद्दलाग्रं दर्शयेद्बहिः ॥

चतुरस्रस्य अष्टधा विभक्तस्य मध्ये अष्टमभागेन कर्णिका स्यात् । कर्णिकाया बहिः परिधिस्थे द्वितीये अष्टमभागविन्यासे केसराणि स्युः । केसराद्बहिः परिधिस्थिते तृतीये अष्टमभागे विन्यासे दलमध्यानि कल्पयित्वा चतुर्थे दलकोटीं विधाय चतुरस्राद्बहिर्दलाग्राणि स्पर्शयेत् । अत्राप्यष्टमभागेनेति सम्बध्यते । 'विभागशः' विभागे विभागे सर्वदिग्भागेष्वित्यर्थः । भ्रमणात् सूत्रस्येति शेषः । एतच्च पद्मद्वयं सर्वत्र योजनीयम् ।

अयमर्थः । चतुरस्रं क्षेत्रं प्रागग्राभिरुदगग्राभिश्च रेखाभिरष्टधा विभज्य मध्यदेशे लाञ्छयित्वा क्षेत्राद्बहिश्चतुर्दिक्षु समन्तादपरमष्टभागं विन्यसेत् । सत्येवं लाञ्छनात् परितः प्रतिदिशं पञ्चपञ्चाष्टमभागावधि रेखा भवन्ति । ततः पूर्वोक्तलाञ्छनोपरिविन्यस्तादेस्तत्तद्रेखाविन्यस्तप्रान्तस्य च सूत्रस्य परिभ्रमणात् पञ्चवृत्तानि सम्पाद्य वृत्तातिरिक्तरेखाः परिमार्जयेत् । ततः प्रथमे वृत्ते कर्णिका । द्वितीये केसराणि । तृतीये दलमध्यानि । चतुर्थे दलकोटयः । पञ्चमे दलाग्राणीति कृत्वा अष्टदलं पूर्वाभिमुखयोनिकं पद्मकुण्डमुत्तरदिशि कुर्यात् ।

## इदानीमेतदेव कुण्डं प्रकारान्तरेणोच्यते ।

वृत्तकुण्डं समं चान्यदथ वान्यप्रकारतः ।
वृत्तकुण्डं पुरा कृत्वा चतुर्धा मेखलां भजेत् ॥
उत्सेधं च तथा कृत्वा कर्णिका सार्धका भवेत् ।
अवशिष्टं दलं वेददलमष्टदलं तु वा ॥

यथा प्रतीच्यां दिशि वृत्तकुण्डमभिहितमिहाऽपि तथैव कृत्वा तन्मध्ये यथा विभागं पद्मकुण्डं कुर्यादिति ।

अथवेत्यादिना तृतीयः प्रकार उच्यते । पूर्वं वृत्तकुण्डमेव आमेखलं मेखलासवधीकृत्य अन्तश्चतुर्धा भजेत्। वृत्तकुण्डमध्ये अन्यस्याऽपि समभागस्य वृत्तत्रयस्य करणाच्चतुर्थक्षेत्रविभागः कार्य इत्यर्थः। ततः क्षेत्रमध्ये सार्धभागेन विस्तृता कर्णिका विधेया। 'उत्सेधं च तथा कृत्वेति' कर्णिकाया उच्छ्रयमपि सार्धभागेन कृत्वेत्यर्थः। अवशिष्टेन सार्धभागद्वयेन केसरव्यतिरिक्तानि दलान्येव कुर्यात् । एवं चतुर्दलमष्टदलं वा पद्मकुण्डं कुर्यात् ।

क्षेत्राद्द्वादशमं भागं चतुर्दिक्षु तदन्तरे ।
विन्यस्य तत्प्रमाणेन तुर्यास्रमपरं नयेत् ॥
तस्य कर्णप्रमाणेन तद्भुजेष्वपि लाञ्छयेत् ।
तत्राष्टसूत्रसंयोगादष्टास्रं कुण्डमुच्यते ॥

द्वादशधा विभक्तस्य क्षेत्रस्य यावान् द्वादशो भागस्तावन्तं भागं चतुर्दिक्षु विन्यस्य तदन्तरे तस्य क्षेत्रस्य अन्तरे बहिःप्रदेशे "अन्तरं बहिर्योगोपसंव्यानयोरिति-ज्ञापकात्" अन्तरशब्दोऽत्र बहिर्वचनः । 'तत्प्रमाणेनेति' तस्य बहिर्विन्यस्तद्वादशभागस्य परिमाणेन अपरं द्वितीयं तुर्यास्रं चतुरस्रं नयेत् प्रणयेत् कुर्यादिति यावत्। 'तुर्यास्रमिति' स्वार्थिकोऽत्र पूरणप्रत्ययः । 'तस्य कर्णप्रमाणेनेति' कोणात् कोणान्तरस्पर्शि सूत्रं शिल्पशास्त्रेषु कर्ण इति प्रसिद्धम्। इह तु क्षेत्रगर्भादारभ्य चतुष्कोणगामिनः पृथगेव चत्वारः कर्णा इत्यभिप्रायेण कर्णार्धमपि कर्णशब्देनोक्तम् ।

तेनाऽयमर्थः । बाह्यस्थितचतुरस्रस्य गर्भदेशावधिर्यावान् कर्णस्तावता मानेन तद्भुजेषु तस्य कर्णस्य भुजेषु लाञ्छयेत्। अत्र बाह्यचतुरस्रसूत्राण्येव कर्णोभयपार्श्ववर्तीनि निजभुजाकारतया भुजशब्देनोच्यन्ते । अयमाशयः । बाह्यचतुरस्रसम्बन्धिन्येकस्मिन् कोणे कर्णार्धपरिमितस्य सूत्रस्यादिं निधाय तत् सूत्रं चतुरस्ररेखोपरि प्रसार्य सूत्रप्रान्ते लाञ्छयेत् । एवं प्रतिकोणं सूत्रादिं निधाय प्रातिलोम्यानुलोम्येन सूत्रप्रसारणात् तत्तत्प्रान्ते लाञ्छयन् प्रतिदिशं लाञ्छनद्वयकरणाद्दिक्चतुष्टयेन लाञ्छनेषु सूत्राष्टकनिपातनादष्टास्रकुण्डं कुर्यादिति ।

अयमिह निर्माणप्रकारः । पूर्ववच्चतुरस्रीकृतस्य क्षेत्रस्य बहिश्चतुर्दिक्षु द्वादशमं भागं विन्यस्य तत्परिमाणेनापरं चतुरस्रं कुर्यात् । अथ तदीयकर्णार्धपरिमितस्य सूत्रस्य प्रतिकोणमादिं निधाय चतुरस्ररेखोपरि प्रसारणात् तत्तत्प्रान्तेषु लाञ्छयन् दिक्चतुष्टयेन लाञ्छनाष्टकं कृत्वा तल्लाञ्छनोपरि सूत्राष्टकनिपातनादैशानदिशि पूर्वाभिमुखयोनिकमष्टास्रकुण्डं कुर्यात् ।

## इदानीं दिग्नियममन्तरेणैव तत्तत्कर्मोपयोगितया विज्ञानललितोपदिष्टं कुण्डद्वयमुच्यते ।

सप्तमांशं बहिर्न्यस्य कृत्वा वृत्तमिह भ्रमात् ।
चतुर्थभागान्न्यूनेन पूर्वक्षेत्रे च सम्मितैः ॥
धनुर्ज्याकृतिभिः पञ्चसूत्रैः पञ्चास्रकुण्डकम् ।
होमे प्रशस्यते भूतशाकिनीग्रहनिग्रहे ॥

चतुरस्रस्य क्षेत्रस्य बहिःप्रदेशे चतुर्दिक्षु क्षेत्रसप्तमांशं विन्यसेत् । ततः क्षेत्रगर्भविन्यस्तादेः बाह्यस्थितसप्तमांशोपरि विन्यस्तप्रान्तस्य सूत्रस्य सर्वतः परिभ्रमणाद्वृत्तं निष्पादयेत् । 'पूर्वक्षेत्रेणेति' बहिःस्थितवृत्तापेक्षया पूर्वक्षेत्रशब्देनान्तरं चतुरस्रक्षेत्रमेवोच्यते । ततश्चायमर्थः । आन्तरचतुरस्रस्य यद्दैर्घ्यं तत् स्वकीयचतुर्थभागन्यूनं कृत्वा यन्मानं भवति तावता मानेन परिमितं सूत्रं विधाय तादृशानि पञ्चसूत्राणि बाह्यवृत्तस्यान्तर्विन्यस्य सूत्रसन्धौ कोणं कुर्यात् । तानि च पञ्च सूत्राणि प्रत्येकं प्रान्तद्वयसंस्पृष्टवृत्तत्वाद्धनुर्ज्याकृतीनि धनुरारूढमौर्वीसदृशानि स्युः । ततः पञ्चसूत्रातिरिक्तं सर्वं परिमृज्य पञ्चास्रकुण्डं रचयेत् । तच्च ग्रहनिग्रहादिहोमे प्रयोज्यम् ।

दशमांशं बहिर्न्यस्य कृत्वा वृत्तमिह भ्रमात् ।
भक्त्वा क्षेत्रं चतुःषष्ट्या तद्भागैः त्रिंशता त्रिभिः ॥
समाय सूत्रं तादृक्षात् सप्तास्रं सूत्रसप्तकात् ।
अभिचारोपशान्त्यर्थं होमकुण्डमिति स्मृतम् ॥

इहापि चतुरस्रस्य क्षेत्रस्य दशमभागं चतुर्दिक्षु बहिर्विन्यस्य पूर्ववद्वृत्तं कुर्यात् । अथ पूर्वक्षेत्रं चतुःषष्ट्या विभज्य तेषां चतुःषष्टिसंख्यानां भागानां मध्ये त्रयस्त्रिं-

अन्त्संख्यैर्भागैः परिमितं सूत्रं कृत्वा तादृशानि सप्तसूत्राणि वृत्तस्यान्ते विन्यस्य सप्ताखं कुण्डं कुर्यात्। अत्रापि सूत्राणां धनुर्ज्याकारत्वं सूत्रसन्धौ कोणनिर्माणं सप्तसूत्रातिरिक्तपरिमार्जनं चेति पूर्ववदेव वेदितव्यम्। एतच्च कुण्डमभिचारदोषोपशमनहोमेषु प्रयोक्तव्यम्।

## आह विश्वकर्मा।

यावन्मात्रः कुण्डविस्तार उक्तस्तावत् खातस्यापि मानं प्रदिष्टम्।
यादृक् कुण्डस्याकृतिः संप्रदिष्टा तादृग्रूपं मेखला विदध्यात्॥

स्थापने सर्वकुण्डानां ध्वजायः सर्वसिद्धिदः।

सर्वेषु चैतेषु प्रोक्तमानाद्वद्धाङ्गुलयवादिन्यूनमतिरिक्तं वा विधाय ध्वजायः साधनीयः। विस्तारे दैर्घ्यगुणिते अष्टभिर्विभक्ते यद्येकः परिशिष्यते तदा ध्वजाय इति।

खातेऽधिके भवेद्रोगो हीने धेनुधनक्षयः।
वक्रकुण्डे तु सन्तापो मरणं भिन्नमेखले॥
मेखलारहिते शोकोऽभ्यधिके वित्तसंक्षयः।
भार्याविनाशनं प्रोक्तं कुण्डे योन्या विना कृते॥
अपत्यध्वंसनं प्रोक्तं कुण्डं यत् कण्ठवर्जितम्।

'खातहीने भवेद्रोग' इत्यादिना खातादिलक्षणरहितस्य कुण्डस्यानिष्टफलत्वदर्शनादिदानीं खातादीनामेव लक्षणमभिधीयते।

## तद्यथा मोहचूडोत्तरशास्त्रे।

चतुर्विंशतिमं भागमङ्गुलं परिकल्प्य तु।
चतुर्विंशाङ्गुलं हस्तं कुण्डानां परिकल्पयेत्॥
हस्तमात्रं खनेत् तिर्यगूर्ध्वं मेखलया सह।

मुष्टिमानं शतार्धमित्यादिना प्रसिद्धेनैव हस्ताङ्गुलव्यवहारेण होमानुसारात् कुण्डमानमुक्तम्। इयं तु खातादिमानकथनार्थं परिभाषा क्रियते। चिकीर्षितकुण्डक्षेत्रं चतुर्विंशतिधा विभज्य यावान् चतुर्विंशतिमो भागस्तावत्परिमाणमङ्गुलं परिकल्प्य

चतुर्विंशत्या अङ्गुलैर्हस्तं परिकल्पयेत्। ततस्तेन हस्तेन परिमितं सर्वकुण्डानां तिर्यक् खातमानं विधाय मेखलासहितस्य खातस्य तेनैव हस्तेन परिमितमूर्ध्वमानं विदध्यात्।

प्रथमेषु उक्तम्।

कुण्डं जिनाङ्गुलं तिर्यगूर्ध्वं मेखलया सह।

'जिनाङ्गुलं' चतुर्विंशत्यङ्गुलम्।

प्रतिष्ठासारसंग्रहेऽपि।

पञ्चत्रिमेखलोच्छ्रायं ज्ञात्वा शेषमधः खनेत्।

विश्वकर्मणाप्युक्तम्।

व्यासात् खातः करः प्रोक्तो निम्नस्तिथ्यङ्गुलेन तु।

'तिथ्यङ्गुलानि' पञ्चदशाङ्गुलानि खातस्य निम्नत्वम्। "उच्चता सा नवाङ्गुलैरिति" वक्ष्यमाणत्वान्मेखलात्रयपक्षे नवाङ्गुलं प्रथममेखलोत्सेध इत्युभयोश्चतुर्विंशत्यङ्गुलत्वम्।

कण्ठमानमुक्तं कालोत्तरे।

खाताद्बाह्येऽङ्गुलः कण्ठः सर्वकुण्डेष्वयं विधिः।

खातमेखलयोरन्तरालेऽङ्गुलमानेन कण्ठमोष्ठापरपर्यायं कुर्यात्।

सारसंग्रहे।

खाताद्बाह्याङ्गुलः कण्ठस्तद्बाह्ये मेखला क्रमात्।

मेखलालक्षणमुक्तं कामिके।

क्षेत्रार्कांशेन तस्योष्ठः स्यात् तद्वेदर्त्तुभागतः।

मेखलापृथुतोच्छ्रायः कुण्डाकारा तु मेखला॥

सर्वेषां तु प्रकर्त्तव्या मेखलैकात्र लाघवात्।

क्षेत्रस्य अर्कांशेन द्वादशांशेन कुण्डस्योष्ठः कण्ठशब्दवाच्यः स्यात्। तद्वेदभागतः कुण्डचतुर्थांशतो मेखलायाः पृथुता विस्तारः। तथा ऋतुभागतः षष्ठभागेन मेखलोच्छ्रायः कार्यः।

पिङ्गलामतेऽपि ।

खातादेकाङ्गुलं त्याज्यं मेखलानां स्थितिर्भवेत् ।
मेखलैकाऽथ वा तिस्रो भूतसंख्याऽथ वा प्रिये ॥

'भूतसंख्या' पञ्चसंख्या ।

उक्तं च प्रथमे ।

कण्ठाङ्गुलाद्बहिः कार्या मेखलैका षडङ्गुला ।
चतुस्त्रिद्व्यङ्गुला यद्वा तिस्रः सर्वत्र शोभनाः ॥

यदैका मेखला तदा सा विस्तारोत्सेधाभ्यां षडङ्गुला विधेया ।

एका षडङ्गुलोत्सेधविस्तारा मेखला मता ॥

इति पिङ्गलोक्तेः ।

यदा तु मेखलात्रयपक्षस्तदा क्रमेण चतुस्त्रिद्व्यङ्गुलमानाः कर्तव्याः ।

मोहचूडोत्तरे ।

मेखलात्रितयं कार्यं कोणरामयमाङ्गुलैः ।

'कोणाः' चत्वारः । 'रामाः' त्रयः । 'यमौ' द्वौ । तत्र सर्वान्तिमा द्व्यङ्गुला । मध्यस्थास्त्र्यङ्गुलाः । कुण्डकण्ठसन्निहिता चतुरङ्गुला इति । सत्येवं प्रथममेखलायाः कुण्डकण्ठादारभ्य नवाङ्गुल उत्सेधः स्यात् ।

लक्षणसंग्रहेऽपि ।

प्रथमाष्टाङ्गुला व्यासादुन्नता सा नवाङ्गुलैः ।
मध्यात् तु त्र्यङ्गुला बाह्ये तृतीया तु यमाङ्गुला ॥
मेखलाः पञ्च वा कार्याः षट्पञ्चाब्धित्रिपक्षकैः ।

प्रथमकुण्डसन्निहिता आन्तरोत्सेधनवाङ्गुला बाह्ये तु चतुरङ्गुलैव । अष्टाङ्गुला चतुरङ्गुला । 'अब्धयः' चत्वारः । 'पक्षौ' द्वौ ।

योनिलक्षणमुक्तं स्वायम्भुवे ।

मेखलामध्यतो योनिः कुण्डार्धा त्र्यंशविस्तृता ।

अङ्गुष्ठमानोष्ठकण्ठा कार्याऽश्वत्थदलाकृतिः ॥
प्रागग्नियाम्यकुण्डानां प्रोक्ता योनिरुदङ्मुखा ।
पूर्वामुखाः स्मृताः शेषा यथाशोभं समन्विताः ॥

मेखलाया गर्भदेशे कुण्डार्धदीर्घा कुण्डतृतीयांशविस्तृता योनिः कार्या । अत्रोष्ठशब्देन योन्यग्रमुच्यते । कुण्डशब्देन च योनिमेखला । अङ्गुष्ठशब्दः अङ्गुलपर्यायः । एकाङ्गुलपरिमाणेन योनेरग्रं मेखलां च कुर्यादित्यर्थः ।

विस्तारोऽष्टाङ्गुला योनेरग्रमङ्गुलसंमितम् ।

इति पिङ्गलोक्तेः ।

## नारदीये ।

कुण्डत्र्यंशप्रविस्तारा योनिरुच्छ्रयताङ्गुलम् ।
कुण्डार्धेन तु दीर्घा स्यात् कुण्डोष्ठी बोधिपत्रवत् ॥

'कुण्डोष्ठीति' यथा कुण्डे द्वादशांशेन ओष्ठो विहित एवं योनेरपि द्वादशभागेन ओष्ठः कार्य इत्यर्थः । यथा कुण्डे प्रविष्ट ओष्ठो यस्या इति । 'बोधिपत्रम्' अश्वत्थपत्रम् ।

## त्रैलोक्यसारे ।

दीर्घात् सूर्याङ्गुला नाभिस्त्र्यंशोना विस्तरेण तु ।
एकाङ्गुलोच्छ्रिता सा तु प्रविष्टाभ्यन्तरे तथा ॥
कुम्भद्वयसमायुक्ता चाश्वत्थदलवन्मता ।
अङ्गुष्ठमेखला युक्ता मध्ये*त्वाज्यघृतिस्तथा ॥
दक्षस्था पूर्वयाम्ये तु जलस्था पश्चिमोत्तरे ।
नवमस्यापि कुण्डस्य योनिर्दक्षदलस्थिता ॥

'सूर्याङ्गुलाः' द्वादशाङ्गुलाः । 'त्र्यंशोनेति' दैर्घ्यतृतीयांशन्यूनविस्तारा । एकेनाङ्गुलेनोच्छ्रिता तथा एकेनाङ्गुलेन कुण्डमध्ये प्रविष्टा । 'कुम्भद्वयसमायुक्तेति' पूर्वा-

---

* आज्यस्थितिरितिक्वचित् पाठः ।

त्याग्नेयकुण्डस्य तुल्याकृतेर्योनेर्बुध्नदेशस्थितं वृत्तद्वयमेव गजकुम्भाकृतित्वात् कुम्भश-ब्देनोक्तम्। तेनाऽत्र कुम्भस्थलाकृतिघटद्वयं मृत्पिण्डद्वयं वा स्थाप्यमिति तद्वाह्यम्। 'अङ्गुष्ठमेखलेनेति' एकाङ्गुलमानया मेखलया परिवेष्टितेत्यर्थः। 'मध्येत्विति' यथा स्रुचि घृतधारणाय बिलं क्रियते तथा योनिमध्येऽपि बिलं कर्त्तव्यमित्यभिप्रायः। 'दक्ष-स्येति' पूर्वाग्नेययाम्यकुण्डेषु दक्षिणभागे उत्तराभिमुखा योनिः कार्या नैर्ऋत्यादिकुण्डेषु तु पश्चिमभागे प्राङ्मुखा विधेयाः। 'नवम इति' अष्टदिक्षु कुण्डेष्वेवं विधाय पूर्वे-शानदिशोरन्तराले यन्नवमं कुण्डं चतुर्दिक्षु वा कुण्डचतुष्टयं कृत्वा ईशानदिशि यत्प-ञ्चमं कुण्डं तयोरपि दक्षिणभागेऽपि योनिः कार्येत्यर्थः।

बह्वृचपरिशिष्टे।

अथाबुधः स धूमे तु जुहुयाद्यो हुताशने।
यजमानो भवेदन्धः सपुत्र इति च श्रुतिः॥

छन्दोगपरिशिष्टे कात्यायनः।

पाण्याहुतिर्द्वादशपर्वपूर्विका कंसादिना चेत्* स्रुचि पर्वपूरिका।
दैवेन तीर्थेन च हूयते हविः स्वङ्गारिणि स्वर्चिषि तच्च पावके॥

योऽनर्चिषि जुहोत्यग्नौ व्यङ्गारिणि च मानवः।
मन्दाग्निरामयावी च दरिद्रश्चैव जायते॥

तस्मात् समिद्धे होतव्यं नाऽसमिद्धे कथञ्चन।
आरोग्यमिच्छतायुश्च श्रियमात्यन्तिकीं तथा॥

जुहुषुश्च हुते चैव पाणिसूर्पस्रुचादिभिः।
न कुर्यादग्निधमनं कुर्यात् तु व्यजनादिना॥

मुखेनैव धमेदग्निं मुखादेषोऽभ्यजायत।
नाग्निं मुखेनेति तु यल्लौकिके योजयन्ति तत्॥

---

* कंसादिना चेदिति पाठान्तरम्।

भविष्यपुराणे।

भूमौ स्थितेन पात्रेण विष्टब्धेन च पाणिना।
वामेन यद्गृहीतं तु नान्तरीक्षे तु हूयते॥
धनायुर्दाररेखासु सोमतीर्थं तु मध्यमम्।
लाजादिहवनं तेन कर्त्तव्यं वपनं तथा॥

'वपनम्' व्रीह्यादिनिर्वापः।

वायुपुराणे।

कण्डनं पेषणं चैव तथैवोल्लेखनं सदा।
सकृदेव पितॄणां स्याद्देवानां तत् त्रिरुच्यते॥

मरीचिः।

प्रागग्राः समिधो ग्राह्या अखर्वाऽनौष्ठपाटिताः।
काम्येषु वशकर्मादौ विपरीता जिघांसति॥
विशीर्णा विदला ह्रस्वा वक्रा बहुशिराः कृशाः।
दीर्घाः स्थूला घुणैर्जुष्टाः कर्मसिद्धिविनाशकाः॥

समिदित्यनुवृत्तौ ब्रह्मपुराणे।

शमीपलाशन्यग्रोधप्लक्षवैकङ्कतोद्भवा।
अश्वत्थोडुम्बरौ विल्वश्चन्दनः सरलस्तथा॥
शालश्च देवदारुश्च खदिरश्चेति याज्ञिकाः।

छन्दोगपरिशिष्टे कात्यायनः।

नाङ्गुष्ठादधिका कार्या समित् स्थूलतया क्वचित्।
न वियुक्तार्जवा चैव न सकीटा न पाटिता॥
प्रादेशान्नाधिका न्यूना न तथा स्याद्विशाखिका।
न सपर्णा समित् कार्या होमकर्मसु जानता॥

तथा ।

> यथोक्तवस्त्वसम्पत्तौ* ग्राह्यं तदनुकारि यत् ।
> यवानामिव गोधूमा व्रीहीणामिव शालयः ॥
> आज्यं द्रव्यमनादेशे जुहोतिषु विधीयते ।
> मन्त्रस्य देवतायाश्च प्रजापतिरितिस्थितिः ॥

'अनादेशे' अविधाने। मन्त्रस्य देवतायाश्च अनादेशे प्रजापतिर्देवता प्राजापत्यो मन्त्रः समस्ता व्याहृतयश्च। यत्र तु देवतोक्ता मन्त्रश्च नास्ति तत्र मूलमन्त्रो वेदितव्यः ।

स चोक्तो गरुडपुराणे ।

> प्रणवादिनमोऽन्तं च चतुर्थ्यन्तं च सत्तम ।
> देवतायाः स्वकं नाम मूलमन्त्रः प्रकीर्त्तितः ॥

विष्णुधर्मोत्तरे ।

> दध्यलाभे पयः कार्यं मध्वलाभे तथा गुडः ।
> घृतप्रतिनिधिं कुर्यात् पयो वा दधि वा नृप ॥

पैठीनसिः ।

काण्डमूलपर्णपुष्पफलप्ररोहरसगन्धादीनां सादृश्येन प्रतिनिधिं कुर्यात् । सर्वालाभे यवः प्रतिनिधिर्भवति ।

[illegible]परिशिष्टे ।

दर्भाभावे काशः प्रतिनिधिः । अथेध्माः पलाशाश्वत्थखदिररोहितकोदुम्बराणां तदलाभे सर्ववनस्पतीनां तिलकनीपनिम्बराजवृक्षशाम्मन्यरकूकपित्थकोविदारविभीतकश्ले[illegible]कण्टकिवर्जम् । घृतमन्यार्थे प्रतिनिधिस्तदलाभे दधि पयो वा ।

इति मण्डपादिलक्षणम् ।

---

* यथोक्तवस्त्वसंप्राप्ताविति क्वचित् पाठः ।

## अथ वृद्धिश्राद्धम् ।

### आह शातातपः ।

नानिष्ट्वा पितृयज्ञेन वैदिकं किञ्चिदाचरेत् ।
तत्रापि मातरः पूर्वं पूजनीयाः प्रयत्नतः ॥
अकृत्वा मातृयागं तु वैदिकं यः समाचरेत् ।
तस्य क्रोधसमाविष्टा हिंसामिच्छन्ति मातरः ॥

### मातृगणास्तु भविष्यपुराणे निरूपिताः ।

गौरी पद्मा शची मेधा सावित्री विजया जया ।
देवसेना स्वधा स्वाहा माताऽन्या लोकमातृकाः ॥
हृष्टिः पुष्टिस्तथा तुष्टिरात्मदेवतया सह ।
पूज्या चित्रेऽथ वार्चायां वरदाभयपाणयः ॥

### विष्णुपुराणे ।

कन्यापुत्रविवाहेषु प्रवेशे नववेश्मनः ।
शुभकर्मणि बालानां चूडाकर्मादिके तथा ॥
सीमन्तोन्नयने चैव पुत्रादिमुखदर्शने ।
नान्दीमुखान् पितृनादौ तर्पयेत् प्रयतो गृही ॥

### जावालः ।

यज्ञोद्वाहप्रतिष्ठासु मेखलाबन्धमोक्षयोः ।
पुं[illegible]वृषोत्सर्गे वृद्धिश्राद्धं समाचरेत् ॥

तेन वैदिकहोमाङ्गकेषु दर्शपूर्णिमादिषु अन्येषु च वचनविशेषितेषु कर्मसु वृद्धिश्राद्धमाचरणीयम् ।

तथा तुलापुरुषादीनामपि यागसंशब्दनाल्लोकपालावाहनमन्त्रेषु च सर्वेषु ममाध्वरं पाहि यज्ञं रक्षेत्यादिशब्दप्रयोगात् सत्यपि दानरूपत्वे यागधर्मैराभवितव्यमिति तत्रापि वृद्धिश्राद्धं कर्त्तव्यम् । एवमेव सहोमकेषु धान्यपर्वतादिष्वप्यनुसन्धेयम् ।

तस्य विधिमाह कात्यायनः ।

आभ्युदयिके प्रदक्षिणमुपचारः पूर्वाह्णे पित्र्यमन्त्रवर्जं जप ऋजवो दर्भा यवैस्तिलार्थाः संपन्नमिति तृप्तिप्रश्नः सुसंपन्नमितीतरे ब्रूयुर्दधिबदराक्षतमिश्राः पिण्डा नान्दीमुखान् पितृनावाहयिष्य इति पृच्छत्यावाहयेत्यनुज्ञातो नान्दीमुखाः पितरः प्रियन्तामित्यक्षय्यस्थाने नान्दीमुखान् पितृन् वाचयिष्य इति पृच्छति वाच्यतामित्यनुज्ञातो नान्दीमुखाः पितरः पितामहाः प्रपितामहा मातामहाः प्रमातामहा वृद्धप्रमातामहाश्च प्रीयन्तामिति न स्वधां प्रयुञ्जीत युग्मानाशयेदत्र* ।

निगदव्याख्यातमेतत् ।

मार्कण्डेयपुराणे ।

नान्दीमुखानां कुर्वीत प्राज्ञः पिण्डोदकक्रियाम् ।
प्राजापत्येन तीर्थेन यच्च किञ्चित् प्रजायते ॥

अथ मधुपर्कः । आह जाबालः ।

विवाह्यमृत्विजं चैव श्रोत्रियं गृहमागतम् ।
अर्हयेन्मधुपर्केण स्नातकं प्रियमेव वा ॥

विश्वामित्रः ।

संपूज्य मधुपर्केण ऋत्विजः कर्म कारयेत् ।
अपूज्य कारयेत् कर्म किल्विषेणैव युज्यते ॥

तद्विधिस्तु कात्यायनसूत्रे ।

षडर्घ्या भवन्त्याचार्य ऋत्विग्वैवाह्यो राजा प्रियः स्नातक इति । प्रतिसंवत्सरानर्हयेयुः । यक्ष्यमाणास्त्वृत्विजः । आसनमाहार्याह साधु भवानास्तामर्चयिष्यामो भवन्तमिति । आहरन्ति विष्टरं पद्यं पादार्थमुद-

---

* युग्मानाशयेदत्रेति अत्राभ्युदयिके युग्मान् ब्राह्मणान् भोजयेदिति ।

कमर्घमाचमनीयं मधुपर्कं* दधिमधुघृतमपिहितं कांस्ये कांस्येन । अन्यस्त्रिस्त्रिः प्राह विष्टरादीनि । विष्टरं प्रतिगृह्णाति । वर्ष्मोऽस्मि समानानामुद्यतामिव सूर्यः । इमं तमभितिष्ठामि यो मा कश्चाभिदासति–इत्येनमभ्युपविशति । पादयोरन्यं विष्टर आसीनाय । सव्यं पादं प्रक्षाल्य दक्षिणं प्रक्षालयति । ब्राह्मणश्चेद्दक्षिणं प्रथमम् । विराजो दोहोऽसि विराजो दोहमशीय मयि पाद्यायै विराजो दोह इति । अर्घं प्रतिगृह्णात्यापः स्थ युष्माभिः सर्वान् कामानवाप्नवान्–इति । निनयन्नभिमन्त्रयते समुद्रं वः प्रहिणोमि स्वां योनिमभिगच्छत । अरिष्टा अस्माकं वीरामापरासेचि मत्पय–इति । अचामात्यामागन्यशसा संसृज वर्चसा । तं मा कुरु प्रियं प्रजानामधिपतिं पशूनामरिष्टिं तनूनाम्–इति । मित्रस्य त्वेति मधुपर्कं प्रतीक्षते । देवस्य त्वेति प्रतिगृह्णाति । सव्ये पाणौ कृत्वा दक्षिणस्यानामिकया त्रिः प्रयौति नमः श्यावास्यायान्नशने यत् त आविद्धं तत् ते निष्कृन्तामि–इति । अनामिकाङ्गुष्ठेन त्रिर्निरुक्षयति । तस्य त्रिः प्राश्नाति यन्मधुनो मधव्यं परमंरूपमन्नाद्यम् । तेनाहं मधुनो मधव्येन परमेण रूपेणान्नाद्येन परमो मधव्योऽन्नादोऽसानि–इति । मधुमतीभिर्वा प्रत्यृचम् । पुत्रायान्तेवासिने वोत्तरत आसीनायोच्छिष्टं दद्यात् । सर्वं वा प्राश्नीयात् । प्राग्वाऽसञ्चरे निनयेत् । आचम्य प्राणान् संमृशति वाङ्म आस्ये नसोः प्राणोऽक्ष्णोश्चक्षुः कर्णयोः श्रोत्रं बाह्वोर्बलमूर्वोरोजोऽरिष्टानि मेऽङ्गानि तनूस्तन्वा मे सह–इति । आचान्तोदकाय शासं†मादाय गौरिति त्रिः प्राह । प्रत्याह–माता रुद्राणां दुहिता वसूनां स्वसादित्यानाममृतस्य नाभिः । प्रनुवोचं चिकितुषे जनाय मागामनागामदितिं वधिष्ट मम चामुष्य च

---

* तथा च स्मृतिः ।

आज्यमेकपलं ग्राह्यं दध्नस्त्रिपलमेव च ।
मधुनः पलमेकं तु मधुपर्कः स उच्यते ॥

† शार्णमिति ग्रन्थम् ।

पाप्मानꣳहनोमीति यद्यालभेत । अथ यद्युत्सिसृक्षेन्मम चामुष्य च पाप्मा हत ॐउत्सृजत तृणान्यत्त्विति ब्रूयात् । न त्वेवामाꣳसोऽर्घः स्यात् । अधियज्ञमधिविवाहं कुरुतेत्येव ब्रूयात् । यद्यप्यसकृत्संवत्सरस्य सोमेन यजेत कृतार्घ्या एवैनं याजयेयुर्नाकृतार्घ्या इति श्रुतेः ।

अस्यार्थः । 'आसनमाहार्येत्यन्तं' सुबोधाः । 'साधु भवानि'त्याद्यर्घ्यं प्रत्यर्घ्येषणम् । आहरन्त्यर्घयितृसम्बन्धिपुरुषाभिप्रायेण बहुवचनम् ।* 'विष्टरो'ऽच्छ्वाय-पञ्चविंशतिकुशपत्रकृतः ।

तथा च परिशिष्टे ।

कतिभिस्तु भवेद्ब्रह्मा कतिभिर्विष्टरो मतः ।
पञ्चाशद्भिर्भवेद्ब्रह्मा तदर्धेन तु विष्टरः ॥
ऊर्ध्वकेशो भवेद्ब्रह्मा लम्बकेशस्तु विष्टरः ।
दक्षिणावर्त्तको ब्रह्मा वामावर्त्तस्तु विष्टरः ॥

प्रथमो विष्टर उपवेशनार्थम् । पद्य†मिति द्वितीयं विष्टरम् । पादार्थमुदकं सुखोष्णम् । 'अर्घो'‡ व्याख्यातः । आचमनीयमुदकमेव । मधुपर्कं दधिमधुघृतं कांस्यभाजने तेनैवापिहितम् । अथार्घयितृव्यतिरिक्तोऽन्य एव 'विष्टरादीनि त्रिस्त्रिः प्राह' विष्टरो विष्टरो विष्टरः प्रतिगृह्यतामित्येवम् । अर्घ्यस्तु तूष्णीमेव विष्टरं प्रतिगृह्य 'वर्ष्मोऽस्मि' इति मन्त्रेण तत्रोपविशति । 'पादयोरन्यम्' इति पाठोऽर्थेन बाध्यते§ । ततश्च पादप्रक्षालनानन्तरं द्वितीयं विष्टरदानम् । तथा चोत्तरे सूत्रे 'विष्टर आसीनाय सव्यं पादं प्रक्षाल्य दक्षिणं प्रक्षालयति' इति एकस्मिन् विष्टर आसीनस्य पादप्रक्षाल-

---

* गृह्यसूत्रभाष्ये ।

पञ्चविंशतिदर्भाणां वेण्यग्रे ग्रन्थिभूषिता ।
विष्टरे सर्वयज्ञेषु लक्षणं परिकीर्त्तितम् ॥

† पद्यमिति पद्भ्यामाक्रमणीयम् ।

‡ अर्घ उदपात्रम् ।

§ पादयोरन्यं विष्टरं ददातीति । स चायमुपदेशः प्रक्षाल्य हि पादौ विष्टरे क्रियेते तस्मात् पाद्योत्तरकालं द्वितीयं विष्टरं ददातीति पाठोऽर्थेन बाध्यते ।

नमुपदिश्यते । ब्राह्मण*श्चेदर्घ्यो भवति तदा दक्षिणं पादं प्रथमं प्रक्षालयेत् । 'विराजो दोहोऽसि' इति मन्त्रेण जलं गृहीत्वा प्रक्षालयत्यर्घ्य एव । 'आपस्थ' इति मन्त्रेणार्घं प्रतिगृह्णाति । अर्घ्यं उदकं निनयन् 'समुद्रं व' इति जपति । 'आमागन्यशसा' इति मन्त्रेणाचमति । 'मित्रस्य त्वा' इति मन्त्रेण मधुपर्कमीक्षते । 'देवस्य त्वा' इति मन्त्रेण मधुपर्कं प्रतिगृह्णाति । सर्वेषु चैतेषु त्रिस्त्रिरेतानि द्रव्याण्यभिधाय प्रतिगृह्यतामित्यर्घ्यमाहान्यः । अथाऽर्घ्यो मधुपर्कपात्रं 'सव्ये पाणौ कृत्वा दक्षिणस्यानामिकया नमः श्यावेति मन्त्रेण त्रिः प्रयौति' मधुपर्कं मिश्रयतीत्यर्थः । 'अनामिकाङ्गुष्ठेन च तूष्णीं त्रिर्निरुक्षयति' निषिञ्चतीत्यर्थः । च शब्दात् प्रयौति च । अतश्च प्रतिप्रयवणं निरुक्षणम् । एवं च त्रिर्निरुक्षणाव्यवधानात् समन्त्रकं त्रिः प्रयवणं विधेयमिति सिध्यति । 'यन्मधुन' इति 'मधुमतीभिः' वा मधुपर्कं त्रिः प्राश्नीयात् । मधुपर्के च सोमे च नोच्छिष्टो भवतीति स्मरणादुच्छिष्टस्यैव मन्त्रपाठः । अथाचम्य वाङ्म आस्य इत्यादिभिर्मन्त्रैः प्राणायतनानि संस्पृशेत् । अत्र साकाङ्क्षत्वादस्तीत्यध्याहारः । मे इत्यस्य च सर्वत्रानुषङ्गः । अरिष्टानि मेऽङ्गानि तनूरित्यत्र सन्त्वित्यध्याहारः । 'आचान्तोदकाय शासमादाय गौरिति त्रिः प्राह' इत्याचान्तोदकग्रहणात् पुनराचमनमिति केचित् । अपरे त्वाहुः । आचान्तमुदकं येन स आचान्तोदकस्तदर्थं शासादानमिति । तादर्थ्यं च पश्वालम्भनस्य तदर्थत्वात् । एतच्चार्घकर्त्रा वाच्यम् । ततो 'माता रुद्राणां' इति मन्त्रं अर्घ्यः प्रतिब्रूयात् । 'अमुष्य' इति चार्घयितुर्नाम ग्रहणम् । यद्यालभेत पाप्मानं† घातयामीतिप्रयोगः । 'अथ यद्युत्सिसृक्षेन्मम चामुष्य च पाप्मा हत उत्सृजत तृणान्यत्त्विति ब्रूयात्' । अत्राप्यर्घयितुर्नामादेशः । ॐउत्सृजत तृणान्यत्त्विति ब्रूयादिति निगदोह्यर्थमिति । 'नत्वेवामा९ सोऽर्घः स्यादधियज्ञमधिविवाहं कुरुत' इत्येवं ब्रूयात् । शेषं सुगमम् ।

## अथ पुण्याहवाचनं । आह वेदव्यासः ।

सम्पूज्य गन्धमाल्याद्यैर्ब्राह्मणान् स्वस्ति वाचयेत् ।

---

* ब्राह्मणपूर्वकत्वेन धर्मानुकथने प्राप्ते पश्चाद्ब्राह्मणाभिधानं भूयसां स्यात् सधर्मत्वमिति न्यायसूचनार्थम् ।

† 'पाप्मान९ हनोमि' इति ।

धर्मकर्मणि माङ्गल्ये संग्रामेऽद्भुतदर्शने ॥

**यमः ।**

पुण्याहवाचनं दैवे ब्राह्मणस्य विधीयते ।
एतदेव निरोङ्कारं कुर्यात् क्षत्रियवैश्ययोः ॥

**कश्यपः ।**

लोके भूतिकर्मसु वै तदादीन्येव वाक्यानि स्युर्यथा पुण्याहं सुसमृद्धमिति ।

'भूतिकर्मसु' सम्पत्करकर्मसु स्वस्तिवाचनादिष्विति यावत् । 'एतदादीनि' प्रणवादीनि ।

## पुण्याहवाचनमुक्तं बह्वृचपरिशिष्टे ।

अवनिकृतजानुमण्डलः कमलमुकुलसदृशमञ्जलिं शिरस्याधाय दक्षिणेन पाणिना सुवर्णपूर्णकलशं धारयित्वा आशिषः प्रार्थयेत् । प्रार्थनामाह । एताः सत्या आशिषः सन्तु । दीर्घा* नागा नद्यो गिरयस्त्रीणि विष्णुपदानि च । तेनायुःप्रमाणेन पुण्यं पुण्याहं दीर्घमायुरस्तु शिवा आपः सन्तु सौमनस्यमस्त्वक्षतं चारिष्टं चास्तु गन्धाः पान्तु सुमङ्गल्यं चास्त्वक्षताः पान्तु आयुष्यमस्तु पुष्पाणि पान्तु सौश्रियमस्तु ताम्बूलानि पान्तु ऐश्वर्यमस्तु दक्षिणाः पान्तु बहुदेयं चास्तु आरोग्यमस्तु दीर्घमायुः शान्तिः पुष्टिस्तुष्टिः श्रीर्यशो विद्या विनयो वित्तं बहुपुत्रं चायुष्यं चास्तु । अत्र सर्वत्र ब्राह्मणैरस्त्विति प्रत्युत्तरं देयम् । यत्कृत्वा सर्ववेदयज्ञक्रिया करणकर्मारम्भाः शुभाः शोभनाः प्रवर्त्तन्ते तमहमोङ्कारमादिं कृत्वा ऋग्यजुःसामाशीर्वचनं बहुऋषिसंमतं संविज्ञातं भवद्भिरनुज्ञातः पुण्यं पुण्याहं वाचयिष्ये । वाच्यतामिति विप्रा वदेयुः । एवमुत्तरत्राऽपि यथायोगप्रत्युत्तरम् । ततो यजमानो 'भद्रं कर्णेभिः' 'द्रविणोदा द्रविणं' 'सवितापश्चातात्' ।

---

* नदा नद्य इति पाठान्तरम् ।

'नवो नवो भवति' 'उच्चा दिवि'। आप उदन्तु जीवसे दीर्घायुत्वाय वर्चसे। यस्त्वाहृदाकीरिणामन्यमानो मर्त्यं मर्त्यो जोहवीमि जातवेदो यशो अस्मासु धेहि प्रजाभिरग्ने अमृतत्वमश्या। यस्मै त्वं सुकृते जातवेद उलोकमग्ने कृणवस्योनम्। अश्विनं सपुत्रिणं वीरवन्तं गोमन्तं रयिन्नुशते स्वस्ति। इत्येता ऋचः पुण्याहे ब्रूयात्। व्रतनियमतपःस्वाध्यायक्रतुदमदानविशिष्टानां सर्वेषां ब्राह्मणानां मनः समाधीयताम्। विप्राः समाहितमनसः स्मः। यजमानः प्रसीदन्तु भवन्तः। विप्राः प्रसन्नाः स्मः। यजमानः शान्तिरस्तु पुष्टिरस्तु तुष्टिरस्तु वृद्धिरस्तु अविघ्नमस्तु आयुष्यमस्तु आरोग्यमस्तु शिवं कर्मास्तु कर्मसिमृद्धिरस्तु वेदसमृद्धिरस्तु शास्त्रसमृद्धिरस्तु पुत्रसमृद्धिरस्तु धनधान्यसमृद्धिरस्तु इष्टसम्पदस्तु अनिष्टनिरसनमस्तु यत्पापं तत् प्रतिहतमस्तु यच्छ्रेयस्तदस्तु उत्तरे कर्मण्यविघ्नमस्तु उत्तरोत्तरमहरहरभिवृद्धिरस्तु उत्तरोत्तरक्रियाः शुभाः सम्पद्यन्तां तिथिकरणमुहूर्त्तनक्षत्रसम्पदस्तु तिथिकरणमुहूर्त्तनक्षत्रग्रहलग्नाधिदेवताः प्रीयन्तां तिथिकरणे मुहूर्त्ते स नक्षत्रे सग्रहे सदैवते प्रीयेतां दुर्गापाञ्चाल्यौ प्रीयेतां अग्निपुरोगा विश्वेदेवाः प्रीयन्तां इन्द्रपुरोगा मरुद्गणाः प्रीयन्तां वसिष्ठपुरोगा ऋषिगणाः प्रीयन्तां माहेश्वरीपुरोगा उमा मातरः प्रीयन्तां अरुन्धतीपुरोगा एकपत्न्यः प्रीयन्तां ऋषयश्छन्दांस्याचार्या वेदा यज्ञाश्च प्रीयन्ताम्। विष्णुपुरोगाः सर्वे देवाः प्रीयन्तां ब्रह्मपुरोगाः सर्ववेदाः प्रीयन्तां ब्रह्म च ब्राह्मणाश्च प्रीयन्तां श्रीसरस्वत्यौ प्रीयेतां श्रद्धामेधे प्रीयेतां भगवती कात्यायनी प्रीयतां भगवती माहेश्वरी प्रीयतां भगवती ऋद्धिकरी प्रीयतां भगवती वृद्धिकरी प्रीयतां भगवती पुष्टिकरी प्रीयतां भगवती तुष्टिकरी प्रीयतां भगवन्तौ विघ्नविनायकौ प्रीयेतां भगवान् स्वामी महासेनः सपत्निकः स सुतः स पार्षतः सर्वस्थानगतः प्रीयताम्। हरिहरहिरण्यगर्भाः प्रीयन्ताम्। सर्वाः कुलदेवताः प्रीयन्तां सर्वा ग्रामदेवाताः प्रीयन्तां हताश्च

ब्रह्मविद्विषः हताः परिपन्थिनः हताश्चास्य कर्मणो विघ्नकर्त्तारः शत्रवः पराभवं यान्तु शाम्यन्तु घोराणि शाम्यन्तु पापानि शाम्यन्तु ईतयः। शुभानि वर्धन्तां शिवा आपः सन्तु शिवा ऋतवः सन्तु शिवा अग्नयः सन्तु शिवा आहुतयः सन्तु शिवा ओषधयः सन्तु शिवा वनस्पतयः सन्तु शिवा अतिथयः सन्तु। अहोरात्रे शिवे स्यातां निकामे निकामे नः पर्जन्यो वर्षतु फलवत्योन ओषधयः पच्यतां योगक्षेमो नः कल्पताम्। शुक्राङ्गारकबुधबृहस्पतिशनैश्चरराहुकेतुसोमसहिता आदित्यपुरोगाः सर्वे ग्रहाः प्रीयन्तां भगवान् नारायणः प्रीयतां भगवान् पर्जन्यः प्रीयतां भगवान् स्वामी महासेनः प्रीयतां पुण्याहकालं वाचयिष्ये ब्राह्मणा वाच्यताम्।

उद्गातेव शकुने सामगायसि। याज्यया यजति यत्पुण्यं नक्षत्रं तद्वदकुर्वीतोपव्यूषं यदा वै सूर्य उदेति अथ नक्षत्रं नैति यावति तत्र सूर्यो गच्छेत् यत्र जघन्यं पश्येत् तावत् कुर्वीत यत्कारी स्यात् पुण्याह एवं कुरुते तानि यानि एतानि यमनक्षत्राणि यान्येव देवनक्षत्राणि तेषु कुर्वीत यत्कारी स्यात् पुण्याह एवं कुरुते।

ब्राह्मणा मम गृहे अस्य कर्मणः पुण्याहं भवन्तो ब्रुवन्तु इति स्वयं मन्दस्वरेणोक्त्वा ब्राह्मणैः ॐ पुण्याहमिति तथोक्ते पुनरेव मध्यमस्वरेणोक्त्वा तथैव तैरुक्ते पुनरेवमुच्चस्वरेणोक्ते तथैव तैरुक्ते।

स्वस्तये वायुमुपब्रुवामहे आदित्य उदितीय स्वस्तिन इन्द्रो वृद्धश्रवाः स्वस्तिनः पूषा विश्ववेदाः स्वस्तिनस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु।

अष्टौ देवा वसवः सोम्यासश्चतस्रो देव्यो रजसा श्रविष्ठाः ते यज्ञं पान्तु रजसः पुरस्तात् संवत्सरीणममृतᳪ स्वस्ति।

ब्राह्मणा इत्यादि कर्मण इत्यन्तं पूर्ववत् स्वस्ति भवन्तो ब्रुवन्तु इति त्रिः। आयुष्मते स्वस्तीति प्रतिवचनं त्रिः।

ऋद्ध्यामस्तोमं सर्वामृद्धिमृद्ध्यास्म हव्यैर्नमसोपसद्यमित्रं देवं मित्रधेयन्नोअस्तु अनुराधान हविषा वर्धयन्तः शतं जीवेम शरदः सनीलास्त्रीणि त्रीणि वै देवानामृद्ध्यानि त्रीणि छन्दांसि त्रीणि सवनानि त्रय इमे लोकास्तद्ध्यामेव तद्वीर्यं एषु लोकेषुप्रतितिष्ठति ।

पूर्ववत् ऋद्धिं भवन्तो ब्रुवन्तु इति त्रिः । ॐऋद्ध्यतां मिति त्रिः ।

श्रिये जातः श्रिय एत्विनं यस्मिन् ब्रह्माध्यजयत् सर्वमेतदमुञ्च लोकमिदमूचसर्वन्तन्नोनक्षत्रमभिजिद्विजित्यश्रियं दधात्वहृणीयमान अदबुध्नीयमन्त्वं मे गोपाय यमृषयस्त्रयीविदो विदुः यजुः ऋचः सामानि यजूंषि सा हि श्रीरमृतायताम् ।

अस्य कर्मणः श्रीरस्त्विति भवन्तो ब्रुवन्त्विति त्रिर्ब्रूयात् । अस्तु श्रीरिति विप्राश्चिः । पुण्याहवाचनसमृद्धिरस्तु । भगवान् प्रजापतिः प्रीयताम् ।

इति श्रीमहाराजाधिराजश्रीमहादेवस्य समस्तकरणाधीश्वर-
सकलविद्याविशारदश्रीहेमाद्रिविरचिते चतुर्वर्गचिन्ता-
मणौ दानखण्डे परिभाषाप्रकरणम् ॥ ३ ॥

## अथ दानफलानि ।

आचारैः स्पृहणीयतां गमयता जन्म द्विजन्मान्वये
कीर्त्तेः सर्वपथीनतां रचयता तैस्तैर्गुणानां गणैः ।
तत् किञ्चित् परमं महः कलयता मीमांसया छन्दसां
येनोच्चैःफलदायिदानमहिमन्यात्मेव दृष्टान्त्यते ॥
यो हेमाद्रिः शिवं स्तौति सर्वदा नागमोदितम् ।
सोऽद्य दानफलं प्राह सर्वदानागमोदितम् ॥

### तत्र सामवेदोपनिषदि ।

दानेन सर्वान् कामानवाप्नोति । चिरजीवित्वं ब्रह्मचारी रूपवानहिंस्र उपपद्यते । स्वर्गं पर्णाशनात्* दिविचरः पयो भक्षस्थानवीरासनाद्वित्त-वान् पितृमातृगुरुशुश्रूषाध्यानवान् स्वर्गीयः काञ्चनदानेनेति ।

### आह भगवान् ऋग्वेदः ।

उच्चा दिवि दक्षिणावन्तो अस्थुर्ये अश्वदाः सह ते सूर्येण हिरण्य-दा अमृतत्वं भजन्ते वासोदाः सोम प्रतिरन्त आयुरिति ।

### हारीतः ।

आपो ददत् तृषमभिजयत्यात्मानं च निष्क्रीणाति । अन्नदानादसून् निष्क्रीणाति अन्नवानन्नादोऽन्नपतिश्च भवति । वस्त्रदानाद्वचो निष्क्रीणाति सुरूपोऽनग्नो वस्त्रभाग्भवति । हिरण्यप्रदानात् तेजो निष्क्रीणाति सुतेजाः श्रीमान् हिरण्यभाग्भवति । गोप्रदानाद्वाचो निष्क्रीणाति सुवाग्विपाप्मा गोभाक् च भवति । अनडुत्प्रदानात् प्राणान् निष्क्रीणात्यरोगो बलवान् धुर्य-

---

* पर्णाशनादिति क्वचित् पाठः ।

भाक् च भवति। रथप्रदानाच्छरीरं निष्क्रीणाति भूत्यविविधविमानभाग्भवति। शय्याप्रदानात् सुखं निष्क्रीणाति यानशयनासनविविधसुखश्रीभाग्भवति। अपरिमितप्रदानादपरिमितयोषं पुष्णाति अपरिमितान् कामानवाप्नोति।

तद्विविधं भवति अविज्ञातदानं च विज्ञातदानं च। यदविज्ञातविदुषे तदविज्ञातं दानम्। अथ यद्विज्ञातविदुषे सब्रह्मचारिणे वैश्वानरमाद्दानाय यद्ददाति प्रतिगृह्णाति च तद्विज्ञातदानं तदप्येतद्यजुष्युक्तमिदं कस्मा अदादिति।

आत्मानं निष्क्रीणाति आत्मानमेव ददातीत्यर्थः। अनेन प्रकारेण जलादिदानमेव स्तूयते।

## विष्णुः।

तैजसानां पात्राणां प्रदानेन पात्री भवति। कामानां मधुघृततैलदानेनारोग्यमौषधप्रदानेन च लवणप्रदानेन लावण्यम्। धान्यप्रदानेन तुष्टिः। सस्यदानेन च तथा। इन्धनप्रदानेन दीप्ताग्निर्भवति। संग्रामे सञ्जयमाप्नोति। आसनदानेन स्थानम्। शय्यादानेन भार्याम्। उपानत्प्रदानेनाश्वतरीयुतं रथम्। क्षेत्रप्रदानेन स्वर्गम्। तालवृन्तचामरप्रदानेनादुःखित्वम्। पुष्पप्रदानेन ज्यायान् भवति। अनुलेपनप्रदानेन कीर्त्तिमान् भवति।

## आह मनुः।

वारिदस्तृप्तिमाप्नोति सुखमक्षय्यमन्नदः।
तिलप्रदः प्रजामिष्टां दीपदश्चक्षुरुत्तमम्॥
भूमिदः सर्वमाप्नोति दीर्घमायुर्हिरण्यदः।
गृहदोऽग्र्याणि वेश्मानि रूप्यदो रूपमुत्तमम्॥
वासोदश्चन्द्रसालोक्यमश्विसालोक्यमश्वदः।

अनडुहः श्रियं पुष्टां गोदो ब्रध्नस्य विष्टपम् ॥
यानशय्याप्रदो भार्यामैश्वर्यमभयप्रदः ।
धान्यदः शाश्वतं सौख्यं ब्रह्मदो ब्रह्मसार्ष्टिताम् ॥

'ब्रह्मसार्ष्टितां' ब्रह्मसमानगतित्वम् ।

याज्ञवल्क्यः ।

भूदीपाश्वान्नवस्त्राम्भस्तिलसर्पिःप्रतिश्रयान् ।
नैवेशिकस्वर्णधुर्यान् दत्त्वा स्वर्गे महीयते ॥
गृहधान्याभयोपानच्छत्रमाल्यानुलेपनम् ।
यानं वृक्षं श्रियं शय्यां दत्त्वाऽत्यन्तं सुखी भवेत् ॥

'प्रतिश्रयः' प्रवासिनामाश्रयः । 'नैवेशिकं' विवाहप्रयोजनकं द्रव्यम् ।

तथा ।

श्रान्तसम्वाहनं रोगिपरिचर्या सुरार्चनम् ।
पादशौचं द्विजोच्छिष्टमार्जनं गोप्रदा समम् ॥

यमः ।

दत्त्वा प्रतिश्रयं लोके तथा दत्त्वैव चाऽभयम् ।
तथा दत्त्वा क्षितिं विप्रे ब्रह्मलोके महीयते ॥
छत्रदो गृहमाप्नोति गृहदो नगरं तथा ।
तथोपानत्प्रदानेन रथमाप्नोत्यनुत्तमम् ॥
इन्धनानां प्रदानेन दीप्ताग्निर्भुवि जायते ।
गवां ग्रासप्रदानेन सर्वपापैः प्रमुच्यते ॥
रुक्मदः सर्वमाप्नोति रूप्यदो रूपमुत्तमम् ।
वासोदश्चन्द्रसालोक्यं सूर्यसालोक्यमश्वदः ॥
राजोपकरणं दत्त्वा रत्नानि विविधानि च ।
नगरं च तथा दत्त्वा राजा भवति भूतले ॥

**तथा ।**

देवमाल्यापनयनं देवागारसमूहनम् ।
अर्चनं चैव विप्राणां द्विजोच्छिष्टापकर्षणम् ॥
पादशौचप्रदानं च प्रकल्प्य परिचारणम् ।
पादाभ्यङ्गप्रदानं च श्रान्तसम्वाहनं तथा ॥
गवां कण्डूयनं चैव ग्रासदानाभिवन्दने ।
भिक्षादीपप्रदानं च तथैवाऽतिथिपूजनम् ॥
एकैकस्य फलं प्राह गोप्रदानसमं यमः ।
यस्तुसम्भृत्य सम्भारं ब्राह्मणेभ्यः प्रयच्छति ॥
तस्य पुण्यकृतान् लोकान् न वक्तुं प्रभवाम्यहम् ।

'सम्भारो' यज्ञविवाहाद्युपकरणद्रव्यम् ।

फलमूलानि पानानि शाकानि विविधानि च ।
यानानि दत्त्वा विप्रेभ्यो मुदा युक्तः सदा भवेत् ॥

**तथा ।**

धान्योदकप्रदायी च सर्पिदः सुखमश्नुते ।
विप्रेभ्यः पादुके दद्याच्छयनान्यासनानि च ॥
विविधानि च दानानि दत्त्वा च नृपतिर्भवेत् ।

**तथा ।**

अन्नदस्तु भवेच्छ्रीमान् सुतृप्तः कीर्त्तिमानपि ।
तैलमामलकं यच्छन् पादाभ्यङ्गं तथैव च ॥
नरः सुतृप्तस्तेजस्वी सुखवाँश्चैव जायते ।

**तथा ।**

मृत्तिकां गोशकृद्दर्भानुपवीतं तथोत्तरम् ।

दत्त्वा गुणवते विप्रे कुले जायेत चोत्तमे ॥
मुखवासं तु यो दद्याद्दन्तधावनमेव च ।
शुचिः स्यात् सुभगो वाग्मी सुखी चैव सदा भवेत् ॥
पादशौचं तथा यानं शौचं च गुदलिङ्गयोः ।
यः प्रयच्छति विप्राय शुचिः शुद्धः सदा भवेत् ॥
गन्धौषधमथाभ्यङ्गं माक्षिकं लवणं तथा ।
यः प्रयच्छति विप्राय सौभाग्यं स तु विन्दति ॥

अत्रिः ।

दुर्भिक्षे ह्यन्नदाता च सुभिक्षे च हिरण्यदः ।
पानीयदस्त्वरण्ये च ब्रह्मलोके महीयते ॥

देवलः ।

श्रान्तायाऽन्नप्रदः स्वर्गं विमानेनाऽधिरोहति ।
प्राप्नोति दशगोदानफलं* रोगिप्रतिक्रियः ॥
प्रक्षाल्य पादौ विप्राय लभेद्गोदानजं फलम् ।
चन्दनं तालवृन्तं च फलानि कुसुमानि च ॥
ताम्बूलमासनं शय्यां दत्त्वात्यन्तं सुखी भवेत् ॥

कात्यायनः ।

पादाभ्यङ्गैः शिरोभ्यङ्गैर्दानमानार्चनादिभिः ।
मृष्टवाक्यैर्विशेषेण पूजनीया द्विजोत्तमाः ॥

वायुपुराणे ।

चन्दनानां प्रदातारः शङ्खानां मौक्तिकस्य च ।
पापकर्तॄनपि पितॄंस्तारयन्ति यथा श्रुतिः ॥

---

* भोगिप्रतिक्रिय इति पाठान्तरम् ।

महाभारते ।

दासीं दासमलङ्कारं क्षेत्राणि च गृहाणि च ।
ब्रह्मदेयां सुतां दत्त्वा स्वर्गमाप्नोत्यसंशयम् ॥
लभते च शिवस्थानं वलिपुष्पप्रदो नरः ।

तथा ।

धुर्यप्रदानेन गवां तथाऽश्वैर्लोकानवाप्नोति नरो वसूनाम् ।
छत्रप्रदानेन गृहं वरिष्ठं यानं तथोपानहसम्प्रदानात् ॥
वस्त्रप्रदानेन फलं सुरूपं गन्धप्रदानात् सुरभिर्नरः स्यात् ।
भिक्षान्नपानीयरसप्रदाता प्राप्नोति सर्वांश्च रसान् प्रकामान् ॥
प्रतिश्रयाच्छादनसंप्रदाता प्राप्नोति तान्येव न संशयोऽत्र ।
स्रग्धूपगन्धानुविलेपनानि स्नानानि माल्यानि च मानवो यः ॥
दद्याद्द्विजेभ्यः सभवेदरोगस्तथाभिरूपश्च नरेन्द्र लोके ।

तथा ।

चन्दनागुरुधूपाँश्च विप्रेभ्यो यः प्रयच्छति ।
ताम्बूलं च स्रजं चैव स स्वर्गं प्रव्रजेन्नरः ॥
तिलान् ददच्च पानीयं दीपमन्नप्रतिश्रयम् ।
सतां स्वर्गेऽसूनामेतत्सूनृतानि वचांसि च ॥
सान्त्वदः सर्वमाप्नोति सर्वशोकैर्विमुच्यते ।
प्रेक्षणीयप्रदानेन स्मृतिं मेधां च विन्दति ॥

आदित्यपुराणे ।

धर्मशास्त्रप्रदातारः सत्रदानरताश्च ये ।
तीर्थतडागकूपादिनौकासेतुप्रदाश्च ये ॥
स्कन्धेन तारयेद्यस्तु तृषार्त्तानां जलप्रदः ।

पक्वान् ददाति केदारान् सफलाँश्चैव पादपान् ॥
षष्टिकोटिसहस्राणि अर्बुदानां च वै त्रयम् ।
क्रीडन्ति ते स्वर्गपुरे एतदुक्तं द्विजोत्तम ॥

तथा ।

अश्वं वा यदि वा युग्यं शोभने वाऽथ पादुके ।
ददाति यः प्रदानं वै ब्राह्मणेभ्यः सुसंयतः ॥
तस्य दिव्यानि यानानि रथा ध्वजपताकिनः ।
दुष्टः पन्था न चैवेह भविष्यति कथञ्चन ॥
अन्नपानाश्वगोवस्त्रच्छत्रशय्यासनानि च ।
प्रेतलोके प्रशस्तानि दानान्यष्टौ विशेषतः ॥

लिङ्गपुराणे ।

वस्त्रं जलं पवित्रं च दत्वाऽथ [illegible] ।
स महाभोगमाप्नोति अन्ते योगं च शाश्वतम् ॥
आसनं शयनं यानं यो ददाति यशस्विने ।
समं सर्वेषु भूतेषु तस्य दुःखं न विद्यते ॥

कालिकापुराणे ।

अभ्यङ्गमिन्धनं नीरं शयनासनमेव च ।
दद्याच्च वाह्निकं चैव तमुद्दिश्य दिने दिने ॥
कायिनामन्नदानं तु तदुद्दिश्य निवेदयेत् ।
अथ वा किं प्रलापेन यत् किञ्चित् सुकृतं भुवि ॥
कुर्वंस्तत्पदमाप्नोति शिवमुद्दिश्य लीलया ।

देवीपुराणे ।

द्रव्यं भूहेमगोधान्यं तिलवस्त्रघृतादिकम् ।

विधिना चोपवासेन एकान्ननक्तभोजनात् ॥
शुचिना भावपूतेन क्षान्त्या सत्यव्रतादिना ।
अपि सर्षपमात्रस्य दातारं तारयेद्ददत् ॥

## आदित्यपुराणे ।

अथान्नदानाद्भूदानात् प्रीतो भवति केशवः ।
गुडक्षीरघृतैर्वस्त्रैः प्रीतो भवति चन्द्रमाः ॥
जलदानाच्च वरुणः सुप्रसन्नो भवेत् सदा ।
रजतेन च दत्तेन प्रीतः स्याच्च महेश्वरः ॥
सुवर्णेन तु दत्तेन वह्निर्नित्यं प्रसीदति ।
हस्त्यश्वरथयानैश्च मघवानासनैस्तथा ॥
शयनैर्वेश्मभिर्धर्मसूत्रेणोष्णांशुरेव च ।
उपानद्भ्यां यमो गोभिः सौरभेयः कपर्दिनः ॥
पादुकाभ्यां प्रदत्ताभ्यां प्रद्मयोनिः प्रतुष्यति ।
अलङ्कारैस्तथा मान्यैर्जगन्माता च पार्वती ॥

## स्कन्दपुराणे ।

यो गां च महिषीं दद्यात् सालङ्कारां पयस्विनीम् ।
कांस्यवस्त्रादिभिर्युक्तां स कामान् लभतेऽखिलान् ॥

## सौरपुराणे ।

कृष्णाजिनं च महिषी मेषी च दशधेनवः ।
ब्रह्मलोकप्रदायिन्यस्तुलापुरुष एव च ॥

## वह्निपुराणे ।

यानमश्वमनड्वाहं हेमरूप्यमणीस्तिलान् ।
ये प्रयच्छन्त्यपापेषु निरताः सर्वदा मुने ॥
न तेषां भैरवः पन्थाः कदाचिदपि जायते ।

विष्णुधर्मोत्तरे हंस उवाच ।

नरस्त्वासनदानेन स्थानं सर्वत्र विन्दति ।
शय्यादानेन चाप्नोति भार्यां ब्रा[illegible]णसत्तमाः ॥
दत्त्वा द्विजाय शयनं स्वास्तीर्णं चोत्तरच्छदम् ।
कुले महति संभूतिं रूपद्रविणसंयुताम् ॥
तथा पक्षवर्तीं भार्यां प्राप्नोति वशगां तथा ।
अनेनैव प्रदानेन भार्या पतिमवाप्नुयात् ॥
वितानकप्रदानेन सर्वपापैः प्रमुच्यते ।
छत्रदश्च तथा विप्रा नात्रकार्या विचारणा ॥
छत्रं शतशलाकं च वृष्टेरातपवारणम् ।
सर्वपापविनिर्मुक्तः स्वर्गलोके महीयते ॥
याम्यं मार्गं तथा याति सुखेन द्विजसत्तम ।
उपानहौ तथा दत्त्वा श्लक्ष्णस्नेहसमन्विते ॥
रथमश्वतरीयुक्तं त्रिदिवं प्रतिपद्यते ।
सर्वपापविनिर्मुक्तो याम्यं मार्गं सुखं व्रजेत् ॥
तालवृन्तप्रदानेन सर्वपापैः प्रमुच्यते ।
तथा चामरदानेन सर्वदुःखैर्विमुच्यते ॥
पादुकानां प्रदानेन गतिमाप्नोति शोभनाम् ।
पादपीठप्रदानेन स्थानं सर्वत्र विन्दति ॥
स्थानमेव तथाप्नोति दण्डं दत्त्वा द्विजातये ।
यज्ञोपवीतदानेन वस्त्रदानफलं लभेत् ॥
उष्णीषदानस्य तथा फलमेतदुदाहृतम् ।
दन्तकाष्ठप्रदानेन सौभाग्यं महदाप्नुयात् ॥
मृत्तिकायाः प्रदानेन शुचिः सर्वत्र जायते ।

शौचस्नानोदकं दत्त्वा विरोगस्त्वभिजायते ॥
रोगनाशमवाप्नोति तथाऽभ्यङ्गप्रदः सदा ।
तथैवौषधदानेन रोगनाशमथाऽश्नुते ॥
स्नानीयानि सुगन्धीनि दत्त्वा सौभाग्यमश्नुते ।
अनुलेपनदानेन रूपवानभिजायते ॥
कायाग्निदीप्तिं प्राकाश्यां गतिं चैव तथोत्तमाम् ।
यस्तु संसाधनार्थाय ब्राह्मणाय प्रयच्छति ॥
स याति वह्निसालोक्यं शत्रुनाशं च विन्दति ।
तैजसानि तु पात्राणि दत्त्वा सलवणानि च ॥
तैजसानि तु पात्राणि सतैलानि प्रयच्छतः ।
आरोग्यमुत्तमं प्रोक्तं लावण्यमपि चोत्तमम् ॥

तथा ।

समुद्रजातां भाण्डानां शङ्खादीनां प्रदायकः ।
पात्रीभवति कामानां यशसश्च न संशयः ॥
कङ्कतस्य प्रदानेन परां बाधां प्रमुञ्चति ।
शय्याप्रदानं लोकेषु तथा स्थानकरं परम् ॥
दत्त्वाऽनुलेपनं माल्यं परां लक्ष्मीमुपाश्नुते ।

तथा ।

नृवाह्यं पुरुषो यस्तु द्विजे सम्यक् प्रयच्छति ।
अश्वमेधफलं तस्य कथितं द्विजसत्तमाः ॥
शिविकायाः प्रदानेन वह्निष्टोमफलं भवेत् ।
स याति शक्रसालोक्यं यस्तु योधं प्रयच्छति ॥
यस्तु कर्मकरीं दासीं ब्राह्मणाय प्रयच्छति ।
लोकास्तु सुलभास्तस्य वसूनां समुदाहृताः ॥

तरुणीं रूपसम्पन्नां दासीं यस्तु प्रयच्छति ।
सोऽप्सरोभिर्मुदा युक्तः क्रीडते नन्दने वने ॥
उष्ट्रं वा गर्दभं वाऽपि यः प्रयच्छति तु द्विजाः ।
अलकां च समासाद्य यक्षेन्द्रैः सह मोदते ॥
दानानामुत्तमं प्रोक्तं प्रदानं तुरगस्य च ।
वडवायाः प्रदानं तु तथा बहुफलं स्मृतम् ॥
तुरगान् यः प्रयच्छन्ति सूर्यलोकं व्रजन्ति ते ।
यावन्ति तस्य रोमाणि तावद्वर्षशतानि च ॥
शुक्लं तुरङ्गमं दत्त्वा फलं दशगुणं भवेत् ।
गौर्यथा कपिला श्रेष्ठा तथैव तुरगः सितः ॥
तुरङ्गमं सुपर्वाणं सालङ्कारं प्रयच्छतः ।
पुण्डरीकफलं प्रोक्तं नात्रकार्या विचारणा ॥
चतुर्भिस्तुरगैर्युक्तं सर्वोपकरणैर्युतम् ।
रथं द्विजातये दत्त्वा राजसूयफलं लभेत् ॥
प्रदाय करिणीं सम्यगेतदेव फलं लभेत् ।
कुञ्जरस्य प्रदानेन मनुष्यः स्वर्गविच्युतः ॥
राजा भवति लोकेऽस्मिन् यशोविक्रमसंयुतः ।
सुवर्णकक्षं मातङ्गं दत्त्वा विप्राय वै द्विजाः ॥
राजसूयाश्वमेधाभ्यां फलं विन्दत्यसंशयम् ।
चतुर्भिः कुञ्जरैर्युक्तं रथं दत्त्वा द्विजातये ॥
समग्रभूमिदानस्य फलं प्राप्नोत्यसंशयम् ।

तथा ।

यथोक्तविधिना दद्यात् क्रीत्वा तु कपिलां नरः ।
सर्वकामसमृद्धश्च स यज्ञफलमश्नुते ॥

गवां लोकमवाप्नोति कुलमुद्धरति स्वकम् ।
वारुणं लोकमाप्नोति दत्त्वा च महिषीं ततः ॥
अलङ्कृतां तु तां दत्त्वा गोदानफलमाप्नुयात् ।
अजामलङ्कृतां दत्त्वा वह्निलोके महीयते ॥
तमेव लोकमाप्नोति दत्त्वाऽजं विधिवन्नरः ।
महिषस्य प्रदानेन याम्ये लोके महीयते ॥
वारुणं लोकमाप्नोति दत्त्वा रत्नं नृपोत्तम ।
गृष्टिप्रदानाच्च तथा तदेव फलमश्नुते ॥
आरण्यपशुदानेन वायुलोके महीयते ।
एतदेवफलं प्रोक्तं प्रदानेन च पक्षिणाम् ॥

**ब्रह्माण्डपुराणे ।**

लोके श्रेष्ठतमं सर्वमात्मनश्चापि यत् प्रियं ।
सर्वं पितॄणां दातव्यं तेषामेवाक्षयार्थिना ॥
जाम्बूनदमयं दिव्यं विमानं सूर्यसन्निभम् ।
दिव्याऽप्सरोभिः सम्पूर्णमन्नदो लभतेऽक्षयम् ॥
आच्छादनं तु यो दद्यादहतं श्राद्धकर्मणि ।
आयुःप्रकाशमैश्वर्यं रूपं च लभते शुभम् ॥
यज्ञोपवीतं यो दद्यात् पादुके श्राद्धकर्मणि ।
शोभनं लभते यानं पादयोः सुखमेव च ॥
व्यजनं तालवृन्तं च दत्त्वा विप्राय सत्कृतम् ।
प्राप्नुयात् तल्पसंयुक्तं शयनीयं सुखावहम् ॥
श्राद्धेषूपानहौ दत्त्वा ब्राह्मणेषु सदा भुवि ।
दिव्यं स लभते चक्षुर्वाजियुक्तं रथं तथा ॥
श्रेष्ठं छत्रं च विमलं पुष्पमालाविभूषितम् ।

प्रासादस्तूत्तमो भूत्वा गच्छन्तमनुगच्छति ॥
शरणं रत्नसम्पूर्णं सशय्यासनभाजनम् ।
श्राद्धे दत्त्वा पितृभ्यस्तु नाकपृष्ठे महीयते ॥
मुक्तावैदूर्यवासांसि रत्नानि विविधानि च ।
लवणानां सुपूर्णानि श्राद्धे पात्राणि यो ददेत् ॥
रसास्तमनुतिष्ठन्ति आयुः सौभाग्यमेव च ।
पात्रं वै तैजसं दत्त्वा मनोज्ञं श्राद्धकर्मणि ॥
पात्रं भवति कामानां विद्यानां च धनस्य च ।
राजतं काञ्चनं चैव दद्याच्छ्राद्धे तु कर्मणि ॥
प्रभूतं लभते दाता प्राकाम्यं धनमेव च ।
धेनुं श्राद्धेषु योदद्यादृष्टिं कुम्भोपदोहनाम् ॥
गावस्तमनुतिष्ठन्ति गवां पुष्टिस्तथैव च ।
गन्धवन्ति विचित्राणि स्नानानि सुरभीणि च ॥
पूजयित्वा तु पात्राणि श्राद्धे सत्कृत्य दापयेत् ।
गन्धवहा महानद्यः सुखानि विविधानि च ॥
दातारमुपतिष्ठन्ति पुनन्त्यश्च पतिव्रताः ।
शयनासनयानानि भूमयो वाहनानि च ॥
दातारमुपतिष्ठन्ति तथा स्वर्गे महीयते ।
श्राद्धेष्वेतानि यो दद्यात् सोऽश्वमेधफलं लभेत् ॥
सर्पिःपूर्णानि पात्राणि श्राद्धे सत्कृत्य दापयेत् ।
कुम्भदोहनक्षीराणां सहस्रं लभते गवाम् ॥
रम्यानावसथान् दत्त्वा राजसूयफलार्धभाक् ।
तथाऽऽभरणसम्पूर्णां सोपधानां स्वलङ्कृताम् ॥
शय्यां च विविधां दत्त्वा द्विजोऽग्निष्टोमभाग्भवेत् ।

दासीं दासं च विविध तथैवोष्ट्रमजाविकम् ॥
हस्त्यश्वरथयानं च श्राद्धकर्मणि नित्यशः ।
तिलाँश्च विविधान् दत्त्वा लभते फलमक्षयम् ॥
पितृकर्मणि युक्तस्तु शालिशोभनपुण्यकृत् ।
वनपुष्पं फलोपेतं दत्त्वा शोभनमश्नुते ॥
कूप[illegible] क्षेत्रयोषगृहाणि च ।
दत्त्वा तु मोदते स्वर्गे नित्यमाचन्द्रतारकम् ॥
स्वास्तीर्णं शयनं दत्त्वा श्राद्धे रत्नविभूषितम् ।
पितरस्तस्य तुष्यन्ति स्वर्गं चानन्त्यमश्नुते ॥
पट्टकौशेयपत्रोर्णं तथा प्रच्छादकम्बलम् ।
अजिनं रौरवपट्टं पावनं मृगरोमजम् ॥
दत्त्वा चैतानि विप्रेभ्यो भोजयित्वा यथाविधि ।
प्राप्नोति श्रद्दधानस्तु हयमेधस्य यत् फलम् ॥
कौशेयक्षौममार्गं च दुकूलमहतं तथा ।
श्राद्धेष्वेतानि यो दद्यात् कामान् प्राप्नोत्यनुत्तमान् ॥
पक्वाऽन्नानि करम्भं च [illegible]तशार्करा: ।
कृशरं मधुपर्कं च पयः पायसमेव च ॥
स्निग्धमुष्णं च यो दद्याज्ज्योतिष्टोमफलं लभेत् ।

महाभारते ।

वस्त्राभरणदातारो भक्तपानान्नदास्तथा ।
कुटुम्बान्नप्रदातारः पुरुषाः स्वर्गगामिनः ॥
सहस्रपरिवेष्टारस्तथैव च सहस्रदाः ।
त्रातारश्च सहस्राणां ते नराः स्वर्गगामिनः ॥
सुवर्णस्य च दातारो गवां च भरतर्षभ ।

यानानां च प्रदातारस्तेनराः स्वर्गगामिनः ॥
वैवाहिकानां प्रेङ्खाणां प्रेक्ष्याणां च युधिष्ठिर ।
दातारो वाससां चैव पुरुषाः स्वर्गगामिनः ॥
विहारावसथोद्यानकूपारामसदप्रदाः ।
प्रपाणां चैव कर्त्तारस्ते नराः स्वर्गगामिनः ॥
नयेत् पातात् तथा बाधाद्दारिद्र्याद्व्याधिधर्षणात् ।
यत्कृते प्रतिमुच्यन्ते ते नराः स्वर्गगामिनः ॥
शुश्रूषाभिस्तपोभिश्च कृतमादाय भारत ।
ये प्रतिग्रहनिःस्नेहास्तेनराः स्वर्गगामिनः ॥
सर्वहिंसानिवृत्ताश्च नराः सर्वसहाश्च ये ।
सर्वस्याश्रयभूताश्च ते नराः स्वर्गगामिनः ॥
आढ्याश्च बलवन्तश्च यौवनस्थाश्च भारत ।
ये वै जितेन्द्रिया धीरास्ते नराः स्वर्गगामिनः ॥

## नारसिंहपुराणे ।

एकविंशत्यमी स्वर्गा निविष्टा मेरुमूर्धनि ।
अहिंसादानकर्त्तारो यज्ञानां तपसां तथा ॥
एतेषु निवसन्ति स्म जनाः क्रोधविवर्जिताः ।

एकविंशतिस्वर्गा अनन्तरमेव वक्ष्यमाणा आनन्दप्रभृतयः ।

जलप्रवेशी चानन्दं प्रमोदं वह्निसाहसे* ।
भृगुप्रपाते सौख्यं रणे चैवातिनिर्मलम् ॥
अनशने चाऽथ सन्यासे मृतो गच्छेत् त्रिविष्टपम् ।
क्रतुयाजी नाकपृष्ठमग्निहोत्री च निर्वृतिम् ॥

'क्रतुयाजी' सोमयागकर्त्ता ।

---

* वह्निसाहसीति क्वचित् पाठः ।

तडागकूपकर्त्ता च लभते पौष्टिकं द्विज ।
सुवर्णदायी सौभाग्यं लभते स्वर्महातपाः ॥
शीतकाले महावह्निं प्रज्वालयति यो नरः ।
सर्वसत्वहितार्थाय स्वर्गं सोऽप्सरसं लभेत् ॥
हिरण्यगोभूदानेन निरहङ्कारमाप्नुयात् ।
भूदानेन तु शुद्धेन लभते शान्तिकं पदम् ॥
गोप्रदानेन स्वर्गं तु निर्मलं लभते नरः ।
अश्वदानेन पुण्याहं कन्यादानेन मङ्गलम् ॥
द्विजेभ्यस्तर्पणं कृत्वा दत्त्वा वस्त्राणि भक्तितः ।
श्वेतं तु लभते स्वर्गं यत्र गत्वा न शोचति ॥
कपिलागोप्रदानेन परमार्थे महीयते ।
एकान्नभोजी यो मर्त्यो नक्तभोजी च नित्यशः ॥
उपवासी त्रिरात्राद्यैरन्ते स्वर्गसुखं लभेत् ।

'एकान्नभोजी' एकभक्तव्रतः ।

सरित्स्नायी जितक्रोधी ब्रह्मचारी दृढव्रतः ।
निर्मलं सुखमाप्नोति तथा भूतहिते रतः ॥
विद्यादानेन मेधावी निरहङ्कारमाप्नुयात् ।

ब्रह्मपुराणे ।

कर्पूरागुरुकस्तूरीचन्दनानि द्विजातये ।
दत्त्वा सम्यगवाप्नोति भोगमप्सरसां शुभम् ॥
रत्नालङ्कारवासांसि शयनासनभाजनम् ।
बहुभाग्यः सुखी चैव प्रदत्त्वा जायते नरः ॥
यो ददाति महासत्वस्तुरङ्गरथदन्तिनः ।
स विमानमारूढः प्रजापतिपुरं व्रजेत् ॥

उष्ट्रोरभ्राजमहिषीं यो ददाति महायशाः ।
स नैव नरके वासमासादयति जातु चित् ॥

## नारसिंहपुराणे ।

यस्तु सर्वाणि दानानि ब्राह्मणेभ्यः प्रयच्छति ।
स प्राप्य न निवर्त्तेत देवं शान्तमनामयम् ॥

## विष्णुधर्मोत्तरे ।

किं स्वित् स्वकैः पूजनैर्ब्राह्मणानां लोकं गत्वा ब्राह्मणं ब्राह्मणेन्द्राः ।
दैवैर्विप्रैः पूज्यमानः सुखी स्यात् तस्माद्देयं प्रार्थितं ब्राह्मणेभ्यः ॥

इति श्रीमहाराजाधिराजश्रीमहादेवस्य समस्तकरणाधीश्वरसकल-
विद्याविशारदश्रीहेमाद्रिविरचिते चतुर्वर्गचिन्तामणौ
दानखण्डे दानफलप्रकरणम् ॥ ४ ॥

---

## अथ दानानि प्रतिपाद्यन्ते ।

## तत्र प्रथमं विशिष्टतया तुलापुरुषादिषोडशमहादानानि ।

जाताः सन्ति पुरा भवन्ति बहवो ये दानशौण्डा नरा-
स्तान् कल्पद्रुमकामधेनुतुलया स्तोतुं समर्था जनाः ।
धेनुं तामपि तद्द्रुमं भुविमहादानच्छलाद्यच्छतो-
हेमाद्रेरुपमानवस्तुनि पुनः पुष्णाति तूर्ष्णीं न कः ॥

तुला पुरुषमुख्यानामपि येन सहासहा ।
तुलापुरुषमुख्यानां दानानां विधिमाह सः ॥

### तत्र तुलापुरुषदानं तावदभिधीयते ।

### मत्स्यपुराणे सूत उवाच ।

अथाऽतः संप्रवक्ष्यामि महादानानुकीर्त्तनम् ।
दानधर्मेऽपि यत् प्रोक्तं विष्णुना प्रभविष्णुना ॥
सर्वपापक्षयकरं नृणां दुःस्वप्ननाशनम् ।
यत् तत् षोडशधा प्रोक्तं वासुदेवेन भूतले ॥
पुण्यं पवित्रमायुष्यं सर्वपापहरं शुभम् ।
पूजितं देवताभिश्च ब्रह्मविष्णुशिवादिभिः ॥
आद्यं तु सर्वदानानां तुलापुरुषसंज्ञितम् ।
हिरण्यगर्भदानं च ब्रह्माण्डं तदनन्तरम् ॥
कल्पपादपदानं च गोसहस्रं च पञ्चमम् ।
हिरण्यकामधेनुश्च हिरण्याश्वस्तथैव च ॥
हिरण्याश्वरथस्तद्वद्धेमहस्तिरथस्तथा ।

पञ्चलाङ्गलकं तद्वद्धरादानं तथैव च ॥
द्वादशं विश्वचक्रं च ततः कल्पल[illegible] ।
सप्तसागरदानं च रत्नधेनुस्तथैव च ॥
महाभूतघटस्तद्वत्षोडशः परिकीर्त्तितः ।
सर्वाण्येतानि कृतवान् पुरा शम्बरसू[illegible]नः ॥
वासुदेवश्च भगवानम्बरीषोऽथ पार्थिवः ।
कार्त्तवीर्यार्जुनो नाम प्रह्लादः पृथुरेव च ॥
चक्रुरन्ये महीपालाः केचिच्च भरतादयः ।
यस्माद्विघ्नसहस्रेभ्यो महादानानि सर्वदा ॥
रक्षन्ति देवताः सर्वा एकैकमपि भूतले ।
[illegible] कुर्याद्वासुदेवप्रसादतः ॥
न शक्यमन्यथा कर्त्तुमपि शक्रेण भूतले ।
तस्मादाराध्य गोविन्दमुमापतिविनायकौ ॥
महादानमखं कुर्यात् विप्रैश्चैवानुमोदितः ।
एतदेवाह मनवे परितुष्टो जनार्दनः ॥
यथा तदनुवक्ष्यामि शृणुध्वमृषिसत्तमाः ।

मनुरुवाच ।

महादानानि यानीह पवित्राणि शुभानि च ।
रहस्यानि प्रदेयानि तानि मे कथयाऽच्युत ॥

मत्स्य उवाच ।

नोक्तानि यानि गुह्यानि महादानानि षोडश ।
तानि ते सम्प्रवक्ष्यामि यथावदनुपूर्वशः ॥
तुलापुरुषयागोऽयं येषामाद्योऽभिधीयते ।

'आद्यः' प्रकृतिभूतः ।

अयने विषुवे पुण्ये व्यतीपाते दिनक्षये ।
युगादिषूपरागेषु तथा मन्वन्तरादिषु ॥
संक्रान्तौ वैधृतिदिने चतुर्दश्यष्टमीषु च ।
सितपञ्चदशीपर्वद्वादशीष्वष्टकासु च ॥
यज्ञोत्सवविवाहेषु दुःस्वप्नाद्भुतदर्शने ।
द्रव्यब्राह्मणलाभे च श्रद्धा वा यत्र जायते ॥
तीर्थे वाऽऽयतने गोष्ठे कूपारामसरित्सु च ।
गृहे वाऽथ वने वापि तडागे रुचिरे तथा ॥
महादानानि देयानि संसारभयभीरुणा ।
अनित्यं जीवितं यस्माद्वसु चातीव चञ्चलम् ॥
केशेष्विव गृहीतस्तु मृत्युना धर्ममाचरेत् ।
पुण्यां तिथिमथासाद्य कृत्वा ब्राह्मणवाचनम् ॥

वक्ष्यमाणं मण्डपादिं कारयेदित्यन्वयः । तिथिमित्युपलक्षणम् । पूर्वाह्णे पुण्यमुहूर्त्तादौ चेति वेदितव्यम् । 'ब्राह्मणवाचनं' ब्राह्मणैः पुण्याहादिशब्दवाचनं तद्विधानं तु परिभाषायां प्रागभिहितम् ।

## इह चाऽयं प्रयोगक्रमः ।

उक्तकालान्यतमदानप्रतिपादनदिनात् पूर्वेद्युः प्रातः सुस्नातः श्वोभूतेऽहममुकदानं प्रतिपादयिष्य इति यजमानः सङ्कल्पं विधाय प्रत्यूहसमूहविघाताय शिवविष्णुविनायकान् सम्पूज्य ब्राह्मणानुज्ञातः कर्म समारभेत् । अथ वृद्धिश्राद्धं कृत्वा तदनन्तरमृत्विग्वरणं विधाय ताँश्च मधुपर्कविधिना सम्पूज्य पश्चिमद्वारमण्डपं प्रविश्याऽपराह्णेऽधिवासनं विदध्यात् । मधुपर्कविधिकुण्डमण्डपादिलक्षणानि परिभाषायां द्रष्टव्यानि ।

## विशेषस्तु वक्ष्यते ।

षोडशारत्निमात्रं च दश द्वादश वा करान् ।

मण्डपं कारयेद्विद्वाँश्चतुर्भद्राननं बुधः ॥

यजमानस्यैकविंशत्यङ्गुलः 'अरत्निः' चतुर्विंशत्यङ्गुलः 'करः' । एतच्च मानत्रय-मुत्तममध्यमाधमभेदेन विज्ञेयम् । 'चतुर्भद्राननमिति' चत्वारि भद्रयुक्तानि आननानि द्वाराणि यस्य स तथा ।

यदाह दानसभामधिकृत्य विश्वकर्मा ।

द्वारैश्चतुर्भिः परिनिर्गतैर्या विभूषिता सुन्दरमूर्त्तिरूपा ।

रत्नोद्भवा सा कथिता सभेयं भद्रं ह्यनिन्द्यं करणीयमस्याः—इति ।

मत्स्यपुराणे ।

सप्तहस्ता भवेद्वेदी मध्ये पञ्चकराऽथ वा ।

तन्मध्ये तोरणं कुर्यात् सारदारुमयं शुभम् ॥

उत्तममण्डपे सप्तकरा वेदी इतरयोस्तु पञ्चकरेति व्यवस्थितो विकल्पः । सा चेष्टकामयी चतुर्थांशोच्छ्रिता विधेया । तन्मध्ये तुलावलम्बनार्थं तोरणाकृतित्वात् तोरणम् । सारदारूणि शाकेङ्गुदीत्यादिवक्ष्यमाणानि ।

कुर्यात् कुण्डानि चत्वारि चतुर्दिक्षु विचक्षणः ।

सुमेखलायोनियुतानि तद्वत् सम्पूर्णकुम्भानि महासनानि ।

सताम्रपात्रद्वयसंयुतानि सयज्ञपात्राणि सविष्टराणि ॥

हस्तप्रमाणानि तिलाज्यधूपपुष्पोपहाराणि सुशोभनानि ।

'चतुर्दिक्षु' वेद्या इति शेषः । सपादहस्तसम्मितं च कुण्डवेद्योरन्तरं विधेयम् । 'पूर्णकुम्भः' जलपूर्णकलशः 'ताम्रपात्रद्वयं' हवनीयहव्याधारभूतम् । 'यज्ञपात्राणि' स्रुक्स्रुवादीनि । 'विष्टरः' अच्छिन्नाग्रपञ्चविंशतिकुशपत्रनिर्मितः । 'धूपः' गुग्गुलप्रभृतिः । 'उपहारः' फलान्नादिः ।

पूर्वोत्तरे हस्तमिताऽथ वेदी ग्रहादिदेवेश्वरपूजनाय ।

अत्रार्चनं ब्रह्मशिवाच्युतानां तथैव कार्यं फलमाल्यवस्त्रैः ॥

'पूर्वोत्तरे' ईशानभागे । आयामतो विस्तारतश्च हस्तसंमिता वितस्तिमात्रोच्छ्रया च वेदी कार्या । तत्र मध्ये सूर्यं स्थापयेत् । आग्नेये सोमं दक्षिणतो भौममीशाने

बुधमुत्तरे गुरुं पूर्व्वे भार्गवं पश्चिमतः शनिं नैर्ऋत्यभागे राहुं वायव्यतः केतूनिति । आदिशब्दोपात्ताश्चैत ईश्वरगौरीस्कन्दविष्णुब्रह्मशक्रयमकालचित्रगुप्ता इत्यधिदेवता अग्निजलभूमिविष्णुशक्रशचीप्रजापतिसर्पब्रह्माण इति प्रत्यधिदेवता एते स्वस्वग्रह-संनिधौ स्थाप्याः । तथा विनायको दुर्गा वायुराकाशमश्विनौ चेति शनिसूर्ययोरुत्तर-भागे राहुकेत्वोश्च दक्षिणे दुर्गाप्रभृतीनां स्थापनम् । तथा लोकपालादीनामप्यत्र स्थापनम् । तेषामुत्तरत्र देवतात्वेनाभिधानात् ।

तदुक्तं स्मृत्यन्तरे ।

इन्द्रः पूर्व्वे तु संस्थाप्यः प्रेतेशं दक्षिणे तथा ।
वरुणं पश्चिमे भागे कुवेरं चोत्तरे न्यसेत् ॥
इन्द्रः पीतो यमः श्यामो वरुणः स्फटिकप्रभः ।
कुवेरस्तु सुवर्णाभो ह्यग्निश्चापि सुवर्णभः ॥
तथैव निर्ऋतिः श्यामो वायुर्धूम्रः प्रशस्यते ।
ईशानस्तु भवेद्रक्त एवं ध्यायेत् क्रमादिमान् ॥
इन्द्रस्य दक्षिणे पार्श्वे वसूनावाहयेद्बुधः ।
ध्रुवोऽध्वरस्तथा सोम आपश्चैवा*निलोऽनलः ॥
प्रत्यूषश्च प्रभासश्च† वसवोऽष्टौ प्रकीर्त्तिताः ।
देवेशेशानयोर्मध्य आदित्यानां तथायनम् ॥
धाताऽर्यमा च मित्रश्च वरुणोंऽशो भगस्तथा ।
इन्द्रो विवस्वान् पूषा च पर्जन्यो दशमः स्मृतः ॥
ततस्त्वष्टा ततो विष्णुरजघन्यो जघन्यजः‡ ।
इत्येते द्वादशादित्या नामभिः परिकीर्त्तिताः ॥
अग्नेः पश्चिमतो भागे रुद्राणामयनं विदुः ।

---

* आपस्तम्बेति क्वचित् पाठः ।

† प्रभातश्चेति क्वचित् पाठः ।

‡ सम्मत इति क्वचित् पाठः ।

वीरभद्रश्च शम्भुश्च गिरीशश्च महायशाः ॥
अजैकपादहिर्बुध्न्यः पिनाकी* चापराजितः ।
भुवनाधीश्वरश्चैव कपाली च विशाम्पतिः ॥
स्थाणुर्भगश्च भगवान् रुद्रास्त्वेकादश स्मृताः ।
प्रेतेशरक्षसोर्मध्ये मातृस्थानं प्रकल्पयेत् ॥

मातृनामानि परिभाषाप्रकरणे दर्शितानि 'गौरीपद्मादीनि'।

निऋतेरुत्तरेभागे गणेशायतनं विदुः ।
कुवेरमरुतोर्मध्ये मरुतां स्थानमुच्यते ॥
मरुतो नाम ते देवा गणा वै सप्तसप्तकाः ।
आवहः प्रवहश्चैव उद्वहः सम्वहस्तथा ॥
विवहः प्रवहश्चैव तथा परिवहोऽनिलः ।

एते सूर्यादयो ग्रहयज्ञोक्तविधिना पूजनीयाः । अनुक्तमन्त्रकाणां तु प्रणवादिभिश्चतुर्थ्यन्तैर्नामभिर्नमोऽन्तैः स्थापनादि विधेयम् ।

अथ तत्रैव ब्रह्मशिवाच्युतानामर्चनं प्रतिमापूजनं च कर्त्तव्यम् । तल्लक्षणं ब्रह्माण्डदाने वक्ष्यते ।

## मत्स्यपुराणे ।

लोकेशवर्णाः परितः पताका मध्ये ध्वजः किङ्किणिकायुतः स्यात् ।
द्वारेषु कार्याणि च तोरणानि चत्वार्यपि क्षीरवनस्पतीनाम् ॥
द्वारेषु कुम्भद्वयमत्र कार्यं स्रग्गन्धधूपाम्बररत्नयुक्तम् ।

लोकेशवर्णा इन्द्रः पीतो यमः श्याम इत्यादिनिरन्तरोक्तलोकपालसमानवर्णाः । 'परितः' मण्डपस्य पूर्वादिसर्वदिक्षु । 'किङ्किणिकाः' क्षुद्रघण्टिकाः । 'क्षीरवनस्पतीनां' अश्वत्थोदुम्बरप्लक्षन्यग्रोधानां पूर्वदक्षिणपश्चिमोत्तरद्वारेषु यथाक्रमं मस्तके दारुमयशंखचक्रगदापद्मचिह्नितानि तोरणानि कुर्यात् । 'रत्नानि' कनकप्रभृतीनि परिभाषायामुक्तानि ।

---

* बुध्न इति पाठान्तरम् ।

शाकेङ्गुदीचन्दनदेवदारुश्रीपर्णिबिल्वप्रियकाञ्जनोत्थम् ।
स्तम्भद्वयं हस्तयुगावखातं कृत्वा दृढं पञ्चकरोच्छ्रितं वा ॥
तदन्तरं हस्तचतुष्टयं स्यात् तथोत्तराङ्गं चतुरस्रमेव ।

'शाकः' वृक्षविशेषो महाराष्ट्रे साघ इति प्रसिद्धः । 'श्रीपर्णी' भद्रपर्णीतरुः । 'प्रि*यकः' बीजकः । 'स्तम्भद्वयं' चतुरस्रीकृत्य वेदिमध्ये पूर्वपश्चिमभागयोर्निखेयम् । 'उत्तराङ्गं' स्तम्भद्वययोरुपरिकाष्ठम् । तच्च पञ्चकरोच्छ्रितयोः स्तम्भयोर्हस्तचतुष्टया-दुपरि निधेयम् । अथोत्तराङ्गं च तदीयमेवेति पाठे तदीयमिति स्तम्भसजातीयं काष्ठ-मित्यर्थः ।

समानजातिश्च तुलावलम्ब्या हैमेन मध्ये पुरुषेण युक्ता ।
दैर्घ्येण सा हस्तचतुष्टयं स्यात् पृथुत्वमस्यास्तु दशाङ्गुलानि ॥
सुवर्णपट्टाभरणा तु कार्या सलोहपाशद्वयशृङ्खलाभिः ।
युता सुवर्णेन च रत्नमालाविभूषिता माल्यविलेपनाभ्याम् ॥

'समानजातिः' तोरणसमानजातिस्तुलोत्तराङ्गमध्ये द्वादशभिरङ्गुलैरधस्तादुद-ग्रयाऽवलम्ब्या । 'पुरुषेण' विष्णुना 'शृङ्खलावलम्बितेन' सुवर्णनिर्मितेन ।

## तत्प्रतिमालक्षणमुक्तं पञ्चरात्रे ।

अधश्चक्रं गदामूर्ध्वे वामयोः करयोः क्रमात् ।
ऊर्ध्वे शंखमधः पद्मं गोविन्दः कपिलाङ्ककः ॥

हस्तचतुष्टयदीर्घं तु प्रान्तद्वयन्यस्तयोर्लोहपाशयोर्बहिःस्थितमङ्गुलषट्कं विहाय विज्ञेयम् । समस्ततुलाया अष्टोत्तरशताङ्गुलमितत्वात् । पृथुत्वं चास्या दशाङ्गुलपरिमितेन वलयाकृतिना सूत्रेण सम्मितं विधेयमित्यर्थः । स च 'लोहपाशद्वयशृङ्खलाभिर्युतेति' सुवर्णधारणार्थं फलकधारिणीभिर्लोहपाशद्वयावलम्बितशृङ्खलाभिर्युक्ता कार्येत्यर्थः ।

## वह्निपुराणे ।

आश्वत्थीं खादिरीं वापि पालाशीं वा सुवृक्षजाम् ।
चतुर्हस्तप्रमाणेन सुश्लक्ष्णां सुदृढां नवाम् ॥

---

* कदम्बः ।

सुवर्त्तुलां समां तद्वत् स्निग्धां च्छिद्रत्रयान्विताम् ।
मौञ्जशिक्ययोभयोपेतां बद्धां स्तम्भे तु यज्ञिये ॥

आह नारदः ।

चतुरस्रा तुला कार्या पादौ चापि तथाविधौ ।
चतुर्ष्वपि च पार्श्वेषु मानं स्याच्चतुरङ्गुलम् ॥
मुक्त्वा तावत् तु कटकानन्तयोर्विन्यसेद्बुधः ।
चतुर्हस्ताधरतुला मध्ये च शृङ्खलान्विता ॥
शिक्यं हस्तत्रयं कुर्यात् कटकं चतुरङ्गुलम् ।

यदाह विश्वकर्मा ।

विशेषदानं कथितं तुलादि तस्मात् तुलालक्षणमुच्यते प्राक् ।
तुलाप्रमाणं स्मृतमङ्गुलानि दैर्घ्येऽखिले षण्णवतिप्रमाणैः ॥
प्रान्तद्वयेऽप्यङ्गुलषट्कमुक्तं शतं तुलाऽष्टोत्तरमङ्गुलानाम् ।
स्युर्विंशतिः पञ्च च धातुबन्धा बन्धेष्वधिष्ठातृसुरा निवेश्याः ॥
ईशः शशी मारुतरुद्रसूर्याः स्याद्विश्वकर्मा गुरुरङ्गिरोऽग्नी ।
प्रजापतिर्विश्वजगद्विधाता पर्जन्यशम्भू पितृदेवताश्च ॥
सौम्यश्च धर्मोऽमरराजदस्रौ जलेशमित्रावरुणौ मरुद्गणाः ।
धनेशगन्धर्वजलेशविष्णुरेते चतुर्विंशतिरेव देवाः ॥
स्यात् पञ्चविंशः पुरुषः स एको यस्तोल्यमानस्तुलया महात्मा ।
एता विधेयास्तपनीयमध्ये रत्नाचिता दैवतमूर्त्तयस्ताः ॥
षडङ्गुलः स्याच्चतुरस्रपिण्डः प्रान्तद्वये विष्णुरनन्तनामा ।
तुलोर्ध्वभागे कलशद्वयं स्यात् तथाङ्कुटद्वन्द्वमधस्तुलान्ते ॥
षडङ्गुलोत्थं कटकश्च पिण्डोऽप्येकाङ्गुलो विष्णुरनन्तनामा ।
पार्श्वद्वयं तच्चतुरङ्गुलं स्यादेवं मया ते कथितं प्रमाणम् ॥
मध्याङ्कुटे सङ्कलिकाङ्गुलानि पञ्चाशता विंशतिरेवदैर्घ्ये ।

एकाङ्गुलोऽस्या भवतीह पिण्डस्तत्राधिदेवः किल वासुकिः स्यात् ॥
एकैकरज्जुर्लभतेऽङ्गुलानि त्रिःसप्ततिः पिण्डगताङ्गुला च ।
तच्चेढकाद्वन्द्वमथाङ्गुलानि त्रिंशत् तथा पञ्चदशाधिका च ॥
तदानुबद्धं शुभकाष्ठघटं पिण्डेङ्गुलद्वन्द्वमथो विधेयम् ।
आंध्वाद्यर्यत्सून्यधिदेवता ? स्यात् तुलान्तरे भूमिपतिर्निवेश्यः ॥

'ईशः शशीत्यादि'। अत्रेश्वरचन्द्रमारुतसूर्यदेवराजजलेशानां ब्रह्माण्डदाने लक्षणं वक्ष्यते। रुद्रस्य विश्वचक्रे ।

## विश्वकर्मरूपनिर्माणमुक्तं विष्णुधर्मोत्तरे ।

विश्वकर्मा तु कर्त्तव्यः श्मश्रुलोरस्तनाधरः ।
सन्दंशपाणिर्द्विभुजस्तेजोमूर्त्तिधरो महान् ॥

गुरुसौम्ययोः स्वरूपं नवग्रहदाने वक्ष्यते ।

## अङ्गिरोग्निमूर्त्तिमाह विश्वकर्मा ।

कमण्डलुं स्रुवं चैव शक्तिं दर्भमपिक्रमात् ।
कलयन्त्यङ्गिरोनाम्ना कराग्राणि समन्ततः ॥
पाणयश्चाग्निना सोऽपि कलयन्ति जपस्रजम् ।
शक्तिं च पुस्तकं चैव क्रमादेव कमण्डलुम् ॥

एतयोश्च मिलितयोर्देवतात्वम् ।

## प्रजापतिस्वरूपमुक्तं सिद्धार्थसंहितायाम् ।

यज्ञोपवीती हंसस्थ एकवक्त्रश्चतुर्भुजः ।
अक्षं स्रुचं स्रुवं धत्ते कुण्डिकां च प्रजापतिः ॥

विश्वदेवलक्षणं विश्वम्भरदाने वक्ष्यते। विधातृरूपं प्रजापतितुल्यमेव किं त्वसौ चतुर्वक्त्रो विधेयः।

## पर्जन्यलक्षणमुक्तं सिद्धार्थसंहितायाम् ।

पर्जन्यनामा विज्ञेयो गजवक्त्रत्रयान्वितः ।

योधत्ते सर्वजीवात्मा वरं वीजं च शङ्खकम् ॥
कुठारं च पयोजं च चिन्तारत्नं महाशुचिः ।
पाशं चक्रं किशलयं कुण्डीं च दशभिः करैः ॥

शम्भुः पूर्ववत् । एतयो रपि मिलितयोर्देवतात्वम् ।

**पितृलक्षणमुक्तं मयदीपिकायाम् ।**

कुशविष्टरपद्मस्थाः पितरः पिण्डपात्रिणः ।

**धर्ममूर्त्तिर्विष्णुधर्मोत्तरे ।**

चतुर्वक्त्रश्चतुष्पादश्चतुर्बाहुः सिताम्बरः ।
सर्वाभरणवान् श्वेतो धर्मः कार्यो विजानता ॥
दक्षिणे चाक्षमाला च तस्य वामे तु पुस्तकम् ।

अश्विनोर्लक्षणं हिरण्याश्वरथदाने वक्ष्यते ।

**मित्रमूर्त्तिमाह विश्वकर्मा ।**

मित्रः कमलपाणिश्च कमलासनसंस्थितः ।
द्विभुजः श्वेतमूर्त्तिश्च सर्वभूतहिते रतः ॥

वरुणस्तु पूर्ववदत्रापि मिलितयोर्देवतात्वम् । मरुद्गणरूपं मरुद्गणदाने द्रष्टव्यम् । धनेशलक्षणं धान्याचलदाने ।

**गन्धर्वरूपमाह यमः ।**

वरदो भक्तलोकानां किरीटी कुण्डली गदी ।
कार्यः सुरूपो गन्धर्वो वीणावाद्यरतस्तथा ॥

**विष्णुलक्षणमाह विश्वकर्मा ।**

प्रदक्षिणं दक्षिणाधःकरादारभ्य नित्यशः ।
विष्णुः कौमोदकीपद्मशङ्खचक्रैरलङ्कृतः ॥

पार्श्वद्वयं लोहमयं च चेलकद्वयं च भूमेः प्रादेशमात्रादूर्ध्वमवलम्ब्यम् ।

प्रादेशं वा चतुर्मात्रं भूमिं त्यक्त्वावलम्बयेत् ।

इति लिङ्गपुराणस्मरणात् ।

## मत्स्यपुराणे ।

चक्रं लिखेद्वारिजगर्भयुक्तं नानारजोभिर्भुवि पुष्पकीर्णम् ।
वितानकं चोपरि पञ्चवर्णं संस्थापयेत् पुष्पफलोपशोभम् ॥

'चक्रं द्वादशारं' वारिजगर्भयुक्तं मध्ये पद्मयुक्तम् । 'भुवि' वेदिमध्ये । 'नानारजोभिः' सितपीतादिचूर्णैः ।

अथर्त्विजो वेदविदश्च कार्याः सुरूपवेशान्वयशीलयुक्ताः ।
विधानदक्षाः पटवोऽनुकूला ये चार्यदेशप्रभवा द्विजेन्द्राः ॥
गुरुश्च वेदार्थविदार्यदेशसमुद्भवः शीलकुलाभिरूपः ।
कार्यः पुराणाभिरतोऽतिदक्षः प्रसन्नगम्भीरसरस्वतीकः ॥
सिताम्बरः कुण्डलहेमसूत्रकेयूरकण्ठाभरणाभिरामः ।

पटवो रागरहिताः । आर्यदेशो व्याख्यातः । तत्राष्टौ ऋत्विजोऽष्टौ द्वारपाला जापकाश्चाष्टौ गुरुश्चेति वरणीयाः ।

## तथा मत्स्यपुराण एवोक्तम् ।

शुभास्तत्राष्टहोतारो द्वारपालास्तथाष्ट वै ।
अष्टौ तु जापकाः कार्या ब्राह्मणा वेदपारगाः ॥
हेमालङ्कारिणः कार्या द्विजा वै पञ्चविंशतिः ।

तत्रायं प्रयोगः । अद्यामुकदानस्य यज्ञेनाहं यक्ष्ये तत्र तदङ्गभूतहोमादि कर्म कर्त्तुममुकसगोत्रममुकशर्म्माणममुकवेदाध्यायिनं ऋत्विजं त्वामहं वृणे ।

तथा अद्य चामुकमहादानयज्ञेनाहं यक्ष्ये । तत्र तदङ्गभूतसकलकर्म कर्त्तुं कारयितुं चामुकसगोत्रममुकशर्माणममुकवेदाध्यायिनमाचार्यं त्वामहं वृण इत्यादि ज्ञेयम् । वृतोऽस्मीति सर्वत्र प्रतिवचनम् ।

तद्विनियोगश्च तत्रैव दर्शितः ।

गन्धपुष्पैरलङ्कृत्य द्वारपालान् समन्ततः ।
पठध्वमिति तान् ब्रूयादाचार्यस्त्वभिपूजयन् ॥
यजध्वमिति च ब्रूयात् होतृकान् पुर एव तु ।
उत्कृष्टमन्त्रजाप्येन तिष्ठध्वमिति जापकान्—इति ॥

पूर्वेण ऋग्वेदविदौ भवेतां यजुर्विदौ दक्षिणतश्च कार्यौ ।
स्थाप्यौ द्विजौ सामविदौ च पश्चादाथर्वणावुत्तरतश्च कार्यौ ॥
विनायकादिग्रहलोकपालवस्वष्टकादित्यमरुद्गणानाम् ।
ब्रह्माच्युतेशार्कवनस्पतीनां स्वमन्त्रतो होमचतुष्टयं स्यात् ॥
जप्यानि सूक्तानि तथैव चैषामनुक्रमेणैव यथास्वरूपम् ।

अयं च पूर्वादिदिग्नियमो ऋगादिवेदविदामृत्विजां द्वारपालानां च वेदितव्यः । 'विनायकादीत्यादिशब्देन' एकादशरुद्रा नवग्रहाधिदेवताः प्रत्यधिदेवता दुर्गा वायुराकाशाश्विनौ चेति । 'स्वमन्त्रतः' स्वस्ववेदमन्त्रैः 'होमचतुष्टयमिति' वेदचतुष्टयसम्बन्धात् होमानां चतुष्टयम् । ततो गुरुणाग्निस्थापने कृते स्वे स्वे कुण्डे द्वौ द्वावृत्विजौ स्वशाखोक्तमन्त्रैरेकैकस्य विनायकादेर्द्वादश द्वादश तिलाज्याहुतीर्जुहुयाताम् । इह तावद्द्वात्रिंशद्विनायकादयो देवा दशलोकपाला वस्वष्टकमेकादशरुद्रा द्वादशादित्याः सप्तसप्त मरुद्गणाः पञ्च ब्रह्मादय इत्येवं पञ्चाशीतिसंख्येभ्यो देवेभ्यः प्रतिकुण्डं विंशत्यधिकाहुतिनियमानुपपत्तेः । तच्च परिभाषायां दर्शितम् ।

होमावसाने कृततूर्यनादो गुरुर्गृहीत्वा बलिपुष्पधूपम् ।
आवाहयेल्लोकपतीन् क्रमेण मन्त्रैरमीभिर्यजमानयुक्तः ॥
एह्येहि सर्वामरसिद्धसाध्यैरभिष्टुतो वज्रधरामरेश ।
संवीज्यमानोऽप्सरसाङ्गणेन रक्षाध्वरं नो भगवन् नमस्ते ॥

ॐ इन्द्राय नमः ।

एह्येहि सर्वामरहव्यवाह मुनिप्रवीरैरभितोऽभिजुष्ट ।
तेजोवता लोकगणेन सार्धं ममाध्वरं रक्ष कवे नमस्ते ॥

ॐ अग्नये नमः ।

एह्येहि वैवस्वत धर्मराज सर्वामरैरर्चितधर्ममूर्त्ते ।
शुभाशुभानन्दशुचामधीश शिवाय नः पाहि मखं नमस्ते ॥

ॐ यमाय नमः ।

एह्येहि रक्षोगणनायकस्त्वं विशालवेतालपिशाचसङ्घैः ।
ममाध्वरं पाहि शुभाधिनाथ लोकेश्वरस्त्वं भगवन् नमस्ते ॥

ॐ निर्ऋताय नमः ।

एह्येहि यादोगणवारिधीनां गणेन पर्जन्यमहाप्सरोभिः ।
विद्याधरेन्द्रामरगीयमान पाहि त्वमस्मान् भगवन् नमस्ते ॥

ॐ वरुणाय नमः ।

एह्येहि यज्ञेश्वर रक्षणाय मृगाधिरूढः सह सिद्धसङ्घैः ।
प्राणाधिपः कालकवेः सहाय गृहाण पूजां भगवन् नमस्ते ॥

ॐ वायवे नमः ।

एह्येहि यज्ञेश्वर यज्ञरक्षां विधत्स्व नक्षत्रगणेन सार्धम् ।
सर्वौषधीभिः पितृभिः सहैव गृहाण पूजां भगवन् नमस्ते ॥

ॐ सोमाय नमः ।

एह्येहि विश्वेश्वर नस्त्रिशूलकपालखट्वाङ्गधरेण सार्धम् ।
लोकेन भूतेश्वर यज्ञसिद्ध्यै गृहाण पूजां भगवन् नमस्ते ॥

ॐ ईशानाय नमः ।

एह्येहि पातालधरामरेन्द्र नागाङ्गनाकिन्नरगीयमान ।
यक्षोरगेन्द्रामरलोकसार्धमनन्त रक्षाध्वरमस्मदीयम् ॥

ॐ अनन्ताय नमः ।

एह्येहि विश्वाधिपते सुरेन्द्र लोकेन सार्धं पितृदेवताभिः ।
सर्वस्य धातास्यमितप्रभावो विशाध्वरं नः सततं शिवाय ॥

ॐ ब्रह्मणे नमः ।

त्रैलोक्ये यानि भूतानि स्थावराणि चराणि च ।
ब्रह्मविष्णुशिवैः सार्धं रक्षां कुर्वन्तु तानि मे ॥
देवदानवगन्धर्वा यक्षराक्षसपन्नगाः ।
ऋषयो मुनयो गावो देवमातर एव च ॥
एते ममाध्वरे रक्षां प्रकुर्वन्तु मुदान्विताः ।
इत्यावाह्य सुरान् दद्यादृत्विग्भ्यो हेमभूषणम् ॥
कुण्डलानि च सूत्राणि हैमानि कटकानि च ।
अथाङ्गुलीयं चित्राणि वासांसि शयनानि च ॥
द्विगुणं गुरवे दद्याद्भूषणाच्छादनादिकम् ।
जपेयुः शान्तिकाध्यायं जापकाः सर्वतो दिशम् ॥
उपोषितास्ततः सर्वे कृत्वैवमधिवासनम् ।
आदावन्ते च मध्ये च कुर्याद्ब्राह्मणवाचनम् ॥

'शान्तिकाध्यायः' अत्र इन्द्राग्नी भवता मवोभिरित्यादिकः ।

उपवासाशक्तौ नक्तमुक्तम् । पद्मपुराणे ।

उपवासी भवेदेव अशक्तौ नक्तमिष्यते-इति ।

एवं पूर्वेद्युरधिवासनं कृत्वा सर्वे तत्रैव वसेयुः । ततोऽन्येद्युर्दानकालसमीपे ब्राह्मणवाचनं विधाय पूर्णाहुतिप्रभृतिकर्मसमाप्तिं कुर्यात् ।

आत्ययिककार्यापत्तौ सद्योऽधिवासनविधिः । तदुक्तम् ।

सद्योऽधिवासनं वाऽथ कुर्याद्यो विकलो नरः-इति ।

अथाथर्वणगोपथब्राह्मणे ।

ऋत्विग्यजमानौ केशश्मश्रुनखानि वापयित्वा संभारानुकल्पद्रव्यं तत्तदाज्यभागान्तं कृत्वा अयं नो अग्निरिति महाव्याहृतयो ब्रह्मयज्ञानमन्ने

गोभिरग्नेभ्यावर्त्तिनग्ने: प्रजातं यदावध्नन्निति शांत्युदकेन सम्पातमानीय स्नानकलशेषु निर्वपेदिदमाप आपोहिष्ठाबाहुभ्यामभिषेचयेद्यथोक्तमञ्जनानुलेपनं कारयित्वा वासो गन्धान् स्रजं चावध्याभिजिन्मुहूर्त्ते तुलां हिरण्यवर्णैः पवित्रैरभ्युक्ष्य गन्धपुष्पधूपैरर्चयित्वा उपहारांश्च दत्त्वा राजानमाहूयार्घं दत्त्वा तुलामारोपयेत् ।

मत्स्यपुराणे ।

ततो मङ्गलशब्देन स्नापितो वेदपुङ्गवैः ।
त्रिःप्रदक्षिणमावृत्य गृहीतकुसुमाञ्जलिः ॥
शुक्लमाल्याम्बरधरस्तां तुलामभिमन्त्रयेत् ।

स्नपनं तु कुण्डसमीपस्थितकलशोदकैः कर्त्तव्यम् । स्नपनमन्त्राश्च सुरास्त्वामभिषिञ्चन्त्वित्यादयो ग्रहयज्ञोक्ता वेदितव्याः ।

नमस्ते सर्वदेवानां शक्तिस्त्वं सत्यमाश्रिता ।
साक्षिभूता जगद्धात्री निर्मिता विश्वयोनिना ॥
एकतः सर्वसत्यानि तथानृतशतानि च ।
धर्माधर्मकृतां मध्ये स्थापितासि जगत्प्रिये ॥
त्वं तुले सर्वभूतानां प्रमाणमिह कीर्त्तिता ।
मां तोलयन्ती संसारादुद्धरस्व नमोऽस्तु ते ॥
योऽसौ तत्वाधिपो देवः पुरुषः पञ्चविंशकः ।
स एषोऽधिष्ठितो देवि त्वयि तस्मान्नमो नमः ॥
नमो नमस्ते गोविन्द तुलापुरुषसंज्ञक ।
त्वं हरे तारयस्वास्मान् अस्मात् संसारसागरात् ॥
पुण्यकालं समासाद्य कृत्वैवमधिवासनम् ।
पुनः प्रदक्षिणं कृत्वा तुलामारोहयेद्बुधः ॥
सखड्गचर्मकवचः सर्वाभरणभूषितः ।

धर्मराजमथादाय हैमसूर्येण संयुतम् ॥
कराभ्यां बद्धमुष्टिभ्यामास्ते पश्यन् हरेर्मुखम् ।

धर्मराजस्तु महिषारूढश्चतुर्भुजो दण्डपाशपाणिः कर्त्तव्यः । सूर्योऽपि सुवर्णमयः पद्मासनः पद्मधरः कार्यः । तौ च दक्षिणवाममुष्टिस्थौ विधाय हरेस्तुलामध्यस्थितस्य मुखं पश्येदित्यर्थः ।

ततोऽपरे तुलाभागे न्यसेयुर्द्विजपुङ्गवाः ।
समादभ्यधिकं यावत् काञ्चनं चातिनिर्मलम् ॥
पुष्टिकामस्तु कुर्वीत भूमिसंस्थं नराधिपः ।

पुष्टिकाम इति गुणफलसम्बन्धो गोदोहनेन पशुकामस्य प्रणयेदिति तदवगन्तव्यम् । इह तावदादौ राज्ञस्तुलाधिरोहणं पश्चात् सुवर्णन्यास इत्युक्तम् ।

## गोपथब्राह्मणे तु ।

सखड्गः सशिरस्त्राणः सर्वाभरणभूषणः ।
तपनीयमग्रतः कृत्वा पश्चात् तोल्यो नराधिपः ॥
दक्षिणे तु सुवर्णं स्यादुत्तरे च नराधिपः–इति ।
ततश्चेतिहासपुराणं पञ्चमो वेदः–इति ।

तुल्यबलत्वे अनुष्ठानविकल्पः । ये तु मन्यन्ते स्मृतिवत्पुराणानीति तन्मते पूर्वं सुवर्णारोपणम् पश्चाद्राजारोपणमिति ।

क्षणमात्रं ततः स्थित्वा पुनरेवमुदीरयेत् ।
नमस्ते सर्वभूतानां साक्षिभूते सनातनि ॥
पितामहेन देवि त्वं निर्मिता परमेष्ठिना ।
त्वया धृतं जगत् सर्वं बहिःस्थावरजङ्गमम् ॥
सर्वभूतात्मभूतस्थे नमस्ते विश्वधारिणि ।

## वह्निपुराणे ।

कृत्वा तु विधिवद्धोमं सुस्नातस्तीर्थवारिणा ।

तुला पूज्या विधानेन ब्राह्मैर्मन्त्रैश्च वैदिकैः ॥
समुपोष्यार्चयेद्देवं पीताम्बरधरं हरिम् ।
पश्चात् तदारुहेच्छिक्यं प्राङ्मुखोदङ्मुखोऽथ वा ॥
जाम्बूनदेन शुद्धेन पूरयित्वा तुलां पृथक् ।
सर्वाभरणपूर्णाङ्गः सवस्त्रासनसंयुतः ॥
तत्र स्थित्वा मुहूर्त्तं स द्रव्यात् तिष्ठेत् समुन्नतिम् ।
जपेन्मन्त्रं च दैाराणं पुनन्तु इति वा ऋचम् ॥
यथा पवित्रमतुलमपत्यं जातवेदसः ।
तथा स्वेन पवित्रेण सुवर्णं हि पुनातु माम् ॥
रुद्रस्य सुमहत्तेजः कार्त्तिकेयस्य सम्भवः ।
तथा स्वेन पवित्रेण सुवर्णं हि पुनातु माम् ॥
यथाग्निर्देवताः सर्वाः सुवर्णं च तदात्मकम् ।
तथा स्वेन पवित्रेण सुवर्णं हि पुनातु माम् ॥
यत् कृतं मे स्वकायेन मनसा वचसा तथा ।
दुष्कृतं तत् सुवर्णस्थं पातु मुक्तिः परा शुभा ॥
इत्युक्त्वा तदृत्विजे च दद्याच्छिष्यः स्वमेव हि ।
समुत्तीर्याङ्गदं तच्च गृह्णीयादपरं ततः ॥

**मत्स्यपुराणे ।**

ततोऽवतीर्य गुरवे पूर्वमर्धं निवेदयेत् ।
ऋत्विग्भ्योऽपरमर्धं तु दद्यादुदकपूर्वकम् ॥
गुरवे ग्रामरत्नानि ऋत्विग्भ्यश्च निवेदयेत् ।

**तत्रायं प्रयोगः ।**

ॐ अद्य अमुकस्मिन् देशे अमुकस्मिन् काले अमुकसगोत्राय अमुकशर्मणे ब्राह्मणाय अमुकसगोत्रः अमुकशर्मा इदं तुलापुरुषसुवर्णार्धं अमुककामस्तुभ्यमहं संप्रददे नमः ।

एतद्दानप्रतिष्ठार्थमिमां दक्षिणां तुभ्यमहं सम्प्रददे नमः ।

एतदुदकपूर्वकं पूर्वार्धं गुरवे दद्यात् । ऋत्विग्भ्योऽप्येवमपरम् ।

अदक्षिणं तु यद्दानं तत्सर्वं निष्फलं भवेत् ।

इति वचनादिह दक्षिणापेक्षायां गुरवे ग्रामरत्नादीनि श्रुतं दक्षिणात्वेन सम्बध्यते।

## अथ गोपथब्राह्मणे ।

अच्युताद्योरितिचतसृभिरवरोहयेत् तां तुलामुपसंस्कृत्य महाव्याहृतिसावित्रीशान्तिभिरंहोमुपयैराज्यं हुत्वा सूर्यस्यावृतमिति प्रदक्षिणमावृत्यालङ्कारं कर्त्रे दद्यात् सहस्रं दक्षिणां ग्रामवरं चेति ।

'कर्त्रे' आचार्याय ऋत्विजे च । तत्रार्धमाचार्यस्यार्धमृत्विजाम् । 'सहस्रं दक्षिणाम्' इति सहस्रशब्दस्यानुपात्तसंख्येयविशेषतयौ मत्स्यपुराणे च रत्नानीत्यत्र संख्याविशेषानुपादानात् शाखान्तरे च वररत्नानां दक्षिणास्थानश्रुतेः रत्नसहस्रमेव न्याय्यम् । तत् तु यथाशक्ति यथालाभं मुक्तादीनामन्यतमस्य सहस्रमवगम्यते दक्षिणाधिकरणन्यायेन गवामिव समानजातीयानामेव संख्यासम्बन्धात् । 'ग्रामवरं' ग्रामश्रेष्ठम् ।

केचित् तु गुरवे ग्रामरत्नानीत्यत्रापि श्रेष्ठतावचनो रत्नशब्द इति व्याचक्षते । तेषां मते–

सर्वेषामेव दानानां सुवर्णं दक्षिणा स्मृता ।

इति वचनात् सहस्रं दक्षिणामित्यत्र सुवर्णमेव दक्षिणेत्यवगन्तव्यम् । सहस्रसंख्याव्यवच्छेदश्च तस्य कृष्णलात् प्रभृति यथाशक्ति सम्पादनीय इति ।

प्राप्य तेषामनुज्ञां च तथान्येभ्योऽपि दापयेत् ।

दीनानाथविशिष्टादीन् पूजयेत् ब्राह्मणैः सह ॥

अत्रान्यशब्देन जापका उच्यन्ते । विशिष्टा अब्राह्मणा अपि पितृशुश्रूषादिगुणयुक्ताः ।

इह तावदर्धं गुरवेऽर्धमृत्विग्भ्यः, समस्ततुलापुरुषद्रव्यं देयमित्येकः पक्षः । अस्मिन् पक्षे जापकेभ्योऽन्यैव दक्षिणा दातव्या गुर्वादीनामनुज्ञयान्येभ्योऽपि दद्यादित्यपरः पक्षः । तत्र गुर्वादीनां प्रदेयद्रव्यपरिमाणानिर्देशे धरार्धचतुर्भागं गुरवे

विनिवेदयेदितिविकृतिभूतपृथिव्यादिदानप्रकरणश्रुतं देयद्रव्यसंख्यानियमो न्याय्यः । येन वा तुष्यते गुरुरितिसामान्योपदिष्टमाचरणीयम् । तथा दीनानाथविशिष्टेभ्योऽपि देयमिति तृतीयः पक्षः । अत्र यद्यपि विकल्पवाची शब्दो नास्ति तथापि पक्षान्तरश्रयणेनार्थाद्विकल्पः सम्पद्यते ।

मत्स्यपुराणे ।

न चिरं धारयेद्गेहे सुवर्णं प्रोक्षितं बुधः ।
तिष्ठद्भयावहं यस्माच्छोकव्याधिकरं नृणाम् ॥
शीघ्रं परस्वीकरणाच्छ्रेयः प्राप्नोति पुष्कलम् ।

ततः प्राग्वत् पुण्याहवाचने कृते देवतावेदिसमीपं गत्वा पूर्वं च देवतानां पूजादि यजमानः कुर्यात् ।

आचार्यस्तु—

यान्तु देवगणाः सर्वे पूजामादाय पार्थिवात् ।
इष्टकामप्रदानार्थं पुनरागमनाय च ॥

इत्यनेन मन्त्रेण देवतानां विसर्जनं कुर्यात् ।

अनेन विधिना यस्तु तुलापुरुषमाचरेत् ।
प्रतिलोकाधिपस्थाने प्रतिमन्वन्तरे वसेत् ॥
विमानेनार्कवर्णेन किङ्किणीजालमालिना ।
पूज्यमानोऽप्सरोभिश्च ततो विष्णुपुरं व्रजेत् ॥
कल्पकोटिशतं यावत् तस्मिन् लोके महीयते ।
कर्मक्षयादिह पुनर्भुवि राजराजो
भूपालमौलिमणिरञ्जितपादपीठः ।
श्रद्धान्वितो भवति यज्ञसहस्रयाजी
दीप्तप्रतापजितसर्वमहीपलोकः ॥
यो दीयमानमपि पश्यति भक्तियुक्तः
कालान्तरे स्मरति वाचयतीह लोके ।

यो वा शृणोति पठतीन्द्रसमानरूपः

प्राप्नोति धाम स पुरन्दरदेवजुष्टम् ॥

## वह्निपुराणे ।

एवं दत्त्वा सुवर्णं च ब्रह्महत्यादिकं तु तत् ।

पापान् निहत्य पुरुषः स्वर्गलोकं च गच्छति ॥

तत्र स्थित्वा चिरं राजन् यदायाति महीतले ।

राजराजेश्वरः श्रीमान् वीतशोको निरामयः ॥

रूपसौभाग्यसम्पन्नो नित्यं धर्मपरायणः ।

पुनर्विष्णुपदं याति यत्र गत्वा न शोचति ॥

इति तुलापुरुषदानविधिः ।

## सनत्कुमार उवाच ।

राज्ञां षोडशदानानि नन्दिना कथितानि च ।

धर्मकामार्थमुक्त्यर्थं कर्मणैव महात्मनाम् ॥

तुलाधिरोहणाद्यानि शृणु तानि यथातथम् ।

ग्रहणादिषु कालेषु शुभे देशे सुशोभने ॥

विंशहस्तप्रमाणेन मण्डपं कूटमेव वा ।

अथाष्टादशहस्तेन कलाहस्तेन वा पुनः ॥

कृत्वा वेदिं तथा मध्ये नवहस्तप्रमाणतः ।

अष्टहस्तेन वा कुर्यात् सप्तहस्तेन वा पुनः ॥

द्विहस्ताप्यर्धहस्ता वा वेदिका चातिशोभना ।

द्वादशस्तम्भसंयुक्ता साधुरम्याग्रमस्तका ॥

परितो नव कुण्डानि चतुरस्राणि कारयेत् ।

अथेन्द्रेशानयोर्मध्ये प्रधानं ब्रह्मणः सुत ॥

अथ वा चतुरस्रं च योन्याकारम..ः परम् ।

स्त्रीणां कुण्डानि विप्रेन्द्र योन्याकाराणि कारयेत् ॥
अर्धचन्द्रं त्रिकोणं च वर्त्तुलं कुण्डमुत्तमम् ।
षडस्रं सर्वतो वापि त्रिकोणं पद्मसन्निभम् ॥
अष्टास्रं सर्वमार्गेषु स्थण्डिलं केवलं तु वा ।
चतुर्द्वारसमोपेतं चतुस्तोरणभूषितम् ॥
दर्भजालकसंयुक्तं दर्भमालासमाश्रितम् ।
अष्टमङ्गलसंयुक्तं वितानोपरिशोभितम् ॥
तुलायाश्च द्रुमाश्चाथ विल्वाद्याश्च विशेषतः ।
विल्वाश्वत्थपलाशाद्याः केवलं खदिरं तु वा ॥
एवं स्तम्भाः कृता येन तेन सर्वं तु कारयेत् ।
अथ वा मिश्रमार्गेण वेणुना वा प्रकल्पयेत् ॥
अष्टहस्तप्रमाणं तु हस्तद्वयसमायतम् ।
तुलास्तम्भस्य विष्कम्भो नाहस्तत्त्रिगुणो मतः ॥
द्व्यङ्गुलेन विहीनं तु सुवृत्तं निर्व्रणं तथा ।
उभयोरन्तरं चैव षड्हस्तं नृपतेः स्मृतम् ॥
द्वयोश्चतुर्हस्तकृतमन्तरं स्तम्भयोरपि ।
षड्हस्तमन्तरं ज्ञेयं तयोरुपरिसंस्थितम् ॥
वितस्तिमात्रविस्तारं विष्कम्भस्तावदङ्गुलः ।
स्तम्भयोस्तु प्रमाणेन उत्तरं द्वारसम्मितम् ॥
षट्त्रिंशन्मानसंयुक्तं व्यायामं तु तुलात्मकम् ।
विष्कम्भमष्टमात्रं तु यवपञ्चकसंयुतम् ॥
षट्त्रिंशमानमात्रं स्यान्निर्व्रणं वर्त्तुलं शुभम् ।

विंशहस्तेत्यादि । 'कूटः' मण्डपविशेषः । 'कलाहस्तेन' षोडशहस्तेन । विंश-तिहस्तादिमण्डलत्रये क्रमात्तवादिहस्तविस्तारस्य वेदित्रयस्य द्विहस्तोऽध्यर्धहस्तो हस्तश्चेत्युच्छ्रयो विधेयः ।

विधाय मण्डपं तत्र तन्मध्ये वेदिकां नयेत् ।
नवाष्टसप्तहस्तेन द्विहस्ताध्यर्धहस्ततः ॥
विस्तारेणोच्छ्रयेणापि द्वादशस्तम्भसंयुताम् ।

इतिकामिकोक्तेः । 'साधुरम्यायमस्तकेति' समचतुरस्रत्वं समतलत्वं चोपरिभागस्य विधेयमित्यर्थः । अथ वा चतुरस्रमिति पूर्वादिकुण्डानां क्रमाच्चतुरस्रादयो नव संनिवेश्याः स्त्रीणां तु यजमानत्वेन योन्याकारायेव अथवा यथोक्ताकारत्वेन स्थण्डिलत्वेन सर्वत्र हस्तमात्रं क्षेत्रं क्षेत्रफलं सममेव साध्यं तच्च परिभाषायामुपपादितम् ।

वटोदुम्बराश्वत्थप्लक्षजानि चत्वारि तोरणानि दिग्गजाष्टकं तत्तद्दिक्कालवर्णपताका अष्टमङ्गलानि विश्वचक्रदाने वक्ष्यन्ते ।

अष्टहस्तप्रमाणं तुलास्तम्भयोरायतम् । आयामो दैर्घ्यमित्यर्थः । 'हस्तद्वयेति' हस्तपरिमाणस्तुलास्तम्भयोर्विष्कम्भ इत्यन्वयः । तस्मात् त्रिगुणः परिणाहः । द्व्यङ्गुलेनहीन इति स एव परिणाहः क्रमहान्या अग्रे अङ्गुलद्वयहीनः सम्पादनीयः ।

कामिके तु-

सप्तषट्पञ्चहस्तैस्तुपार्श्वस्तम्भोच्छ्रयो मतः ।
अष्टहस्तादितश्चाथ द्विपञ्चद्वयसाङ्गुलः ॥
तुलास्तम्भस्य विष्कम्भो नाहस्तत्रिगुणो मुने ।
द्व्याङ्गुलविहीनं तु सुवृत्तं निर्व्रणं तथा ॥

इति द्विपञ्चद्वयसाङ्गुलो दशाङ्गुलमानो विष्कम्भः ।

त्रिंशदङ्गुलः परिहाणः । स च क्रमहान्या अग्रे अष्टाविंशत्यङ्गुल इत्यर्थः । स्तम्भयोरन्तरं षड्हस्तं चतुर्हस्तं वा दृश्यस्तम्भोच्छ्रयानुरूपं विधेयम् । षड्हस्तस्तम्भयोरन्तरालं गुणदैर्घ्यस्योपलक्षणम् । उत्तरं च विस्तारोत्सेधाभ्यां द्वादशाङ्गुलम् । तत्प्रान्तरन्ध्रयोस्तम्भाग्रशिखरे प्रवेश्य तोरणं निष्पाद्यम् ।

अथतुलादण्डस्य मानमाह 'षट्त्रिंशन्मानमित्यादि' व्यायामो नाम प्रसारितसबाहुहस्तद्वयस्य तिर्यगन्तरालबाह्वोः करसंयुतयोर्व्यायामस्तिर्यगन्तरं तयोरित्यभिधानात् । ततः षट्त्रिंशदङ्गुलान्वितव्यायाममात्रं तुलादण्डे दैर्घ्यं 'विष्कम्भमष्टमात्रमि-

ति' अष्टाङ्गुलः सपञ्चयवस्तुलादण्डप्रान्तयोर्न्यासः। तत्रार्थाद्यवोनषट्त्रिंशदङ्गुलः परिणाहः । 'षट्त्रिंशन्मानमात्रमिति' तुलादण्डमध्ये षट्त्रिंशदङ्गुलः परिणाहस्तत्रार्थाद्-द्वादशाङ्गुलो न्यासः ।

अष्टाङ्गुलेन विस्तारस्त्वग्रे भूतयवान्वितः ।
षट्त्रिंशन्मात्रनाहस्तु मध्यमे तु विधीयते ॥

इति कामिकोक्तेः ।

अग्रे मूले च मध्ये च हैमपट्टेन बन्धयेत् ।
पट्टमध्ये प्रकर्त्तव्यमवलम्बनकत्रयम् ॥
ताम्रेण वापि रूप्येण आयसेनैव कारयेत् ।
मध्ये चोर्ध्वमुखं कार्यमवलम्बं सुशोभनम् ॥
रश्मिभिस्तोरणाग्रे वा बन्धयेच्च विधानतः ।
जिह्वामेकां तुलामध्ये तोरणं च विधीयते ॥
उत्तरस्य तु मध्येऽथ शङ्कुद्वयमनुत्तमम् ।
वितानेनोपरिच्छाद्य दृढं सम्यक् प्रयोजयेत् ॥
सुदृढं च तुलामध्ये मानमङ्गुलमानतः ।
पट्टस्यैव तु विस्तारः पञ्चमात्रप्रमाणतः ॥
बध्नीयाच्चक्रपाशं च अवलम्बेन सुस्थितम् ।
शुल्वजौ च दृढौ विद्वान् बन्धनेन तु कारयेत् ॥
शिक्योऽधस्तात् प्रकर्त्तव्यौ पञ्चप्रादेशविस्तरौ ।
सहस्रेण तु कर्त्तव्यौ पञ्चप्रादेशविस्तरौ ॥
सहस्रेण तु कर्त्तव्यौ पलेनाधारकावुभौ ।
शताष्टकेन वा कुर्यात् पलानां षट्शतेन वा ॥
चतुस्तालप्रविस्तारं मध्यमं परिकीर्त्तितम् ।
सार्धत्रितालविस्तारो नियमश्च विधीयते ॥

पञ्चमात्रं चतुर्मात्रं त्रिमात्रं फलमुच्यते ।
चतुर्द्वारसमोपेतं द्वारमङ्गुलिनाथ वा ॥
कुण्डलैश्च समोपेतं श्लक्ष्णस्वच्छसमन्वितैः ।
कुण्डले कुण्डले कार्यं श्टङ्खलोपरिमण्डलम् ॥
श्टङ्खलाधारवलयमवलम्बेन योजयेत् ।
प्रादेशं वा चतुर्मात्रं भूमिं त्यक्त्वावलम्बयेत् ॥
घटौ पुरुषमात्रौ तु कर्त्तव्यौ शोभनावुभौ ।
द्विहस्तबालुकापूर्णे शिले तत्र विनिक्षिपेत् ॥
द्विहस्तमात्रमवटौ स्थापनीयौ प्रयत्नतः ।
शेषं सम्पूरयेत् विद्वान् बालुकाभिः समन्ततः ॥
येन निश्चलतां गच्छेत् तेन मार्गेण कारयेत् ।

'अग्रे मूले' इत्याद्यवलम्बनकीलकप्रवेशार्थवेधनिघातादिना यथा तुला न शीर्येत तथा हेमादिना पट्टबन्धस्तुलायाः कार्यः । 'अवलम्बनं' समश्टङ्खलादिसंश्लिष्टवलयाधारोच्चकतुण्डाकारोभयाग्रलम्बनं कार्यम् । अथ वा तुलामध्यावलम्बनस्थान ऊर्ध्वमुखं ताम्रादिकीलकं निधाय तन्मूलच्छिद्रप्रोततिर्यक्कीलकस्थितं मध्यकीलकोभयपार्श्वस्थायि ताम्रादिमयं तोरणं कृत्वा तदग्रवलयबन्धरश्मिभिरुत्तराधोऽवलम्बितं वलयं संयोजयेत् । 'जिह्वामेकामिति' पूर्वोक्त एव तुलामध्यवर्त्यूर्ध्वमुखः कटकाख्यः कीलको जिह्वातोरणमपि प्रागुक्तमेव एतच्च सुवर्णकारादिलघुतुलासु दृश्यते । 'उत्तरस्य त्विति' उत्तरमध्यावलम्बितकुण्डलाग्रेऽयःशङ्कुरूर्ध्वमुखस्तस्य मूल उत्तरोपरि वितानवद्विततं लोहपट्टं निधाय तदुपरि तन्मूलं द्विधाभूतं तिर्यग्वितत्य घटयेत् । 'शङ्कुः सुषिरसम्पन्न' इति कुण्डलिताग्रे उत्तममध्यावलम्बितेऽधोमुखशङ्कौ तुलामध्योर्ध्वमुखालम्बनशङ्कौ चैकं वलयमङ्गुष्ठस्थूलं नियोजयेत्* ।

शङ्कुः सुषिरसम्पन्नो वलयेन समन्वितः ।

इति कामिकोक्तेः ।

---

* योजयेदिति पाठान्तरम् ।

'पट्टस्येति' पूर्वोक्तपट्टस्येयं मानोक्तिः । पञ्चमात्रं यवाङ्गुलं बध्नीयादिति तुला-प्रान्तावलम्बाभ्यां तत्तच्छिक्यशृङ्खलाधारं चक्रपाशाख्यं वलयं योजयेत् । 'शुल्वं' ताम्रम् । 'आधाराविति' ताम्रपलानां दशाष्टषट्शतैः क्रमात् पञ्चादिप्रादेश विस्तारौ पञ्चचतुस्त्र्यङ्गुलोच्छ्रितप्रान्तावङ्गुलनाहचतुःच्छिद्रप्रोतचतुर्वलयान्वितौ यजमानद्रव्यधाराधारकौ कार्यौ । तद्वलयचतुष्काश्लिष्टशृङ्खलाचतुष्कं शिक्याख्यमुपरिविरचितवलयद्वयं तुलाग्राधोवलम्बकौ योजयेत् । घटाख्याधाररन्ध्रचतुष्कं मधूच्छिष्टेन संश्लिष्टं कार्यम् । आधारौ च भूमेरुपरि चतुरङ्गुलमात्रे प्रादेशमात्रे वान्तरितेऽवलम्ब्यौ, अवटौ तु दक्षिणोत्तरस्तम्भनिखनार्थौ । अत्र स्तम्भयोः दक्षिणोत्तरत्वं तुलायाश्च प्राक्-पश्चिमायतत्वमवधेयम् ।

स्वमेयं चैन्द्रदिग्भागे सुवर्णं तत्र निक्षिपेत् ।

इति वक्ष्यमाणत्वात् । द्विहस्तबालुकापूर्णां तत्र शिले पट्टशिलाख्ये निधाय बालुकाभिः प्रपूर्य दृढयेत् ।

श्रूयतां परमं गुह्यं वेदिकोपरि मण्डलम् ।
अष्टमङ्गलसंयुक्तमङ्गुलाङ्कुशशोभितम् ॥
फलपुष्पसमाकीर्णे धूपदीपसमन्विते ।
वेदीमध्ये प्रकर्त्तव्यं दर्पणोदरसन्निभे ॥
आलिखेन्मण्डलं पूर्वं चतुर्द्वारसमन्वितम् ।
शोभोपशोभासंयुक्तं कर्णिकाकेसरान्वितम् ॥
चुल्लिजातिसमोपेतं पञ्चवर्णं च कारयेत् ।
वज्रं प्रागुत्तरे भाग आग्नेय्यां शक्तिमुज्वलाम् ॥
आलिखेद्दक्षिणे दण्डं नैर्ऋत्यां खड्गमालिखेत् ।
पाशं च वारुणे लेख्यं ध्वजं च वायुगोचरे ॥
कौवेर्यां च गदा लेख्या ईशान्यां शूलमालिखेत् ।
शूलस्य वामदेशे तु चक्रं पद्मं च दक्षिणे ॥
एवं लिखित्वा पश्चाच्च होमकर्म समारभेत् ।

प्रधानहोमं गायत्र्या स्वाहा शक्राय वह्नये ॥
यमाय देवराजाय वरुणाय च वायवे ।
कुवेरय तथेशाय विष्णवे ब्रह्मणे पुनः ॥
स्वाहान्तं प्रणवेनैव होतव्यं विधिपूर्वकम् ।
स्वशाखाग्निमुखेनाऽथ जयादिप्रतिसंयुतम् ॥
स्विष्टान्तं सर्वकार्याणि कारयेद्वेदवित्तमः ।
सर्वहोमाग्रहोमे च समित्पालाश्यथोच्यते ।
एकविंशतिसंख्याकं मन्त्रेणानेन होमयेत् ॥

अयं त इध्म आत्मा जातवेदस्तेनद्ध्यस्व वर्धस्व चेद्धवर्धय चास्मान् प्रजया पशुभिर्ब्रह्मवर्चसेनान्नाद्येन समेधयः स्वाहा भूः स्वाहा भुवः स्वाहा स्वः स्वाहा भूर्भुवः स्वः स्वाहा ।

समिद्धोमश्चरूणां च घृतस्य च यथाक्रमम् ।
शुक्लान्नं पायसं चैव मुद्गानां चरवः स्मृताः ॥
सहस्रं वा तदर्धं वा शतमष्टोत्तरं तु वा ।

अग्न आयूंषि पवस आसुवोर्जमिषं च नः । आरेबाधस्व दुच्छुनाँ अग्निर्ऋषिः पवमानः पाञ्चजन्यः पुरोहितः तमीमहे । महामयं अग्नेप-बस्वस्वपा अस्मे वर्चः सुवीर्यं दधद्रायं मयि पोषम् । प्रजापते नत्वदेता-न्यन्यो विश्वाजातानि परिता बभूव । यत्कामास्ते जुहुमस्तवन्नो अस्त्वय-ममुष्य पितासावस्य पिता वयं स्यामः पतयो रैणां ॐ स्वाहा ।

तत्सर्वं सर्वहोमे तु सामान्यं विधिपूर्वकम् ।
गायत्र्या च प्रधानस्य समिद्धोमस्तथैव च ॥
चरूणां च तथाज्यस्य शक्रादीनां च होमयेत् ।
वज्रादीनां च होतव्यं सहस्राद्यं ततः क्रमात् ॥
ब्रह्मयज्ञानमन्त्रेण ब्रह्मणे विष्णवे नमः ।

नारायणाय विद्महे वासुदेवाय धीमहि। तन्नो विष्णुः प्रचोदयात् ॥

अयं विशेषः कथितो होममार्गः सुशोभनः ।
दूर्वायाः क्षीरसिक्तेन पञ्चविंशत् पृथक् पृथक् ॥
त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् ।
उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् स्वाहा ॥
दूर्वाहोमः प्रशस्तोऽयं वास्तुहोमश्च सर्वथा ।
प्रायश्चित्तमघोरेण सर्पिषा च शतं शतम् ॥

'श्रूयतामित्यादि' पूर्वोक्तवेदमध्ये सर्वतोभद्राख्यं मण्डलं लेख्यम् । तच्च शोभोपशोभाशब्दात् पञ्चसारोक्तं दीक्षामण्डलं ग्राह्यम् । एतयोर्लक्षणमुपवर्णितं परिभाषायाम् । 'वज्रमिति' मण्डलाद्बहिर्दिक्षु दिक्पालायुधानि लेख्यानि गायत्र्या रौद्र्या प्रधानकुण्डे होमः ।

तत्पुरुषाय विद्महे महादेवाय धीमहि। तन्नो रुद्रः प्रचोदयात् ॥

इति रुद्रगायत्री ।

'स्वाहा शक्राय' इत्यादि प्रणवादिभिश्चतुर्थीयुक्तैः स्वाहान्तैः शक्रादिलोकपालनामभिः प्राच्यादिकुण्डाष्टके होमः । ब्रह्मविष्ण्वोरपीशानकुण्डे होमः कार्यः । स्वशाखाग्निमुखेन समिद्धेऽग्नौ प्रधानहोमानन्तरमाज्येन जयाद्युपहोमाः कार्याः ॥

उक्तं ह्यापस्तम्बेन ।

यथा प्रदेशं प्रधानाहुतीर्हुत्वा जयाभ्यातान् राष्ट्रभृतः प्राजापत्यान्ता व्याहृतिर्विहिता सौविष्टकृतिमित्युपजुहोति ।

इयं च जयाद्युक्तिः स्वस्वगृह्योक्तोपरिष्टात् तन्त्रोपलक्षणार्था । 'सर्वहोमः' प्रधानहोमः । तत्रापि पालाशी समित् । अत्र होमोऽन्वाधानेध्मानादिरूपः ।

सर्वहोमाग्रहोमे च समित् पालाश्यथोच्यते ।

एकविंशतिसंख्याकमित्येतत् पृथक् वाक्यम् । तत्र व्याहृतिभिरन्वाधाने चतस्रः समिधो होतव्या अयं त इति मन्त्रेण । परिधारानुयाजादिविनियुक्तावशिष्टेध्माधानं कार्यम् । इदं च स्वगृह्योक्तपूर्वतन्त्रोपलक्षणम् । अथ समिदादिहोमः कर्त्तव्यस्तत्र चरवः

शुद्धाचार्या इत्थं समिदादिपञ्चद्रव्याणि होम्यानि। अग्न आयूंषीत्यादिमन्त्रचतुष्के-णाज्यहोमः प्रधानहोमात् पूर्वं कार्यः। रुद्रगायत्र्यैव प्रधानकुण्डे समिदाज्यचरुहोमः। इन्द्रादि दिक्पालानां स्वस्वमन्त्रेण तत्र कुण्डेषु सहस्रसंख्यः पञ्चशतसंख्यो वाज्य-होमः। प्रतिकुण्डं त्र्यम्बकेन पञ्चविंशतिसंख्यो दूर्वाहोमो वास्तोष्पत इतिमन्त्रेण वा-स्तुहोमश्च विधेयः। शिखिपर्जन्यादितत्तद्देवतानामभिर्वास्तुहोमस्तानि च गृहदान-प्रकरणे वक्ष्यन्ते। आज्येन शतसंख्यः प्रायश्चित्तहोमः। अयमिह सर्वोऽपिहोमः सपरि-वारेश्वरपूजनानन्तरं कार्यः।

मध्यमे देवदेवेशं वामे गौरीसमायुतम्।

इत्यादिना देवपूजामुक्त्वा-

तती होमः प्रकर्त्तव्यः।

इतिकामिकोक्तेः।

ब्रह्माणं दक्षिणे वामे विष्णुं विश्वगुरुं शिवम्।
मध्ये वेद्या महादेवमिन्द्रादिगणसंवृतम्॥
आदित्यं भास्करं भानुं रविं देवं दिवाकरम्।
ऊषां प्रभां तथा प्रज्ञां सन्ध्यां सावित्रिकामपि॥
छायां पुष्टिं धृतिं तुष्टिं शाखोकाय* महात्मने।
विस्तरां शुभगां चैव बोधनीं च प्रदक्षिणाम्॥
आप्यायिनीं च संपूज्य देवं पद्मासने रविम्।
प्रभूतं प्राक् प्रकर्त्तव्यं विमलं दक्षिणे तथा॥
सारं पश्चिमभागे च आराध्यं चोत्तरे यजेत्।
मध्ये सुखं विजानीयात् केसरेषु यथाक्रमम्॥
दीप्तां सूक्ष्मां जयां भद्रां विभूतिं विमलां क्रमात्।
अमोघां विद्युतां चैव मध्यतः सर्वतोमुखीम्॥

---

* खखोल्काय महात्मन इति क्वचित् पाठः।

सोममङ्गारकं चैव बुधं जीवमनुक्रमात् ।
भार्गवं च तथा मन्दं राहुं केतुं समन्ततः ॥
पूजयेद्धोमयेदर्घं दापयेच्च विशेषतः ।
ब्राह्मणान् भोजयेत् तत्र वेदवेदाङ्गपारगान् ॥
विद्याध्ययनसम्पन्नान् कृत्वैवं विधिविस्तरम् ।
होमे प्रवर्त्तमाने च पूर्वदिक्स्थानमध्यमे ॥
आरोहयेद्विधानेन रुद्राध्यायेन वै नृपम् ।
धारयेत् तत्र यज्वानं घटिकैकाविधानतः ॥
यजमानो जपेन्मन्त्रं रुद्रगायत्रिसंज्ञकं ।
घटिकार्धं तदर्धं वा तत्रैवासनमारभेत् ॥
आलोक्य वसनं धीमान् कूर्चहस्तः समाहितः ।
नृपश्च भूषणयुतः खड्गखेटकधारकः ॥
स्वस्तिऋद्ध्यादिभिश्चादावन्ते चैव विशेषतः ।
पुण्याहं ब्राह्मणैः कार्यं वेदवेदाङ्गपारगैः ॥
जयमङ्गलशब्दादिब्रह्मघोषैः सुशोभनैः ।
नृत्यवाद्यादिभिर्गीतैः सर्वशोभासमन्वितैः ॥
स्वमेयं चैन्द्रदिग्भागे सुवर्णं तत्र निक्षिपेत् ।
तुलाधारौ समौ वृत्तौ तुलाभारस्तदाभवेत् ॥

'ब्रह्माणं' इत्यादि मध्ये ब्रह्मादिदेवतापरिवृतमीश्वरं संपूज्य ततः सूर्यं पूजयेत् । मण्डलात् प्राक् कल्पितकर्णिकामध्ये ऊषादित्यौ पूज्यौ । ततः प्रभाभास्करौ प्रज्ञाभानू देवहुत्यादिमिथुनचतुष्कमाग्नेयादिकोणेषु पूज्यम् । छायादिशक्तिचतुष्टयं तु प्राच्यादिदिक्षु पूजनीयम् । विस्ताराद्यास्त्वाग्नेयादिष्वासनपादेषु प्रभूतादयस्तु पूर्वादिष्वासनगात्रेषु परमसुखा तु मध्ये रवेरास्तरणं स्थापनीयं तदुपरि पूर्वोक्तं रविमादित्याख्यं पद्मोपरि पूजयेत् । दीप्ताद्यास्तु केसरस्थाः शक्तयस्तत्रापि सर्वतोमुखी कर्णिकायां

पूज्या। ततो बहिर्दलाग्रेषु सोमाद्याः पूज्याः। एवं शिवसूर्यौ समाराध्य शिवाग्नौ शैवोक्तमग्निकार्यं च कृत्वा सूर्यायार्घं दत्त्वा होममुपक्रम्य ब्राह्मणान् भोजयित्वा पूर्णाहुत्याः पूर्वं पुण्याहं तुलारोहणाङ्गं वाचयित्वा तुलारोहणं कारयेत्।

शतनिष्काधिकं श्रेष्ठं तदर्धं मध्यमं स्मृतम्।
तस्याप्यर्धं कनिष्ठं स्यात् त्रिविधं तत्र कल्पितम्॥
वस्त्रयुग्मं तथोष्णीषं कुण्डलं कण्ठभूषणम्।
अङ्गुलीभूषणं चैव मणिबन्धस्य भूषणम्॥
एतानि चैव सर्वाणि प्रारम्भे धर्मकर्मणि।
पुरोहिताय दत्त्वाऽथ ऋत्विग्भ्यः संप्रदापयेत्॥
पूर्वोक्तभूषणं सर्वं सोष्णीषं वस्त्रसंयुतम्।
दद्यादेतत्प्रयोक्तृभ्यः कुण्डलाच्छादनं * बुधः॥
दक्षिणां च शतं चार्धं † विप्राय प्रतिपादयेत्।
ऋत्विजां चैव सर्वेषां दशनिष्कान् प्रदापयेत्॥
यागोपकरणं द्रव्यमाचार्याय प्रदापयेत्।
इतरेषां द्विजानां तु पृथगिष्टं प्रदापयेत्॥
पुरोहितद्विजेभ्यश्च दक्षिणां दापयेत् स्वयम्।
आचार्याय प्रदातव्यं श्रोत्रियेभ्यो विशेषतः॥
बन्दीकृतांश्च विसृजेत् कारागृहनिवेशितान्।
सहस्रकलसेनैव स्नापयेत् परमेश्वरम्॥
घृतेन केवलेनापि देवदेवमुमापतिम्।
पयसा वाऽथ दध्ना वा सर्वद्रव्यैरथापि वा॥
ब्रह्मकूर्चेण वा देयं पञ्चगव्येन वा पुनः।

---

* आच्छादनपटमिति क्वचित् पाठः।

† तदर्धं वा प्रदापयेदिति वा पाठः।

गायत्र्या चैव गोमूत्रं गोमयं च प्रणवेन ॥
आप्यायस्वेति वै क्षीरं दधिक्राव्णेति वै दधि ।
तेजोसीत्याज्यमीशानं मन्त्रेणैवाधिषिञ्चयेत् ॥
देवस्यत्वेति देवेशं कुशाम्बुकलसैर्नवैः ।
रुद्राध्यायेन सर्वेशं स्नापयेत् परमेश्वरम् ॥
सहस्रकलसैः शम्भोर्नाम्नां चैव सहस्रकैः ।
विष्णुना कथितैर्वाथ नन्दिना कथितैस्तु वा ॥
दक्षेण मुनिमुख्येन कीर्त्तितेनापि वा बुधः ।
महापूजा च कर्त्तव्या महादेवस्य भक्तितः ॥
शिवार्चकाय दातव्या दक्षिणार्धा गुरोः शुभा ।
देवार्चकानां सर्वेषां दक्षिणा च यथाक्रमम् ॥
दीनान्धकृपणानाथबालवृद्धकृशातुरान् ।
भोजयेच्च विधानेन दक्षिणामपि दापयेत् ॥

'वस्त्रयुग्मं' इत्यादि वस्त्रयुग्मोष्णीषकुण्डलादीनि तु प्रारम्भ एव वरणान्तरं कृतमधुपर्केभ्यः पुरोहितब्रह्मर्त्विक्सदस्येभ्यो दद्यादाचार्याय द्विगुणम् ।

द्विगुणं गुरवे दद्याद् भूषणाच्छादनादिकम् ।

इति मत्स्योक्तेः ।

एतत् प्रयोक्तृभ्यः शतादिनिष्कनिर्मितं प्रागुक्तभूषणं च दद्यात् । 'दक्षिणां चेति' शतादिदक्षिणामाचार्याय दत्वा ऋत्विग्भ्यस्तु दशनिष्कानि । इतरेषां परिचारकाणां तु निष्कमात्रम् ।

यत्र कर्मकरास्तेभ्यः पृथक् निष्कं प्रदापयेत् ।

इतिकामिकोक्तेः ।

तुलाधिरूढं द्रव्यमन्येभ्य एव दातव्यमिति कामिकमतम् ।

तुलाधिरोहितं वित्तं ब्राह्मणेभ्यः प्रदापयेत् ।

मद्भक्तेभ्यो विशेषेण मदर्थं वापि कल्पयेत् ॥

देशिकेभ्यो विशेषेण दद्यात् श्रद्धासमन्वितः—इति ।

अथ महाभिषेकपूजा तत्कर्तृदक्षिणा च कार्येत्याह 'सहस्रकलसेन' इत्यादिना। 'सर्वद्रव्यैः' सुवर्णफलरत्नोदकपञ्चामृताद्यैः 'अर्धा दक्षिणेति' तुलारोहणाचार्यदक्षिणाप्रमाणार्धं शिवार्चकादिभ्यो दक्षिणादानमिति । कामिकेतु महाभिषेकपूजानन्तरं तुलारोहणमुक्तम् । यन्मण्डले पूजितान् सर्वान् देवानभ्यर्च्य होमयेत् ।

पूर्णाहुत्यादि चैवैनां क्रियामत्र समापयेत् ।
सहस्रकलशाद्यैश्च संस्नाप्य परमेश्वरम् ॥
महापूजा च कर्त्तव्या प्रभूतहरिषान्विता ।
पञ्चामृतैः पञ्चगव्यैः क्षीराद्यैः स्नपनं तु वा ।
ब्राह्मणान् भोजयेत् पश्चात् तुलारोहणमाचरेत् ॥

अथ दक्षिणादानान्तरं पूर्णाहुत्याद्युत्तरतन्त्रसमापनं पुण्याहवाचनं च कार्यमिति सिद्धिः । सहस्रकलशैः सहस्रनामभिरीशानं स्नापयेदित्यभिहितं तदुक्तं लिङ्गपुराणोक्तमेव नामसहस्रमालिख्यते ।

ऋषय ऊचुः ।

नाम्नां सहस्रं रुद्रस्य नन्दिना ब्रह्मयोगिना ।
कथितं ब्रह्मवेदार्थसञ्चयं सूत सुव्रत ॥
नाम्नां सहस्रं विप्राणां वक्तुमर्हसि शोभनम् ।

सूत उवाच ।

सर्वभूतात्मभूतस्य रुद्रस्यामिततेजसः ।
अष्टोत्तरसहस्रं तु नाम्नां शर्वस्य सुव्रत ॥
यज्जप्त्वा च मुनिश्रेष्ठ गाणपत्यमवाप्नुयात् ।
तदहं संप्रवक्ष्यामि सर्वपापप्रणाशनम् ॥
ॐ स्थिरः स्थाणुः प्रभुर्भानुः प्रवरो वरदो वरः ।

सर्वात्मा सर्वविख्यातः सर्वकर्मकरो भवः ॥
जटी चर्मी शिखण्डी च सर्वगः सर्वभावनः ।
हरिश्च दक्षिणाख्यश्च सर्वभूतहरः स्मृतः ॥
प्रवृत्तिश्च निवृत्तिश्च नियन्ता शाश्वतो ध्रुवः ।
श्मशानचारी भगवान् खचरो गोचरोऽर्द्दनः ॥
अभिवाद्यो महाकर्मा तपस्वी भूतधारणः ।
उन्मत्तवेषः प्रच्छन्नः सर्वलोकः प्रजापतिः ॥
महारूपो महाकायः सर्वरूपो महायशाः ।
महात्मा सर्वभूतश्च विरूपो वामनो नतः ॥
लोकपालोऽन्तर्हितात्मा प्राभासो भवनो रुचिः ।
पवित्रश्च महाँश्चैव नियमो नियमाश्रितः ॥
सर्वकर्मादिः कर्माणा* मादिरादिकरो निधिः ।
सहस्राक्षो विशालाक्षः सोमो दक्षः सुधाकरः ॥
चन्द्रः सूर्यः शनिः केतुर्ग्रहो ग्रहपतिर्मतिः ।
आदिराज्यो भयं कर्त्ता मृगवाणार्पणोऽनघः ॥
महातपा घोरतपा आदर्शो नैकसाधकः ।
संवत्सराकृतो मन्त्रः प्रमाणं परमन्तपः ॥
योगाचार्यो महाविम्बो महारेता महाबलः ।
सुवर्णरेताः सर्वज्ञः सुवीजो वृषवाहनः ॥
दशवाहुस्त्वनिमिषो नीलकण्ठ उमापतिः ।
विश्वरूपस्तपःश्रेष्ठी बलवीरो बलाग्रणीः ॥
गणकर्त्ता गणपतिर्दिग्वासा काम्य एव च ।

---

* सर्वकर्मादिधर्माणामिति क्वचित् पाठः ।

मन्त्रवित् परमो मन्त्रः सर्वभावकरो हरः* ॥
कमण्डलुधरो धन्वी बहुहस्तः कपालवान् ।
अशनीशः शतघ्नीशः खड्गबाणायुधो महान् ॥
अजश्च मृगरूपश्च तेजस्तेजःकरो विधिः ।
उष्णीषी वस्त्रवल्कश्च उद्भक्तो विनतस्तथा ॥
दीर्घश्च हरिकेशश्च सुतीर्थः कृष्ण एव च ।
शृगालरूपः सर्वार्थो मुण्डः सर्वशुभङ्करः ॥
सिंहशार्दूलरूपश्च गान्धारी च कपर्द्यपि ।
ऊर्ध्वरेता ऊर्ध्वलिङ्गी ऊर्ध्वशायी नभस्तलः ॥
त्रिजटी चीरवासाश्च रुद्रः सेनापतिर्विभुः ।
अहोरात्रश्चरक्तश्च त्रिवृन्मन्युः सुवर्चसः ॥
गन्धर्वहा दैत्यहा च कालधानो† गुणाकरः ।
सिंहशार्दूलरूपाणामार्द्रचर्मधरो हरः ॥
निशाचरः प्रेतचारी भूतचारी महेश्वरः ।
बहुरूपो बहुधनः सर्वसारोऽमृतेश्वरः ॥
नित्यप्रियो नित्यनृत्यो नर्त्तनः सर्वलोलुपः ।
सकार्मुको महाबाहुर्महाघोरो महातपाः ॥
महासारो महापाशो नित्यो गिरिचरो मतः ।
सहस्रहस्तो विजयो व्यवसायो ह्यनन्दितः ॥
अमर्षणो मर्षणात्मा वज्रहा कामनाशनः ।
दक्षहा परिचारी च प्रसहो मध्यमस्तथा ॥
तेजोपहारी बलवान् विदितोऽभ्युदितो बहुः ।

---

* मन्त्रः सर्वकरो हर इति पाठान्तरम् ।

† कालो धातेति पाठान्तरम् ।

गम्भीरघोषा गम्भीरो गम्भीरबलवाहनः ॥
न्यग्रोधरूपो*न्यग्रोधो विश्वकर्मा विभुर्वंदुः ।
तीक्ष्णोपायश्च हर्यश्वः सहायः कर्मकालवित् ॥
विष्णुः प्रसादितो यज्ञः सुमुखो वडवामुखः ।
हुताशनसहायश्च प्रशान्तात्मा हुताशनः ॥
उग्रतेजा महातेजा विजयो जयकालवित् ।
ज्योतिषो नयनः सिद्धिः सिद्धविग्रह एव च ॥
खड्गी दण्डी जटी ज्वाली वर्धनो व्यधनो बली ।
वीणी च विपणी ताली बली कलिकटुस्तथा ॥
शवरूपो निनादी च सर्वथा ह्यपरिग्रहः ।
व्यालरूपो विलावासी गुहावासी तरंगवित् ॥
वृक्षः श्रीमालकर्मा च सर्वाबलविमोचनः ।
बन्धनश्चासुरेन्द्राणां युधि शत्रुविनाशनः ॥
सद्यः प्रमोदो दुर्वापः सर्वायुधनिषेवितः ।
प्रस्कन्दोऽथ विभागश्च अतुल्यो यज्ञमानवित् ॥
सर्ववासः सर्वधारी दुर्वासा वासवो नरः ।
हैमो हेमकरो यज्ञः सर्वधारी धरोत्तमः ॥
आकारो ह्यध्वनिवहो मरुत्सङ्गः प्रतापवान् ।
भिक्षुश्च भिक्षुरूपी च रौद्ररूपः सुरूपवान् ॥
वसुरेता सुवर्चस्वी वसुवेगो वसुप्रदः ।
सर्वावासी त्रयीवासी सूपदेशकरो वरः ॥
मुनिरात्मा मुनिर्लोकः सभाग्यश्च सहस्रभुक् ।
पक्षी च पक्षिरूपश्च आदिदीपो विशांपतिः ॥

---

* न्यधारक इति वा पाठः ।

१४

समीरो दमनौङ्कारो ह्यर्थो ह्यर्थकरो वशः ।
वासुदेवश्च वामश्च वामदेवश्च वामनः ॥
सिद्धयोगापहारी च सिद्धः सर्वार्थसाधकः ।
अक्षुण्णः क्षुण्णरूपश्च वृषणो मृदुरव्ययः ॥
महासेनो विशाखश्च षष्टिभागो गवां पतिः ।
चक्रहस्तस्तु विष्टम्भी मूलस्तम्भन एव च ॥
ऋतुर्ऋतुकरस्तालो ह्यकर्मा सुकरो भवः ।
वानस्पत्यो वाजसनो नित्यमाश्रमपूजितः ॥
ब्रह्मचारी लोकचारी सर्वचारी सुचारवित् ।
ईशान ईश्वरः कालो निशाचारी ह्यनेकदृक् ॥
निमित्तस्थो निमित्तं च नन्दिर्नन्दिकरो हरः ।
नन्दीश्वरः सुनन्दी च नन्दनेमिप्रवर्धनः ॥
भगहारी निहन्ता च लोकालोकपितामहः ।
चतुर्मुखो महालिङ्गश्चारुलिङ्गस्तथैव च ॥
लिङ्गाध्यक्षो वराध्यक्षः कालाध्यक्षो युगावहः ।
वीजाध्यक्षो वीजकर्त्ता बुद्ध्यात्मानुगतो बलः ॥
अतिहासश्च कल्पश्च दमनो जगदीश्वरः ।
दम्भो दम्भकरो दाता वंशो वंशकरः कली ॥
लोककर्त्ता पशुपतिः महाकर्त्ता ह्यधोक्षजः ।
अक्षरं परमं ब्रह्म बलवान् शुक्र एव च ॥
नित्यो ह्यनीशः शुद्धात्मा सिद्धो मानो गतिर्हविः ।
प्रसादस्तघनो दीर्घो दर्पणो हव्यमिन्द्रजित् ॥
वेदकारः सूत्रकारो विद्वांश्च परमर्दनः ।
महामेघनिवासी च महाघोरो वशीकरः ॥

अग्निज्वालो महाज्वालो ह्यभिधूम्रावृतो रविः ।
ब्राह्मणः शङ्करो नित्यो वर्चस्वी धूम्रकेतनः ॥
नीलस्तथाङ्कलुब्धश्च शोभनो निरवग्रहः ।
स्वस्त्यस्वस्तिविभावश्च भोगी भोगकरो लघुः ॥
उत्सङ्गश्च महाङ्गश्च महागर्भः प्रतापवान् ।
कृष्णवर्णः सुवर्णश्च इन्द्रियः सर्ववर्णिकः ॥
महापादो महाहस्तो मायाकायो महायशाः ।
महास्पर्शो महामात्रो महानेत्रो नगालयः ॥
महास्कन्धो महाकर्णो महोष्ठश्च महाहनुः ।
महानासो महाकम्बुर्महाग्रीवः श्मशानवान् ॥
महावक्षा महातेजाः कन्दरात्मा मृगालयः ।
लम्बिनोष्ठश्च निष्ठश्च महामायः पयोनिधिः ॥
महादन्तो महादंष्ट्रो महाजिह्वो महामुखः ।
महानखो महारोमा महाकेशो महारजाः ॥
असपत्नः प्रसादश्च प्रत्ययो गीतसाधकः ।
प्रसेवनो ह्यपानश्च आदिकर्मा महामुनिः ॥
वृषको वृषकेतुश्च अनलो वायुवाहनः ।
मण्डली मेरुवासश्च देववाहन एव च ॥
अथर्वशीर्षः सामास्य ऋक्सहस्रोऽर्जितेक्षणः ।
यजुः पादभुजो गुह्यः प्रकाशौजास्तथैव च ॥
अमोघार्थप्रसादश्च अन्तर्भाव्यः सुदर्शनः ।
उपहारप्रियः सर्वः कनकः काञ्चनस्थितः ॥
नाभिर्नन्दिकरो हर्म्यः पुष्करः स्थावरः स्थिरः ।
सर्वशास्त्रो धनश्चाद्यो यज्ञो यज्वा समाहितः ॥

नगो नीलः कविः कालो मकरः कालपूजितः ।
शुक्लः स्त्रीरूपसंपन्नः शुचिर्भूतनिषेवितः ॥
आश्रमस्थः कपोतस्थो विश्वकर्मा पवित्रराट् ।
विशालशाखस्ताम्रोष्ठो ह्यम्बुजालः सुनिश्चयः ॥
कपिलः कलशः शूलश्चायुधश्चैव रोमशः ।
गन्धर्वो ह्यदितिस्तार्क्ष्यो ह्यविज्ञेयः सुसारदः ॥
परश्वधायुधो देवो ह्यर्थकारी सुबान्धवः ।
जतुवीणो महाकोप ऊर्ध्वरेता जलेशयः ॥
उग्रवंशकरो वंशो वंशवन्द्यो ह्यनिन्दितः ।
सर्वाङ्गरूपी मायावी सुहृदो ह्यनिलो बलः ॥
बन्धनो बन्धकर्त्ता च सुबन्धनविमोचनः ।
राक्षसघ्नश्च कामारिर्महादंष्ट्रो महायुधः ॥
बहुत्वनिन्दितः सर्वः शङ्करोऽथाप्यकोपनः ।
अमरेशो महाघोरो विश्वदेवः सुरारिहा ॥
अहिर्बुध्न्योऽतिरन्तिश्च चेकितानो हली तथा ।
अजैकपाच्च कापाली शङ्कुमारो महाधरः ॥
धन्वन्तरिर्धूमकेतुः शून्यो वैश्रवणस्तथा ।
धाता विष्णुश्च शक्रश्च त्रयी त्वष्टा धरो ध्रुवः ॥
प्रभासः पर्वतो वायुरर्यमा सविता रविः ।
धृतिश्चैव विधाताच मान्धाता भूतवाहनः ॥
तीरस्तीव्रश्च भीमश्च सर्वकर्मा गुणोद्वहः ।
पद्मगर्भो महागर्भश्चन्द्रवक्त्रो नभोऽनघः ॥
बलवाँश्चोपशान्तश्च पुराणः पुण्यकृत्तमः ।
क्रूरकर्त्ता क्रूरवासी धनुरात्मा महौषधः ॥

सर्वायशः सर्वचारी प्राणेशः प्राणिनां पतिः ।
देवदेवः सुखोत्सिक्तः सदसत् सर्वरत्नवित् ॥
कैलासस्थो गुहावासी हिमवद्गिरिसंश्रितः ।
कुलहारी कुलं कर्त्ता बहुवित्तो बहुप्रजः ॥
प्राणेशो बन्धकीवृक्षो नकुलश्चाद्रिकस्तथा ।
सारग्रीवो महाजत्रुर्विलोलश्च महौषधिः ॥
सिद्धान्तकारी सिद्धान्तश्छन्दो व्याकरणोत्तरः ।
सिंहनादः सिंहदंष्ट्रः सिंहास्यः सिंहवाहनः ॥
प्रभावात्मा जगत्कालः कालकम्पी तरुस्तनुः ।
सारङ्गो भूतचक्राङ्गः केतुमाली सुवेधकः* ॥
भूतालयो भूतपतिरहोरात्रो मलोऽमलः† ।
असुहृत् सर्वभूतानां निश्चलश्चलविद्बुधः ॥
अमोघः संयमो हृष्टो भोजनः प्राणधारणः ।
धृतिमान् मतिमाँस्त्र्यक्षः सुकृतस्तु युगाधिपः ॥
गोपालो गोपतिर्ग्रामो गोचर्मवसनो हरः ।
हिरण्यबाहुश्च तथा गुहावासः प्रवेशनः ॥
महामना महाकालो जितकामो जितेन्द्रियः ।
गान्धारश्च सुरापश्च तापकर्मरतो हितः ॥
महाभूतो भूतवृतो ह्यप्सरोगणसेवितः‡ ।
महाकेतुधरो धातानैकतानरतः स्वरः ॥
अवेदनीय आवेद्यः सर्वगश्च सुखावहः ।

---

* भवे धर्म्मात वा पाठः ।

† मह इति क्वचित् पाठः ।

‡ सेविन इति क्वचित् पाठः ।

तोरणस्तरणो धाता परिधापत्तिरूर्जितः ॥
संयोगवर्धनो वृद्धो गुणिकोऽथ गुणाधिपः ।
नित्यो धाता सहायश्च देवासुरपतिः पतिः ॥
अविमुक्तश्च वाहश्च सुदेवोऽपि सुपर्वणः ।
आषाढश्च सुषाढश्च स्कन्ददो हरितो हरः ॥
वपुरावर्त्तमानोऽन्यो वपुःश्रेष्ठो महावपुः ।
शिरोहरोऽपि मर्षण्यः सर्वलक्षणलक्षितः ॥
अक्षयो रथगीतश्च सर्वभोगी महाबलः ।
साम्नायोऽथ महामायस्तीर्थदेवो महापथः ॥
निर्जीवो जीवनो मन्त्रः सुभगो बहुकर्तृकः ।
रत्नभूतोऽथ रत्नाङ्गो महार्णवनिनादभृत् ॥
मूलो विशाखो ह्यमृतो व्यक्ताव्यक्तस्तपोनिधिः ।
आरोहणोऽतिरोहश्च शीलधारी महातपाः ॥
महाकण्ठो महायोगी युगो युगकरो हरिः ।
युगरूपो महारूपो वहनो गहनो नगः ॥
न्यायो निर्वापणः पादः पण्डितो ह्यचलोपमः ।
बहुमालो महामालः शिपिविष्टः सुलोचनः ॥
विस्तारो लवणः कूपः कुसुमांशः फलोदयः ।
ऋषभो वृषभो भङ्गो मणिबिम्बो जटाधरः ॥
इन्दुर्विसर्गः सुमुखः शूरः सर्वायुधः सहः ।
निवेदनः सुधाता * च स्वर्गद्वारो महाधनः ॥
गन्धमाली च भगवान् नर्त्तनः सर्वलक्षणः ।
सन्तानबाहुः सकलः सर्वमङ्गलवाचनः ॥

---

* सुधाजात इति क्वचित् पाठः ।

चलस्ताली करस्ताली ऊर्ध्वसंहननो युवा ।
यन्त्रतन्त्रसुविख्यातो लोकः सर्वाश्रयो मृदुः ॥
मुण्डो विरूपो विकृतो दीप्ततेजाः सहस्रपात् ।
सहस्रमूर्धा देवेन्द्रः सर्वदेवमयो गुरुः ॥
सहस्रबाहुः सर्वाङ्गः शरण्यः सर्वलोकधृक् ।
काष्ठा कला मुहूर्त्तं वा लवो मात्रा क्षपा क्षणः ॥
विश्वक्षेत्रप्रदो वीजं लिङ्गमध्यस्तु निर्मलः ।
सदसद्व्यक्तमव्यक्तं माता भ्राता पितामहः ॥
स्वर्गद्वारं मोक्षद्वारं सुखद्वारं त्रिविष्टपम् ।
निर्वाणहृदयश्चैव ब्रह्मलोकः परा मतिः* ॥
देवासुरविनिर्माता देवासुरगणाधिपः ।
देवासुरगणाध्यक्षो देवासुरगणाग्रणीः ॥
देवाधिदेवो देवर्षिर्देवासुरसुधाप्रदः ।
देवासुरेश्वरो विष्णुर्देवासुरमहेश्वरः ॥
सर्वदेवमयोऽचिन्त्यो देवतात्मात्मसम्भवः ।
उद्गतस्त्रिक्रमी वैद्यो विराजो वीरजो वरः ॥
ईड्यो हस्ती तथा व्याघ्रो देवसिंहो महर्षभः† ।
विबुधाग्र्यः‡ सुरश्रेष्ठः स्वर्गदेवस्तपोधनः ॥
संयुक्तः शोभनो वक्ता आशानां प्रभवोऽव्ययः ।
गुरुः कान्तो निजः सर्गः पवित्रं सर्ववाहनः ॥
शृङ्गी शृङ्गप्रियो बभ्रू राजराजो निरामयः ।

---

* परागतिरिति वा पाठः ।

† परि प्रभुरिति वा पाठः ।

‡ विबुधाप इति वा पाठः ।

अविरामः सुशरणो निरामः सर्वसाधनः ॥
ललाटाक्षो विश्वदेहो हरिणो ब्रह्मवर्चसः ।
स्थावराणां पतिश्चैव नियमेन्द्रियवर्धनः ॥
सिद्धार्थः सर्वभूतार्थोऽचिन्त्यः सत्यव्रतः शुचिः ।
व्रताधिपः परं ब्रह्म मुक्तानां परमा गतिः ॥
विमुक्तो मुक्तकेशश्च श्रीमान् श्रीवर्धनो जगत् ।
यथाप्रधानं भगवानितिभक्त्या स्तुतो मया ॥
भक्तिमेवं पुरस्कृत्य महायज्ञपतिर्विभुः ।
ततोऽभ्यनुज्ञां प्राप्यैवं सूतो गतिमताङ्गतिः ॥
तस्माल्लब्ध्वा स्तवं शम्भोर्नृपस्त्रैलोक्यविश्रुतः ।
अश्वमेधसहस्रस्य फलं प्राप्य महायशाः ॥
गाणपत्यं परं प्राप्य प्रसादात् तस्य यत् प्रभोः ।
यः पठेच्छृणुयाद्वापि श्रावयेद्ब्राह्मणानपि ॥
अश्वमेधसहस्रस्य फलं प्राप्नोति वै द्विजाः ।
ब्रह्मघ्नश्च सुरापश्च स्तेयी च गुरुतल्पगः ॥
शरणागतघाती च मित्रविश्रम्भघातकः ।
मातृहा पितृहा चैव वीरहा भ्रूणहा तथा ॥
संवत्सरं क्रमाज्जप्त्वा त्रिसन्ध्यं शङ्कराश्रमे ।
देवमिष्ट्वा त्रिसन्ध्यं च सर्वपापैः प्रमुच्यते ॥

इति लिङ्गपुराणोक्तस्तुलापुरुषदानविधिः ।

श्रीशङ्कर उवाच ।

तुलादानं प्रवक्ष्यामि सर्वपापविनाशनम् ।
यद्गौर्या चरितं पूर्वं लक्ष्म्या नारायणेन च ॥
पुण्यं दिनमथासाद्य तृतीयायां विशेषतः ।

गोमयेनानुलिप्तायां भूमौ कुर्याद्धटं शुभम् ॥
दारवं शुभवृक्षस्य चतुर्हस्तप्रमाणतः ।
सुवर्णं तत्र बध्नीयात् स्वशक्त्या घटितं घटे ॥
सौवर्णं स्थापयेत् तत्र वासुदेवं चतुर्भुजम् ।
शक्त्या द्वयं तु बध्नीयात् स्थापयेत् पिठके ततः ॥
तत्रारुहेत् सवस्त्रास्त्रः पुष्पालङ्कारभूषितः ।
अभीष्टां देवतां गृह्य स्नापयित्वा घृतादिभिः ॥
तुलादानस्य सर्वस्य विधिरेषः प्रकीर्त्तितः ।
प्रथमा तु घृतस्योक्ता तेजोवृद्धिकरी तुला ॥
माक्षिकेन तु सौभाग्यं तैलेन बहुलाः प्रजाः ।
वस्त्रस्य दिव्यवस्त्राणि प्राप्नोति तुलया ध्रुवम् ॥
लवणस्य तु लावण्यमरोगित्वं गुडस्य तु ।
असपत्नः शर्करया सुरूपं चंदनेन च ॥
अवियुक्तो भवेद्भर्त्रा तुलायाः कुङ्कुमस्य च ।
न संतापो हृदि भवेत् क्षीरस्य तुलया सदा ॥
सर्वकामप्रदाः सर्वाः सर्वपापक्षयं कराः ।
यो ददाति तुलाः सर्वाः स गौर्यालयमाप्नुयात् ॥
मन्त्रेण दद्यादभिमन्त्रितां तु सकृत् तुलामेकतमां द्विजेभ्यः ।
स याति गौर्याः सदनं सुपुण्यैर्न शोकदौर्गत्यमुपाश्नुते पुमान् ॥
त्वं तुले सर्वभूतानां प्रमाणं परिकीर्त्तिता ।
मां तोलयन्ती संसारादुद्धरस्व नमोऽस्तु ते ॥
इत्यारुह्य क्षणं स्थित्वा चिन्तयित्वा हरिप्रियाम् ।
अवरुह्य ततो दद्यादर्धं पादमथापि वा ॥
गुरुं संपूज्य विधिवत् सर्वालङ्कारभूषणैः ।

विसर्जयेन्नमस्कृत्य भोजयित्वा विधानतः ॥
शेषं द्विजेभ्यो दातव्यं स्त्रीभ्योऽन्येभ्यस्तथैव च ।
इष्टबन्धुविशिष्टानामाश्रितानां कुटुम्बिनाम् ॥
कदलीदलसंस्थां तु पञ्चपिण्डां हिमाद्रिजाम् ।
कर्पूरस्य तुला पूज्या कुङ्कुमेनालभेत् तु ताम् ॥
अवरुह्य तुलायास्तु गुरवे तां निवेदयेत् ।
विधिनानेन यो दद्यात् तुलादानं विमत्सरः ॥
स लोकमेति पार्वत्याः सेव्यमानोऽप्सरोगणैः ।
तत्रोष्य कालं सुचिरमिह लोके नृपो भवेत् ॥

इति विष्णुधर्मोत्तरोक्तो घृतादितुलापुरुषदानविधिः ।

कृष्ण उवाच ।

अनेनैव विधानेन केचिद्रूप्यमयं पुनः ।
कर्पूरेण तथेच्छन्ति किञ्चिद्ब्राह्मणपुङ्गवाः ॥

'अनेनेति' मुख्यतुलापुरुषदानकथितेनेत्यर्थः ।

तथा सिततृतीयायां नार्यः सौभाग्यदर्पिताः ।
कुङ्कुमेन प्रयच्छन्ति लवणेन गुडेन वा ॥
तत्र मन्त्रा न होमा वा एवमेव प्रदापयेत् ।

आह विश्वामित्रः ।

आदित्ये राहुणा ग्रस्ते सुवर्णैस्तोलयेत् तनुम् ।
सोमग्रहे तु रूप्येण यथा दानं तथा शृणु ॥
प्रवर्ग्यस्य मुखे युक्त उत्पन्नपत्रदेहतः ।
सर्वपापहरायैतद्ददामि प्रीयतां विधुः ॥
इत्युच्चार्य जलं त्वप्सु निक्षिपेत् द्विजसत्तमः ।
प्रीयन्ते पितरः कांस्ये ताम्रे चैव पितामहाः ॥

लवणे सिन्धुजे लक्ष्मीः प्रीयते पार्वती गुडे ।
गन्धैर्गुडो वा वासोभिः सौभाग्यं लवणे परम् ॥
प्रीयतां विश्वधाप्रीतिर्दानमन्त्रोऽभिधीयते ।
तुलापुरुषतो राजन् याहि तत् परमं पदम् ॥
सर्वपापविशुद्धात्मा मुक्तिं यान्त्यपुनर्भवाम् ।
हत्वा तु ब्राह्मणं भूयस्तोलयेद[illegible] ॥
सुवर्णेनात्मतुल्येन ब्रह्महत्यां व्यपोहति ।

इति कृष्याद्वितुलापुरुषः ।

## अथ गारुडपुराणे । सनत्कुमार उवाच ।

तुलापुरुषदानं तु शृणु मृत्युञ्जयोद्भवम् ।
अष्टलोहं प्रदातव्यं सर्वरोगोपशान्तये ॥
कांस्यं च यक्ष्मणे देयं त्रपु चार्शोविकारके ।
अपस्मारे च सीसं स्यात् ताम्रं कुष्ठे सुदारुणे ॥
पैत्तलं रक्तपित्ते च रूप्यं प्रदरमेहयोः ।
सौवर्णं सर्वरोगेषु प्रदद्यान्मृत्फलोदनम् ॥
फलोद्भवं तथा दद्याद्ग्रहणे दीर्घदारुणे* ।
गौडं भस्मकरोगेषु योगं तु गण्डमालके ॥
जाङ्गलं चाग्निनां मान्द्ये रोमोत्पाते तु पौष्पकम् ।

'जाङ्गलं' काष्ठजमिति ।

मधूद्भवं तथा देयं कासश्वासजलोदरे ।
घृतोद्भवं तथा देयं छर्दिरो[illegible]न्तये ॥
क्षीरं पित्तविनाशाय दाधिकं भगदारणे ।
लावणं बलनाशाय पैष्टं दद्रुविनाशने ॥

---

* दीर्घवारुणे क्वचित् पाठः ।

अन्नं च सर्वरोगस्य नाशने स्मृतमेव च ।
अधिदैवतं लोहे च महाभैरव उच्यते ॥
कांस्ये तु पूषाश्विनौ च वायुश्च सैसके स्मृतः ।
ताम्रे सूर्यस्तथा प्रोक्तः पैत्तले च कुजस्तथा ॥
रूप्ये च पितरो ज्ञेयाः सुवर्णे सर्वदेवताः ।
फले सोमो गुडे चापस्ताम्बूले तु विनायकः ॥
गन्धर्वाः कुसुमे चैव जाङ्गलेऽग्निस्तथा स्मृतः ।
मधौ यक्षाः प्रयत्नेन घृते मृत्युञ्जयः स्मृतः ॥
क्षीरे तारागणाः सर्वे दध्नः सर्पाः प्रकीर्त्तिताः ।
पिष्टे प्रजापतिर्देवो ह्यन्ने सर्वाश्च देवताः ॥
आर्त्तो यदा स्यात् पात्रं वा प्राप्नुयात् पुण्यदेशतः ।
मृत्युं मृत्युञ्जयप्राप्तविधिना यत् प्रदीयते ॥
तदेव सर्वशान्त्यर्थं भवतीह न संशयः ।

'मृत्युञ्जयप्राप्तविधिना' मृत्युञ्जयं पूजयेदित्यर्थः ।

## मृत्युञ्जयपूजाविधिश्च देवीपुराणे ।

(ॐ जुँसः) इति मन्त्रेण देवोऽयं चतुर्भुजस्त्रिनेत्रकः ।
अक्षमालाधरो देवो दक्षिणेन तु पाणिना ॥
वामेनामृतकुण्डीं च धारयन्नमृतान्विताम् ।
वरदाभयपाणिश्च दिव्याभरणभूषितः ॥
शुक्लः सनीलवासाश्चपद्मस्योपरि संस्थितः ।
जाती तस्य शिराज्ञेयं जवं वाश्वशिखा स्मृता ॥
यो वौषडिति कवचं जैनेत्रे च प्रकीर्त्तिताः ।

नः फडस्त्रं भवेत् सदा । ॐकार आवाहनमन्त्रः । ॐकारो वै विसर्जने ।
'अष्टशक्तयः' पञ्चाक्षरसंमिताः ।

जया च विजया चैव अजिता चापराजिता ।
भद्रकाली कपाली च क्षेम्यामृतपराजिता ॥
ॐ जुँसः मन्त्रप्रयोगेन पूज्यो मृत्युञ्जयः शिवः ।
गन्धादिभिर्यथान्यायं यथा ब्राह्मणपूजनम् ॥
मृत्युञ्जयोक्तदानेषु सर्वेष्वेवं विधिः स्मृतः ।

जप्तव्यः ।

ॐ जूँस इति वै दातुं कामोघं साधयेत् सदा ।
लोहे तदा मन्त्रममुं ग्रहीतुर्हृदि रोपयेत् ॥
शिरोललाटदेशे च जिह्वामूले च गण्डयोः ।
नाभौ च ब्रह्मगुह्ये च एतदङ्गाष्टकं न्यसेत् ॥
अरत्निहस्तमात्रं च सारं तस्य प्रकीर्त्तितम् ।
यथेच्छया प्रयोगेण यथावत् कर्त्तुरिच्छया ॥
षष्टिपलैः सङ्घटितमज्ञातपलिकं भवेत् ।
लोहं च निष्पन्नमेव तत्र अन्नेन मिश्रितम् ॥
पञ्चाशत्पलसंयुक्तं दण्डं वायससंज्ञकम् ॥
वस्त्रैराच्छाद्य दानेन यमदण्डो न विद्यते ॥

इति नानारोगघ्नतुलापुरुषदानविधिः ।

आत्मानं तोलयित्वा तु दद्याल्लोहं च तत्समम् ।
द्विजाय शिवभक्ताय यद्वान्यस्मै द्विजातये ॥
पादुकोपानहच्छत्रचामरासनसंयुतम् ।
अयने विषुवे पुण्ये व्यतीपातादिपर्वसु ॥
श्रद्धायुक्तः शुचौ देशे विशेषादुत्तरायणे ।
पञ्चामृतेन संस्नाप्य देवदेवमुमापतिम् ॥
केवलेन घृतेनाऽथ प्रस्थमात्रेण धूर्जटिम् ।

सुगन्धिचन्दनजलैस्ततः संस्नापयेद्विभुम् ॥
चन्दनागुरुकर्पूरकक्कोलमृगनाभिभिः ।
विलिप्य परमेशानं सुमनोभिरथार्चयेत् ॥
भक्त्या निवेद्य नैवेद्यमनवद्येन चेतसा ।
ततः प्रणम्य जगतामीश्वरं प्रार्थयेदिति ॥
देवदेव जगन्नाथ कृपालो परमेश्वर ।
मामुद्धरस्व संसारपङ्कसङ्कोचदुःस्थितम् ॥
इति संप्रार्थ्य यो दद्याल्लोहमात्मसमं नरः ।
स याति शिवसालोक्यं यावदिन्द्राश्चतुर्दश ॥
ततः पुनरिहायातः पृथिव्यामेकराड्भवेत् ।

सर्वेषु चैतेषु सुवर्णं दक्षिणा । अनुक्तदक्षिणेषु दानेषु तस्य यथा शक्ति विहितत्वात् ।

इति स्कन्दपुराणोक्तो लोहतुलापुरुषदानविधिः ।

## अथ हिरण्यगर्भाख्यं द्वितीयं महादानमुच्यते ।

### मत्स्यपुराणे । मत्स्य उवाच ।

अथातः संप्रवक्ष्यामि महादानमनुत्तमम् ।
हेम्ना हिरण्यगर्भाख्यं महापातकनाशनम् ॥
पुण्यं दिनमथासाद्य तुलापुरुषदानवत् ।
ऋत्विग्मण्डपसम्भारभूषणाच्छादनादिकम् ॥
कुर्यादुपोषितस्तद्वल्लोकेशावाहनं बुधः ।
पुण्याहवाचनं कृत्वा तद्वत् कृत्वाधिवासनम् ॥

अत्र देशकालवृद्धिश्राद्धशिवादिपूजाब्राह्मणवाचनगुरुऋत्विग्वरणमधुपर्कदानकुण्डमण्डपवेदिसम्भारहोमाधिवासनादि सर्वं हिरण्यगर्भादिपञ्चदशमहादानप्रकृतिभूतं मत्स्यपुराणोक्ततुलापुरुषदानविहितं वेदितव्यम् ।

ब्राह्मणैरानयेत् कुण्डं तपनीयमयं शुभम् ।
द्वासप्तत्यङ्गुलोच्छ्रायं हेमपङ्कजगर्भवत् ॥
त्रिभागहीनविस्तारं प्रशस्तं मुरजाकृति ।

'कुण्डमिति' हिरण्यगर्भाख्यं पात्रं 'तपनीयमयं' स्वर्णमयं हेमपङ्कजमष्टदलं तदेव नाभिशब्दवाच्यम् । 'त्रिभागहीनविस्तारमिति' अष्टाचत्वारिंशदङ्गुलविस्तारमित्यर्थः । 'मुरजाकृति' मृदङ्गाकृति । आज्यक्षीराभिपूरितमिति क्वचित् पाठः । तत्र घृतक्षीरे तुल्यपरिमाणे । यद्यपि चातिपूरितमित्युच्यते तथापि यजमानप्रवेशेन यथा तच्च बहिरुच्छलति तथा पूरणीयम् ।

दशान्त्राणि सरत्नानि दात्रं सूचीं तथैव च ।
हेमनालं सपिटकं वह्निमप्ययसंयुतम् ॥
तथैवावरणं नाभेरुपवीतं च काञ्चनम् ।
पार्श्वतः स्थापयेत् तद्वद्धेमदण्डं कमण्डलुम् ॥

'दशान्त्राणि' दशखण्डानि । अभ्राणीति क्वचित् पाठः । तानि काञ्चनानि अभ्राकारतया अभ्राणीति । अभ्रं खनित्रमिति केचित् । रत्नानि पञ्च प्रसिद्धानि । 'सपिटकं' मञ्जूषान्वितम् । 'बहिरिति' हेमकुण्डाद्बाह्यप्रदेशे पार्श्वतः स्थापयेदित्यनेन सम्बन्धः । वह्निमादित्यसंयुतमिति च पाठान्तरम् । वह्निभास्करयोर्लक्षणं ब्रह्माण्डदाने वक्ष्यते ।

'वह्निमप्ययसंयुतमिति' तदा अप्ययो वरुणः । तल्लक्षणमपि तत्रैव 'नाभेरावरणमिति' नाभ्यावरणार्थं सौवर्णं वस्त्रं दात्रादीन्यपि सुवर्णमयान्येव कार्याणि ।

पद्माकारं पिधानं स्यात् समन्तादङ्गुलाधिकम् ।
मुक्तावलीसमोपेतं पद्मरागदलान्वितम् ॥
तिलद्रोणोपरिगतं वेदीमध्ये ततोऽर्चयेत् ।

द्रोणः परिभाषायां व्याख्यातः । इह खलु हिरण्यगर्भनिर्माणसुवर्णपरिमाणस्याम्नातात् यावता यजमानस्य प्रवेशधारणोपायिकं कुण्डं भवति तावता घटनीयम् । तच्च वेदिकामध्ये लिखितचक्रस्योपरि तिलद्रोणं निधाय तदुपरि संस्थाप्य पूजयेत् ।

अथ तुलापुरुषदावत् तदधिवासनदिनादन्येद्युर्ब्राह्मणवाचनं विधाय पूर्णाहुतिप्रभृतिकर्मशेषसमाप्तिं कुर्यात्। ततश्च कुण्डसमीपवर्तिकलशजलैः पूर्ववदभिषेकः।

तदुच्यते।

ततो मङ्गलशब्देन ब्रह्मघोषरवेण च।
सर्वौषध्योदकस्नानं स्नापितो वेदपुङ्गवैः॥

'सर्वौषध्यः' व्याख्याताः।

शुक्लमाल्याम्बरधरः सर्वाभरणभूषितः।
इममुच्चारयेन्मन्त्रं गृहीतकुसुमाञ्जलिः॥
नमो हिरण्यगर्भाय हिरण्यकवचाय च।
सप्तलोकसुराध्यक्ष जगद्धात्रे नमो नमः॥
भूर्लोकप्रमुखा लोकास्तव गर्भे व्यवस्थिताः।
ब्रह्मादयस्तथा देवा नमस्ते विश्वधारिणे॥
नमस्ते भुवनाधार नमस्ते भुवनाश्रय।
नमो हिरण्यगर्भाय गर्भे यस्य पितामहः॥
यतस्त्वमेव भूतात्मा भूते भूते व्यवस्थितः।
तस्मान्मामुद्धराशेषदुःखसंसारसागरात्॥
एवमामन्त्र्य तन्मध्यमाविश्यास्त उदङ्मुखः।
मुष्टिभ्यां परिसंगृह्य धर्मराजचतुर्मुखौ॥
जानुमध्येशिरः कृत्वा तिष्ठेदुच्छ्वासपञ्चकम्।

धर्मराजोऽत्र सुवर्णमयस्तल्लक्षणं च तुलापुरुषेऽभिहितम्। चतुर्मुखोऽपि सौवर्णस्तल्लक्षणं ब्रह्माण्डदाने वक्ष्यते। तत्र दक्षिणमुष्टौ धर्मराजो वाममुष्टौ चतुर्मुख इति।

गर्भाधानं पुंसवनं सीमन्तोन्नयनं तथा।
कुर्युर्हिरण्यगर्भस्य ततस्ते द्विजपुङ्गवाः॥

अनवलोभनमप्यत्र विज्ञेयमेतेषु गर्भादानादिषु वक्ष्यमाणेषु जातकर्मादिषु मन्त्रयुक्तमनुध्यानमात्रमत्राचरणीयम् ।

गीतमङ्गलघोषेण गुरुं सन्तोषयेत् ततः ।
जातकर्मादिकाः कुर्यात् क्रियाः षोडश चापराः ॥

ताश्चाभिधीयन्ते । जातकर्म नामकरणं निष्क्रमणमन्नप्राशनं चूडाकरणमुपनयनं प्राजापत्यमैन्द्रमाग्नेयं सौम्यमिति चत्वारि वेदव्रतानि गोदानं केशान्तश्चेति द्वादश पूर्वाश्चतस्र इत्युभयेषु षोडशत्वम् ।

सूच्यादिकं च गुरवे दत्त्वा मन्त्रमिमं जपेत् ।
नमो हिरण्यगर्भाय विश्वगर्भाय ते नमः ॥
चराचरस्य जगतो गृहभूताय वै नमः ।
मर्त्योऽहं जनितः पूर्वं मर्त्यधर्मा द्विजोत्तमः ॥
त्वद्गर्भसम्भवादेष दिव्यदेहो भवाम्यहम् ।
चतुर्भिः कलशैर्भूयस्ततस्ते द्विजपुङ्गवाः ॥
स्नानं कुर्युः प्रसन्नाश्च सर्वाभरणभूषिताः ।

कलशैः कुण्डसमीपस्थितैरेव स्नानं कुर्युर्यजमानस्येति शेषः ।

देवस्य त्वेति मन्त्रेण स्थितस्य कनकासने ।
अद्य जातस्य तेऽङ्गानि अभिषेक्ष्यामहे वयम् ॥
दिव्येनानेन वपुषा चिरं जीव सुखी भव ।
ततो हिरण्यगर्भं तं तेभ्यो दद्याद्विचक्षणः ॥

अत्र दानवाक्यादिप्रयोगो द्रव्यविभागश्च ऋत्विगाचार्याणां तुलापुरुषवद्बोद्धव्यः ।

ते पूज्याः सर्वभावेन बहवो वा तदाज्ञया ।
तत्रोपकरणं सर्वं गुरवे विनिवेदयेत् ॥
पादुकोपानहच्छत्रचामरासनभाजनम् ।
ग्रामं वा विषयं वापि यच्चान्यदपि सम्भवेत् ॥

'विषयः' ग्रामसमूहः । 'अन्यत्' रत्नादि । अत्राप्यात्मालङ्कारं गुरवे दद्यात् । ग्रामादयश्च दक्षिणात्वेनैव संबध्यते प्रकृतौ तथा दर्शनात् । ततः पूर्ववत् पुण्याह-वाचने कृते देवतापूजाविसर्जनादि विधेयम् ।

## अथ हिरण्यगर्भविधिं व्याख्यामः ।

सर्वपापापनोदन उदगयन आपूर्यमाणे पक्षे श्वः पुण्ये नक्षत्रे ऋत्विग्यजमानौ क्लृप्तश्मश्रुरोमनखौ स्याताम् । अथ ऋत्विक् प्रागस्तं गमनादाश्वत्थ्यावरण्यावादाय जायस्वाग्नेऽश्वत्थादिति द्वाभ्यां मथ्यमानमनुमन्त्रयते । तृतीयया जातं चतुर्थ्योपसमादधाति । शुचि दूरिशं परिधाप्य यथोक्तमाञ्जनाभ्यञ्जनानुलेपनं कारयित्वा वासो गन्धान् हिरण्यस्रजश्चाबध्याग्निमुपसमाधायालभ्याज्यं जुहुयात् । हिरण्यगर्भाय स्वाहा ब्रह्मणे स्वाहा विष्णवे स्वाहा प्रजापतये स्वाहा परमेष्ठिने स्वाहा कस्मै स्वाहेति च श्रावयित्वा तैरेवोपस्थाय अग्ने प्रजातं परियद्धिरण्यं यदा वध्नन्निति हिरण्य स्रजमाग्रथ्य रक्षन्तु त्वा अग्नय इति चतसृभी रक्षां कृत्वा दर्भान् संस्तीर्याधःशय्यासनौ स्याताम् । श्वोभूतेऽभिजिन्मुहूर्त्ते हिरण्मयं मण्डलाकृतिनाभिमात्रं पात्रमाधाय सापिधानं श्रुचाज्यस्थाल्युदकपात्राण्यात्मालङ्कारं चेति हिरण्यमयानि राजानं हिरण्यवतीभिः स्नापयित्वा हिरण्यकलसैस्तस्मिन् पात्रे पयोगणेन पयश्चासीभ्यां होमुचेन शान्तीतीयेन हिरण्यगर्भसूक्तेण पञ्चभिश्च नामभिः संपातानानीय सदस्यावृत्विजापयेद्राजा हिरण्यगर्भत्वमीप्सति तस्मै भगवन्तो मनुजानीथेति तैरनुज्ञातात् तु देहिवाजिन्निति द्वाभ्यां प्रवेशयेत् । त्रयस्त्रिंशद्देवा इत्यपिधाय तमनुपिधाय तमनुशास्ति वाचं नियम्य प्रतिसंहृतेन्द्रियाणि विशेषेभ्यो मनसा च भगवन्तं हिरण्यगर्भं परमेष्ठिनं ध्यायन्नास्त इति तथेति तत् प्रतिपद्यते सप्तदशमात्रान्तरमास्ते सप्तदशो वै प्रजापतिः प्रजापतेरावृतमित्युद्धरेद्धनेनमिति च तैरनुज्ञाप्य तमुद्धरेत् । तथैव सदस्याननुज्ञाप्योद्धरेद्धिरण्येन चक्रेणेत्यपावृत्य माते

प्राण इत्युद्धरेदुद्धृतं हिरण्यनाम्ना प्रतिमुच्य यस्त्वामृत्युरित्युपस्येत् संपश्यमाना इत्यवेक्षितावेक्षितो ब्राह्मणान् स्वस्ति वाच्य नमस्कुर्यात् । हिरण्यगर्भायेत्येवमादिभिरेते वै हिरण्यगर्भस्य प्रीतमानास्तं ब्राह्मणा ब्रूयुरुत्तिष्ठ हिरण्यगर्भानुगृहीतोऽसीत्यप्रतिरथेनेति हुत्वा संस्थाप्य अप्सु ते राजावरुण इति वरुणमभिष्टूयावभृथमुपेत्य स्नात्वा पवित्रैरभ्युक्ष्यालङ्कृत्यादित्यमुपतिष्ठेत ।

हिरण्यं तव यद्गर्भो हिरण्यस्यापि गर्भजः ।
हिरण्यगर्भस्तस्मात् त्वं मां पाहि महतो भयात्—इति ॥

सूर्यस्यावृतमिति प्रदक्षिणमावृत्य ग्रहान् नौमीति ग्रहान् प्रतिपद्य त्वमग्ने प्रमिनिरित्यग्निमुपस्थाप्योत्सृजेद्द्विजेभ्यः शतसहस्रं दक्षिणा ग्रामवरं च स्रुक्स्रुवाज्यस्थाल्युदकपात्रात्मालङ्कारं च दद्यात् । सदस्येभ्यो यावद्वा तुष्येरँस्तावद्वा देयं यथा काममन्नेन ब्राह्मणान् परिचरेत् ।

## तत्र श्लोकाः ।

वेदानां पारगा यत्र चतुर्णां ब्रह्मवित्तमाः ।
तुष्टा यस्याशिषो ब्रूयुस्तस्येज्या सकला भवेत् ॥
ब्राह्मणानां प्रसादेन सूर्यो दिवि विराजते ।
इन्द्रोऽप्येषां प्रसादेन देवानतिविराजति ॥
हिरण्यदानस्य फलममृतत्वमिति श्रुतिः ।
श्रूयते ह्यस्य दाता यः सोऽमृतत्वं समश्नुते ॥
य इक्ष्वाकुप्रभृतयः पुरा राजर्षयोऽमलाः ।
दत्त्वा हिरण्यं विप्रेभ्यो ज्योतिर्भूत्वा दिवि स्थिताः ॥
य एवं संस्कृतो राजा विधिना ब्रह्मवादिना ।
प्रजानामिह साम्राज्यं ज्यैष्ठ्यं श्रैष्ठ्यं स गच्छति ॥
अमुष्मिन् ब्रह्मणा सार्धमानन्दमनुभूय वै ।

ज्योतिर्मयात् सत्यलोकान्न चेहावर्त्तते पुनः ॥

इति ब्राह्मणम् ।

मत्स्यपुराणे ।

अनेन विधिना यस्तु पुण्येऽह्नि विनिवेदयेत् ।
हिरण्यगर्भदानं स ब्रह्मलोके विधीयते ॥
पुरेषु लोकपालानां प्रतिमन्वन्तरं वसेत् ।
कल्पकोटिशतं यावद्ब्रह्मलोके महीयते ॥
कलिकलुषविमुक्तः पूजितः सिद्धसाध्यै-*
रमरचमरमालावीज्यमानोऽप्सरोभिः ।
पितृशतमथ बन्धून् पुत्रपौत्रप्रपौत्रा-
नपि नरकनिमग्नाँस्तारयेदेक एव ॥
इति पठति य इत्थं यः शृणोतीह सम्यक्
मधुपुररिपुलोके पूज्यते सोऽपि सिद्धैः ।
मतिमपि च जनानां यो ददाति प्रियार्थं
विबुधपतिजनानां नायकः स्यादमोघम् ॥

इति हिरण्यगर्भदानविधिः ।

श्रीभगवान् उवाच ।

दानधर्मेषु यद्दानं दानधर्मोत्तरं शृणु ।
यत् कृत्वा पातकैः सर्वैर्मुच्यन्ते जन्तवः सदा ॥
यो ददाति च विप्रेभ्यस्तस्य स्वर्गोऽप्यदूरतः ।
हिरण्यगर्भं तं कुर्याद्धिरण्याद्रतुलाकृतम् ॥
सप्तषट्पञ्चचत्वारि तुलाया वृद्धिरेकतः ।

---

* सङ्घैरिति पाठान्तरम् ।

शातकुम्भमयं कुण्डं कृत्वाऽरत्नित्रयोन्नतम् ॥
द्व्यङ्गुलं वर्तुलं भद्रं नानारत्नैरलङ्कृतम् ।
शुचिदेशे समे देशे सौवर्णं पङ्कजं लिखेत् ॥
चतुरस्रं चतुर्हस्तं चतुर्द्वारं च मण्डलम् ।
मध्ये पद्मं समालिख्य रत्नकीर्णं तु कारयेत् ॥
पद्मे संस्थापितं* कुण्डं हेमगर्भं तु संज्ञितम् ।
प्रादेशद्वयविस्तीर्णं चतुःप्रादेशमायतम् ॥
चारु कृत्वा तु सौवर्णं नाभिं कनकसूत्रितम् ।
कृत्वा हस्तप्रमाणं च कुण्डस्याभ्यन्तरे यदि ॥
तत् कुण्डं पूरयेत् क्षीरैर्गन्धपुष्पैः समर्चयेत् ।
कुण्डस्योपरि पार्श्वे† च ब्रह्मविष्णुमहेश्वरान् ॥
सूर्यं ग्रहाँश्च सौवर्णान् लोकपालाँश्च कारयेत् ।
शुचि स्नात्वा नरः सम्यक् पूजयेत् सर्वदेवताः ॥
स्थण्डिलं तत्र कुर्वीत होमयेयुर्द्विजातयः ।
ऋतुसंवेशनं कृत्वा तत् कुण्डं परिवेष्टयेत् ॥
वासोभिः परितः सर्वं यावत् कर्म समाप्यते ।
गर्भाधानं पुंसवनं सीमन्तोन्नयनादि च ॥
कृत्वा पश्चाद्विनिष्क्रम्य तत् कुण्डान्तरसंवृतम् ।
नाभिं नाभिप्रदेशे च कण्ठे कनकसूत्रिकाम् ॥
गृहीत्वा कर्षयेद्विप्रान् दाता स्वर्गान्महीं व्रजेत् ।
शङ्खतूर्यनिनादोच्चैरुत्क्रित्यार्कमुदीरयेत् ॥
नमो हिरण्यगर्भाय मन्त्रमेतमुदाहरेत् ।

---

* संस्थाप्येति क्वचित् पाठः ।

† कुण्डस्योत्तरदिक्पार्श्वे इति वा पाठः ।

यावत् षोडशसंस्कारान् जातकर्मादि कारयेत् ॥
यथोक्तं वैदिकं कर्म मन्त्रवित् कारयेद्‌द्विजान् ।
तत् क्षीरपायसं सिद्धं भोजयेदृत्विजस्तदा ॥
तदेवात्मनि युञ्जीयात् भुक्तशेषं द्विजोत्तमैः ।
हिरण्यगर्भचारुं च नाभिं सौवर्णिकान्वितम् ॥
तत् सर्वं ब्राह्मणे दद्यादिष्टापूर्त्तानि ऋत्विजे ।
नरो वा यदि वा नारी एवं ब्रह्मात्मसंभवम् ॥
यः करोति महापुण्यं तस्यापि शृणु यत् फलम् ।
मृतो ब्रह्मत्वमाप्नोति हंसयानं रविप्रभम् ॥
ब्रह्मकन्याभिः संसेव्यो ब्रह्मलोकं स गच्छति ।
ब्रह्मवत् क्रीडते तत्र ब्रह्मसंवत्सरत्रयम् ॥
ब्रह्मलोकावतीर्णश्च इन्द्रलोके महीयते ।
इन्द्रलोके रमित्वा तु वर्षकोटिशतत्रयम् ॥
ब्रह्मणस्तु पुरे रम्ये क्रीडित्वाऽथ तदोत्तमे ।
विद्याधरोऽथ गान्धर्वो वर्षकोटिं पृथक् पृथक् ॥
इह लोके तु संप्राप्ते राजराजोत्तमः प्रभुः ।
शतयोजनविस्तीर्णे त्रिगुणे वाऽथ मण्डले ॥
रूपसौभाग्यवान् वीरो जायते हि न संशयः ।
यावद्वर्षशतं राज्यं सुसम्पन्नमकण्टकम् ॥
तेजस्वी सुखभाग्नित्यं धर्मवान् विजितेन्द्रियः ।

इति विष्णुधर्मोक्तो हिरण्यगर्भदानविधिः ।

**सनत्कुमार उवाच ।**

तुलका कथिता ह्येषा ह्याद्या सामान्यरूपिणी ।
हिरण्यगर्भं वक्ष्यामि द्वितीयं सर्वसिद्धिदम् ॥

अधःपात्रं सहस्रेण हिरण्येन विधीयते ।
ऊर्ध्वपात्रं तदर्धेन मुखसंवेशमात्रकम् ॥
फलामेवं शुभां कुर्यात् सर्वालङ्कारसंयुताम् ।
अधःपात्रे स्मरेद्दिव्यां गुणत्रयसमन्विताम् ॥
चतुर्विंशतिकां देवीं ब्रह्मविष्ण्वग्निरूपिणीम् ।
ऊर्ध्वपात्रे गुणातीते षट्त्रिंशकमुमापतिम् ॥
आत्मानं पुरुषं ध्यायेत् पञ्चविंशकमञ्जकम् ।
पूर्वोक्तस्थानमध्ये तु वेदिकोपरिमण्डले ॥
शालिमध्ये क्षिपेन्नीत्वा नववस्त्रैश्च वेष्टितम् ।
माषकल्केन चालिप्य पञ्चगव्येन पूरयेत् ॥
ईशानाद्यैर्यथान्यायं पञ्चभिः परिपूजयेत् ।
पूर्ववच्चैव पूजा च होमश्चैव यथाक्रमम् ॥

'आद्या' हिरण्यगर्भादिदानानां प्रकृतिभूता तुलापुरुषोक्तक्रिया। अतः 'सामान्यरूपिणी' हिरण्यगर्भादौ प्रातिस्विकविशेषैः सह तुलापुरुषोक्तं मण्डपाद्यृत्विग्दक्षिणान्तं सामान्यं समुच्चयमित्यर्थः। सहस्रेण कर्षेणेत्यवधेयम् ।

कुर्यात् सहस्रकर्षेण अधःपात्रं हिरण्यतः ।
तदर्धेनोर्ध्वपात्रं तु सहस्रेण द्वयं तु वा ॥
द्विपादं वा त्रिपादं वा सपादं सार्धमेव वा ।
द्विगुणं वा प्रकर्त्तव्यं यथा लाभं तु वा भवेत् ॥
सद्वृक्षजं वा तं कृत्वा स्वर्णपट्टैस्तु वेष्टयेत् ।

इति कामिकोक्तेः।

एतच्च स्वल्पदानाधिकारिविषयम्। आढ्यविषये तु तुलातन्त्रोक्तं यथा।

चत्वारिंशत् षडधिकैः सहस्रैर्गर्भमुत्तमम् ।
पञ्चविंशसहस्रैस्तु मध्यमं समुदाहृतम् ॥

तद्द्वादशसहस्रैस्तु सुवर्णैरधमं भवेत्–इति ।

'देवीमुमापतिं च स्मरेदिति' तयोः प्रतिमां कृत्वेत्यवधेयम् ।

वातुलेऽपि ।

अधःपात्रे तु कर्त्तव्यमुमारूपं प्रसन्नकम् ।
ऊर्ध्वपात्रे तु कर्त्तव्यो महेशस्य तु विग्रहः ॥
अथ वा शक्तिभागे तु लक्ष्मीं वै तत्र कारयेत् ।
ऊर्ध्वपात्रे तु कर्त्तव्यं विष्णुरूपं परं शुभम् ॥

एतेषां लक्षणं ब्रह्माण्डदाने वक्ष्यते ।

'आत्मानमिति' यजमानमीश्वरेण निषिक्तं गर्भस्थं पुरुषत्वेन स्मरेत् । ततो मण्डलान्तस्थपद्मं कर्णिकामध्ये धान्यराशौ हिरण्यगर्भसंज्ञां फलां च निक्षिपेत् । माघ-कल्कोऽयःफलकसम्बन्धी नीरन्ध्रतार्थः ।

पञ्चगव्यपूरणमुक्तं वातुले ।

गोमूत्रं द्विगुणं क्षीरात् क्षीरार्धं दधि कथ्यते ।
तदर्धं गोमयं ज्ञेयं गोमयार्धं घृतं भवेत् ॥
हिंकृण्वतीत्यृचा तत्र गोमूत्रं तु विनिक्षिपेत् ।
शकमयमित्यृचा तत्र गोमयं परिकल्पयेत् ॥
आप्यायस्वेति मन्त्रेण क्षीरं तत्र प्रकल्पयेत् ।
दधिक्राव्णेति मन्त्रेण दधि तत्र प्रयोजयेत् ॥
घृतं मिमिक्षे मन्त्रेण घृतं तत्र विलोडयेत् ।
एवमापूरयेत् यत्नात् जानुदघ्नं तु देशिकः ॥
सम्यगापूरयेद्विद्वान् ब्रह्मयज्ञानकेन वै ।
प्रविशेत् प्राङ्मुखो विद्वानाविश्याऽऽस्त उदङ्मुख–इति ॥

ईशानादिमन्त्रास्तु तैत्तिरीयकश्रुतौ ।

ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिः

ब्रह्मा शिवो मेऽस्तु सदाशिवो सद्योजातं प्रपद्यामि सद्योजाताय वै नमः भवेभवे नातिभवे भजस्व मां भवोद्भवाय नमः वामदेवाय नमः ज्येष्ठाय श्रेष्ठाय नमः रुद्राय नमः कालाय नमः कलविकरणाय नमः बलाय नमः बलविकरणाय नमः बलप्रमथनाय नमः सर्वभूतदमनाय नमः मनोन्मनाय नमः अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यश्च सर्वतः सर्वसर्वदेवेभ्यो नमस्तेऽस्तु रुद्ररूपेभ्यः । तत्पुरुषाय विद्महे महादेवाय धीमहि । तन्नो-रुद्रः प्रचोदयादिति ।

'पूर्ववदिति लिङ्गपुराणोक्ततुलापुरुषदानवदित्यर्थः'।

गौरीगायत्रिकां जप्त्वा प्रविशेत् प्राङ्मुखः स्वयम् ।
सुभगायै विद्महे यशोमालिन्यै धीमहि । तन्नो गौरी प्रचोदयात् ॥

इति गौरीगायत्री ।

विधिनैव ततः पश्चाद्गर्भाधानादिकाः क्रियाः ।
कृत्वा षोडशमार्गेण विधिना ब्रह्मणोत्तमः ॥
दूर्वारसेन कर्त्तव्यं सेचनं दक्षिणे पुटे ।
ऊदुम्बरफलैः सार्धमेकविंशत्कुशाँस्तदा ॥
शक्त्याऽथ तावदेवात्र कुर्यात् सीमन्तकर्मणि ।
उद्वाहे कन्यकां कृत्वा त्रिंशन्निष्केण शोभनाम् ॥
अलङ्कृत्य तथा हुत्वा शिवाय विनिवेदयेत् ।
अन्नप्राशनके विद्वान् भोजयेत् पायसादिभिः ॥
एवं विश्वजिदन्ताश्च गर्भाधानादिकाः क्रियाः ।
शक्तिबीजेन कर्त्तव्या ब्राह्मणैर्वेदपारगैः ॥
शेषं सर्वं च विधिना तुलादानवदाचरेत् ।

'विधिनेत्यादि' गर्भाधानपुंसवनसीमन्तोन्नयनजातकर्मनामकरणनिष्क्रमणान्न-प्राशनचौलोपनयनवेदव्रतचतुष्कगोदानसमावर्त्तनविवाहाख्याः षोडशक्रियास्तत्र निषेक-

पुंसवने यजमानस्य मातापितृस्थानीयमिथुनमानीय तत्र पुंसा स्त्रिया वा चोपरिणात्र-नासारन्ध्रस्थापनीये छिद्रद्वये दक्षिणपुटे दूर्वारसं सेचयेदाचार्यः ।

कर्त्तारं भार्यया युक्तं सर्वालङ्कारशोभितम् ।
आनीय कुर्यात् तत्स्थस्य गर्भाधानादिकाः क्रियाः ॥
भार्यादक्षपुटे दूर्वारससेचनमाचरेत् ।

इति कामिकोक्तेः ।

प्रजावज्जीवपुत्राभ्यां सेचनं तत आचरेत् ।
दूर्वारसेन कर्त्तव्या व्याहृत्या च घृताहुतिः ॥

इति वातुलोक्तेश्च ।

उदुम्बरफलैः सह एकविंशत् कुशान् हृदा हृल्लेखाख्येन शक्तिबीजेन सीमन्त-कर्म कुर्यात् ।

एकविंशति संख्यातानुदुम्बरफलान्वितान् ।
कुशानानीय शक्त्याऽथ कुर्यात् सीमन्तकर्म च ॥

इति कामिकोक्तेः ।

निषेकादित्रयं च गर्भान्तःस्थे कार्यम् ।

निष्क्रान्ते त्वितराणीति ।

एवमेताः षोडशक्रियास्तदुपरि पञ्चमहायज्ञधर्मा अर्यमान्ताश्चतुर्विंशतिः । एवं चत्वारिंशत् संस्कारकर्माणि गौतमादिस्मृतानि विश्वजिद्यागसहितानि कार्याणी-त्यर्थः । 'शेषमिति' ऋत्विगाचार्यदक्षिणादिकं सर्वेभ्यो हिरण्यगर्भद्रव्यदानं तदनुमत्या चान्येभ्योऽपि श्रोत्रियादिभ्यो दानमिति लिङ्गपुराणोक्ततुलापुरुषदानवदनुविधेयम् ।

इति श्रीलिङ्गपुराणोक्तो हिरण्यगर्भदानविधिः ।

## अथ ब्रह्माण्डाभिधानं तृतीयं महादानं लिख्यते ।

### मत्स्यपुराणे ।

अथातः संप्रवक्ष्यामि ब्रह्माण्डं विधिपूर्वकम् ।
यच्छ्रेष्ठं सर्वभूतानां महापातकनाशनम् ॥

पुण्यं दिनमथासाद्य तुलापुरुषदानवत् ।
ऋत्विग्मण्डपसम्भारभूषणाच्छादनादिकम् ॥
लोकेशावाहनं तद्वदधिवासनकं तथा ।

'तुलापुरुषदानवदिति' कालदेशवृद्धिश्राद्धं शिवादिपूजा ब्राह्मणवाचनगुर्वृत्विग्वरणमधुपर्कदानकुण्डमण्डपवेदिकासम्भारलोकेशावाहनाधिवासनादि सर्वं मत्स्यपुराणोक्ततुलापुरुषदानविहितं वेदितव्यमित्यर्थः ।

कुर्याद्विंशत्पलादूर्ध्वमासहस्राच्च शक्तितः ।
शकलद्वयसंयुक्तं ब्रह्माण्डं काञ्चनं बुधः ॥

'शकलद्वयं' खण्डद्वयम् ।

**तल्लक्षणं तु ब्रह्माण्डपुराणे ।**

कुम्भच्छाया भवेद्यादृक् प्रतीच्यां दिशि चन्द्रमाः ।
उदितः शुक्लपक्षादौ वपुरण्डस्य तादृशम्—इति ॥

'कुम्भच्छायेति' कुम्भच्छाया ग्रीवाहीनकुम्भादित्यवधेयम् ।

दिग्गजाष्टकसंयुक्तं षड्वेदाङ्गसमन्वितम् ।
लोकपालाष्टकोपेतं मध्यस्थितचतुर्मुखम् ॥
शिवाच्युतार्कशिखरमुमालक्ष्मीसमन्वितम् ।
वस्वादित्यमरुद्गर्भं महारत्नसमन्वितम् ॥

**अथैतेषां दिग्गजप्रभृतीनां क्रमेण लक्षणान्युच्यन्ते । आदित्यपुराणे ।**

शुभ्राभ्रश्च चतुर्दंष्ट्रः श्रीमानैरावतो गजः ।
पुष्पदन्तो बृहत्सामा षड्दन्तः पुष्पदन्तवान् ॥
सामान्यगजरूपेण शेषा दिक्करिणः स्मृताः ।

**तन्नामानि शास्त्रान्तरे ।**

ऐरावतः पुण्डरीको वामनः कुमुदोऽञ्जनः ।

पुष्पदन्तः सार्वभौमः सुप्रतीकश्च दिग्गजाः ॥

## वेदाङ्गानि स्कन्दपुराणे ।

शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिषां चितिः* ।

छन्दश्चेति षडेतानि वेदाङ्गानि प्रचक्षते ॥

मूर्त्तानि ब्रह्मणो लोके साक्षसूत्राणि तानि तु ।

द्विजातिषु शुभास्यानि वामे दधति कुण्डिकाम् ॥

तानि च पश्चिमदिशि वेदसन्निधौ निवेशनीयानि । दिग्विशेषानाम्नातात् ।

प्रधानं नीयमानं हि तत्राङ्गान्यपकर्षति ।

इति न्यायात् । वक्ष्यते च-

पश्चिमे चतुरो वेदानिति ।

## लोकपालरूपाण्याह विश्वकर्मा ।

चतुर्दन्तो गजारूढो वज्रपाणिः पुरन्दरः ।

प्राचीपतिः प्रकर्त्तव्यो नानाभरणभूषितः ॥

पिङ्गभ्रूश्मश्रुकेशाक्षः पीनाङ्गजठरोऽरुणः ।

छागस्थः साक्षसूत्रश्च सप्तार्चिः शक्तिधारकः ॥

ईषत्पीनो यमः कार्यो दण्डहस्तो विजानता ।

रक्तदृक् पाशधृक् क्रुद्धो निर्ऋतिर्विकृताननः ॥

पुंस्थितः खड्गहस्तश्च भूतवान् राक्षसावृतः ।

वरुणः पाशभृत् सौम्यः प्रतीच्यां मकराश्रयः ॥

धावन् हरिणपृष्ठस्थो ध्वजधारी समीरणः ।

दशाश्वरथगः सोमो गदापाणिर्वरप्रदः ॥

शशकवाह इत्यागमान्तरम् ।

पूर्वोत्तरे त्रिनेत्रश्च वृषभस्थस्त्रिशूलभृत् ।

---

* गतिरिति पाठान्तरम् ।

कपालपाणिश्चन्द्रार्धभूषणः परमेश्वरः ॥

## चतुर्मुखरूपं तु विष्णुधर्मोत्तरे ।

पद्मपत्रासनस्थश्च ब्रह्मा कार्यश्चतुर्मुखः ।
अक्षमालास्रजं बिभ्रत् पुस्तकं च कमण्डलुम् ॥
वासः कृष्णाजिनं तस्य पार्श्वे हंसस्तथैव च ।

## शिवलक्षणमुक्तं वायुपुराणे ।

पञ्चवक्त्रो वृषारूढः प्रतिवक्त्रं त्रिलोचनः ।
कपालशूलखट्वाङ्गी चन्द्रमौलिः सदाशिवः ॥

विष्णुलक्षणमुक्तं तुलापुरुषदाने ।

## सूर्यलक्षणमुक्तं विष्णुधर्मोत्तरे ।

रविः कार्यः शुभश्मश्रुः सिन्दूरारुणसुप्रभः ।
पद्मासनः पद्मकरो भूषितो रशनाधरः ॥

'उमालक्ष्मीसमन्वितमित्यत्र' शिवाच्युतयोः सन्निहिते उमालक्ष्म्यौ विधेये ।

## उमालक्षणमुक्तं देवीपुराणे ।

गौरीं शङ्खेन्दुवर्णाभां शर्वरीशनिषेविताम् ।
वृत्तपद्मासनासीनां साक्षसूत्रकमण्डलुम् ॥
वरदोद्यतरूपाढ्यां सर्वमाल्यफलप्रियाम् ।

'वरदोद्यतरूपाढ्यां' वरदाभयपाणिकामित्यर्थः ।

## लक्ष्मीलक्षणमुक्तं पञ्चरात्रे ।

पद्मासनस्थां कुर्वीत श्रियं त्रैलोक्यमातरम् ।
गौरवर्णां सुरूपां च सर्वालङ्कारभूषिताम् ॥
रौक्मपद्मकरव्यग्रां* वरदां दक्षिणेन तु ।

---

* रौक्मपद्मव्यग्रकरामिति वा पाठः ।

वस्वादिरूपाणि नारदीये ।

प्रसन्नवदनाः सौम्या वरदाः शक्तिपाणयः ।
पद्मासनस्था द्विभुजाः कर्त्तव्या वसवः सदा ॥
पद्मासनस्था द्विभुजाः पद्मगर्भान्तकान्तयः ।
करादिस्कन्धपर्यन्तनालपङ्कजधारिणः ॥
अधःसंस्थितमेषादिराशयः प्रावृताङ्घ्रिकाः ।
इन्द्राद्या द्वादशादित्यास्तेजोमण्डलमध्यगाः ॥

तथा ।

वायुतुल्येन रूपेण मरुतो नामदेवताः ।

कर्त्तव्या इति शेषः । वस्वादिनामानि तुलापुरुषोक्तानि वेदितव्यानि । 'महारत्नसमन्वितमिति' महारत्नानि परिभाषायामुक्तानि । अनन्तमिथुनान्वितमिति क्वचित् पाठः ।

फणासप्तान्वितोऽनन्तः पृथ्वी स्त्रीरूपधारिणी ।

इत्यनन्तमिथुनम् ।

अथ प्रकृतमुच्यते ।

वितस्तेरङ्गुलशतं यावदायामविस्तरम् ।
कौशेयवस्त्रसंवीतं तिलद्रोणोपरि न्यसेत् ॥
तथाष्टादशधान्यानि समन्तात् परिकल्पयेत् ।

'वितस्तेरङ्गुलशतमिति' द्वादशाङ्गुलमारभ्याङ्गुलशतं यावच्छक्त्यनुसारेण कार्यमित्यर्थः । द्रोणमानमष्टादशधान्यानि च परिभाषायां द्रष्टव्यानि । स च तिलद्रोणो वेदिकायां लिखितचक्रस्योपरि स्थापनीयः ।

पूर्वेणानन्तशयनं प्रद्युम्नं पूर्वदक्षिणे ।
प्रकृतिर्दक्षिणे देशे संकर्षणमतः परम् ॥
पश्चिमे चतुरो वेदाननिरुद्धमतः परम् ।

अग्निमुत्तरतो हैमं वासुदेवमतः परम् ॥
समन्ताद्गुणपीठस्थानर्चयेत् काञ्चनान् बुधः ।
स्थापयेद्वस्त्रसंवीतान् पूर्णकुम्भान् दशैव तु ॥

'पूर्वंशेत्यादि' ब्रह्माण्डात् पूर्वदेशेऽनन्तशयनं शेषशायिनं गुणपीठे स्थापयेत् ।

## तन्मूर्त्तिलक्षणं विष्णुधर्मोत्तरे ।

देवदेवश्च कर्त्तव्यः शेषसुप्तश्चतुर्भुजः ।
एकपादोऽस्य कर्त्तव्यो लक्ष्म्युत्सङ्गगतः प्रभुः ॥
तथाऽपरश्च कर्त्तव्यः शेषभोगाङ्कसंस्थितः ।
एको भुजोऽस्य कर्त्तव्यस्तत्र जानौ प्रसारितः ॥
कर्त्तव्यो नाभिदेशस्थस्तथा तस्यापरः करः ।
तथैवान्यः करः कार्यो देवस्य तु शिरोधरः ॥
सन्तानमञ्जरीधारी तथैवास्य करः परः ।
नाभिसम्भूतकमले सुखासीनः पितामहः ॥
नाललग्नौ तु कर्त्तव्यौ पद्मस्थौ मधुकैटभौ ।
शङ्खचक्रगदादीनि मूर्त्तानि परितो न्यसेत्–इति

## प्रद्युम्नलक्षणं पञ्चरात्रादिषु ।

दक्षिणोर्ध्वकरे पद्मं दद्याच्छङ्खमधःकरे ।
चक्रमूर्ध्वे ततो वामे गदां दद्यात् तथा द्विजाः ॥
चापेषुधृग्वा प्रद्युम्नो रूपवान् विश्वमोहकः–इति ।

अत्र यद्यपि प्रकृतेरव्यक्तरूपतया विधानमशक्यं तथापि लक्ष्म्यादिशब्दव्यपदेशश्च सुकरमस्ति । तद्रूपमित्यतस्तदन्यतमरूपनिर्माणमेव न्याय्यम् ।

## तदुक्तं मार्कण्डेयपुराणे ।

सर्वस्याद्या महालक्ष्मीस्त्रिगुणा परमेश्वरी ।
मातुलिङ्गं गदां खेटं पानपात्रं च बिभ्रती ॥

नागयोनिं च लिङ्गं च बिभ्रती नृप मूर्धनि–इति ।

**संकर्षणरूपं विष्णुधर्मोत्तरे ।**

वासुदेवस्य रूपेण कार्यः संकर्षणः प्रभुः ।
स तु शुक्लवपुः कार्यो नीलवासा यदूत्तमः ॥
गदास्थाने च मुशलं चक्रस्थाने च लाङ्गलम्–इति ।

वेदमूर्त्तयो भूतघटे वक्ष्यन्ते ।

**अनिरुद्धरूपं नारदीये ।**

कृष्णं चतुर्भुजं दक्षे शरं खड्गं तदुत्तरे ।
धनुः खेटधरं वीरमनिरुद्धं प्रचक्षते ॥

अग्निलक्षणमुक्तम् ।

**वासुदेवरूपमपि नारदीये ।**

वासुदेवः शिवः शान्तः सिताब्जश्च चतुर्भुजः ।
योगमूर्धोर्ध्वशङ्खश्च हृद्देशार्पितहस्तकः ॥
धारयेदुत्तरे चक्रं करे वै दक्षिणे गदाम्–इति ।

एते च देवताविशेषा ब्रह्माण्डनिर्माणवत् क्लृप्तसुवर्णात् पृथक् सुवर्णेनैव घटनीयाः । ब्रह्माण्डस्य किल विंशतिपलात् प्रभृति पलसहस्रावधिरिह नियमः पुराणेषु दृश्यते । ततोऽवक्ष्यमाणकाञ्चने तस्मिन् न्यूनसंख्यत्वाद्यथावद्विहितत्वमापद्यते । न च दिग्गजाष्टकसंयुक्तं लोकपालोपेतमित्यादिनैक एव तावद्भिरङ्गैरङ्गी निष्पाद्यत इति ब्रह्माण्डवत् क्लृप्तसुवर्णेनैव दिग्गजादिप्रतिमानिर्मितौ न कश्चिद्बाध इति वाच्यं काञ्चनान् कारयेदिति पुनः काञ्चनोपदेशानार्थक्यापत्तेः । अश्रूयमाणपरिमाणानां प्रतिमानामङ्गुष्ठपर्वप्रभृतिवितस्तिपर्यन्तं यथाशक्ति परिमाणं कल्पनीयम् । पूर्णकुम्भान् स्थापयेदित्यत्र समन्तादिति योज्यम् ।

दशैव धेनवो देयाः सहेमाम्बरदोहनाः ।
पादुकोपानहच्छत्रचामरासनदर्पणैः ॥
भक्ष्यभोज्यान्नदीपेक्षुफलमाल्यानुलेपनैः ।

होमाधिवासनान्ते च स्थापितो वेदपुङ्गवैः ॥
इत्थमुच्चारयेन्मन्त्रं त्रिः कृत्वाऽथ प्रदक्षिणम् ।

'सहेमाम्बरदोहना इति' हेमशृङ्गस्ताम्रदोहनाः सवस्त्राः पार्श्वतो दक्षिणार्थमुपकल्पनीयाः । तत्राचार्याय द्वे ऋत्विग्भ्योऽन्याः संप्रदेयाः । जापकादीनामन्यैव यथाशक्ति दक्षिणेति । भविष्योत्तरे तु त्रयं निष्कशतं पार्श्वेत्यादिना सुवर्णमेव दक्षिणार्थमुपकल्पनीयमित्युक्तम् । श्राद्धाधिवासनदिनादन्येद्युरग्निकुण्डेषु ऋत्विगुपवेशनादिकर्मशेषसमाप्तौ तुलापुरुषदानवद्विहितायां पूर्ववदेव स्नापितः शुक्लमाल्याम्बरधरो गृहीतकुसुमाञ्जलिर्यजमानो ब्रह्माण्डं त्रिः प्रदक्षिणीकृत्य मन्त्रमुच्चारयेत् ।

मन्त्रः ।

नमोऽस्तु विश्वेश्वर विश्वधाम जगत्सवित्रे भगवन् नमस्ते ।
सप्ताधिलाकामरभूतलेन गर्भेण सार्धं वितराभिरक्षाम् ॥
ये दुःखितास्ते सुखिनो भवन्तु प्रयान्तु पापानि चराचराणाम् ।
त्वद्दानशस्त्राहतपातकानां ब्रह्माण्डदोषाः प्रलयं व्रजन्तु ॥
एवं प्रणम्यामरविश्वगर्भं दद्याद्द्विजेभ्यो दशधा विभज्य ।
भागद्वयं तत्र गुरोः प्रकल्प्य समं भजेच्छेषमतः क्रमेण ॥

दानवाक्यं तुलापुरुषवद्बोद्धव्यम् । तच्च दशधा विभज्य गुरोर्भागद्वयं प्रकल्प्यावशिष्टाष्टभागानामेकैकं भागं त्रिधा विभज्य चतुर्विंशतिसंख्येभ्य ऋत्विगादिभ्यः समं दद्यात् । तदनुज्ञयाऽन्येभ्योऽपि ब्राह्मणेभ्यो दद्यात् ।

स्वल्पे तु होमं गुरुरेक एव कुर्याद्यथैकाग्निविधानयुक्त्या ।
स एव संपूज्यतमोऽल्पवित्तैर्यथोक्तवस्त्राभरणादिकेन ॥

विंशतिपलादारभ्य पलसहस्रावधिद्रव्ये ब्रह्माण्डे सहस्रतदर्धादित्युत्तममध्यमादित्रैविध्यकल्पनायां कनीयसो भागस्याल्पत्वमवधेयम् । विंशतिपलनिर्मितस्यैवाल्पत्वमित्येके । विंशतिपलादर्वाक् यथाशक्ति विधाने स्वल्पत्वमवगन्तव्यमिति केचित् । एकाग्निविधानमेकस्मिन्नेव कुण्डे होमकरणम् । कुण्डमपि वरुणदिग्भागस्थितं वृत्ताकारं च कार्यम् । तदेतत्परिभाषायामुपपादितम् ।

अथ पुण्याहवाचने कृते देवतावेदीसमीपं गत्वा पूर्ववद्यजमानेन देवतापूजायां विहितायामाचार्यो विसर्जनं विदध्यात् ।

इत्थं य एतदखिलं पुरुषोऽत्र कुर्याद्-
ब्रह्माण्डदानमधिगम्य महद्विमानम् ।
निर्धूतकल्मषविशुद्धतनुर्मुरारे-
रानन्दकृत् पदमुपैति सहाप्सरोभिः ॥
सन्तारयेत् पितृपितामहपुत्रपौत्र-
बन्धुप्रियातिथिकलत्रशताष्टकं यः ।
ब्रह्माण्डदानशकलीकृतपातकौघ-
मानन्दयेच्च जननीकुलमप्यशेषम् ॥
इति पठति शृणोति वा य एतत्
सुरभवनेषु गृहेषु धार्मिकाणाम् ।
मतिमपि च ददाति मोदतेऽसा-
वमरपतेर्भवने सहाप्सरोभिः ॥

इति मत्स्यपुराणोक्तो ब्रह्माण्डदानविधिः ।

**राजोवाच ।**

विधिं ब्रह्माण्डदानस्य कृत्वाऽयं मोक्षभाग्भवेत् ।
कालं देशं द्विजं तीर्थं सर्वमेतद्वदस्व मे ॥
कृतेन येन सर्वस्य फलभागी भवाम्यहम् ।
कुत्सितस्यास्य भावस्य मोक्षः स्यादचिराच्च मे ॥

**वशिष्ठ उवाच ।**

एवं श्रुत्वा ततो राजन् पुरोधास्तस्य तं द्विजः ।
ब्रह्माण्डं कारयामास सौवर्णं सर्वधातुभिः ॥
पीठं निष्कसहस्रेण पद्मं तत्र प्रकल्पयेत् ।

तत्र ब्रह्मा तस्य मध्ये पद्मरागैरलङ्कृतः ॥
सावित्र्या चैव गायत्र्या ऋषिभिर्मुनिभिः सह ।
नारदाद्यैः सुतैः सर्वैरिन्द्राद्यैश्च सुरैस्तथा ॥
सौवर्णविग्रहाः सर्वे ब्रह्मणस्तु पुरःसराः ।
वाराहरूपो भगवान् लक्ष्म्या सह सनातनः ॥
नीलान् मरकतांश्चैव भूषायां तस्य कारयेत् ।
रजतस्य विशुद्धस्य देहं रुद्रस्य कारयेत् ॥
यो मौक्तिकै*स्तस्य शोभां कारयेदत्र बुद्धिमान् ।
मौक्तिकैश्चापि सोमस्य शोभां रत्नैर्दिवाकरैः ॥

सावित्रीगायत्र्यौ तु ब्रह्मणः पार्श्वभागे स्थापनीये ।

**तदाह नारदः ।**

सावित्री दक्षिणे पार्श्वे गायत्री नाम वामतः ।
विलोकयन्त्यौ ब्रह्माणं साक्षसूत्रकमण्डलुम् ॥

ऋषयः सप्त गौतमाद्याः ।

**तदुक्तमादित्यपुराणे ।**

गौतमश्च भरद्वाजो विश्वामित्रश्च काश्यपः ।
जमदग्निर्वशिष्ठोऽत्रिः सप्त वैवस्वतेऽन्तरे ॥

**सप्तर्षिलक्षणमाह यमः ।**

सप्तर्षयस्तु जटिलाः कमण्डल्वक्षसूत्रिणः ।
ध्याननिष्ठा वशिष्ठस्तु कार्यो भार्यासमन्वितः ॥

'मुनयो' वानप्रस्था नारदाद्यैरिति तेषां विशेषणम् ।

**तानाह मनुः ।**

अहं प्रजाः सिसृक्षुस्तु तपस्तप्त्वा सुदुस्तरम् ।

---

* गोमेदकैरिति पाठान्तरम् ।

पतीन् प्रजानामसृजं महर्षीनादितो दश ॥
मरीचिमत्र्यङ्गिरसं पुलस्त्यं पुलहं क्रतुम् ।
प्रचेतसं वशिष्ठं च भृगुं नारदमेव च ॥

**तल्लक्षणमाह विश्वकर्मा ।**

जटिलाः श्मश्रुलाः शान्ता दशाधमनिसन्तताः ।
कुसुम्भाक्षधराः कार्या मुनयो द्विभुजाः सदा ॥
तेषु सव्यभुजामूलश्लिष्टधीरस्तु नारदः ।
कर्पूरगौरदेहश्च साक्षसूत्रकमण्डलुः ॥

इन्द्रादिरूपाण्यपि प्रागभिहितानि ।

**वाराहरूपं विष्णुधर्मोत्तरे ।**

वाराहरूपः कार्यस्तु शेषोपरिगतः प्रभुः ।
शेषश्चतुर्भुजः कार्यश्चारुरत्नफणान्वितः ॥
कर्त्तव्यौ सीरमुशलौ करयोस्तस्य यादव ।
सर्परूपश्च कर्त्तव्यस्तथैव रचिताञ्जलिः ॥
आलीढस्थानसंस्थानस्तत्पृष्ठे भगवान् भवेत् ।
वामारत्निगता तस्य योषिद्रूपा वसुन्धरा ॥
नमस्कारपरा तस्य कर्त्तव्या द्विभुजा शुभा ।
यस्मिन् भुजे धरा देवी तत्र शङ्खः करे भवेत् ॥
अन्ये तस्य कराः कार्याः पद्मचक्रगदाधराः ।
पद्मासनस्थां कुर्वीत श्रियं त्रैलोक्यमातरम् ॥
गौरवर्णां सुरूपां च सर्वालङ्कारभूषिताम् ।
रौक्मपद्मकरव्यग्रां वरदां दक्षिणेन तु ॥

रुद्ररूपं प्रागभिहितम् । ग्रहलक्षणानि तद्वर्णाश्च नवग्रहदाने वक्ष्यन्ते । 'सर्ववर्णा-

नि' ग्रहसमानवर्णानि रत्नानि भूषणार्थं दापयेदित्यर्थः । सर्वधातुभिर्ब्रह्माण्डं कर्त्तव्यमि-त्युक्तं तत्र सुवर्णस्य पीठनिर्माणादिविनियोगमभिधायेदानीं धात्वन्तरैः कर्त्तव्यम् ।

तदुच्यते ।

पीठात् सप्तगुणं रौप्यं रौप्यात् ताम्रं तथाविधम् ।
ताम्रात् सप्तगुणं कार्यं कांस्यमत्र नराधिप ॥
त्रपुणः परतः सीसं तावल्लोहं च कारयेत् ।
सप्तद्वीपाः समुद्राश्च सप्तैव कुलपर्वताः ॥
अनया संख्यया ज्ञात्वा निपुणैः शिल्पिभिः कृताः ।

'तथाविधं' सप्तगुणमित्यर्थः । 'सप्तद्वीपा इत्यादि' एतेषामेकैकधातुनैकैकं द्वीपं समुद्रं कुलाचलं च रचयेदित्यर्थः ।

यादांसि चेह भूतानि राजतान्येव कारयेत् ।
अरण्यानि च सत्त्वानि सौवर्णानि च कारयेत् ॥
वृक्षान् वनस्पतींश्चात्र तृणवल्लीः सवीरुधः ।

'यादांसि' जलसम्भवानि । पुष्पफलवन्तो 'वृक्षाः' अपुष्पाः फलिनो 'वनस्पतयः' । वीरुधो गुच्छगुल्मादयः ।

सर्वं प्रकल्प्य विधिवत् तीर्थे देयं विचक्षणैः ।
कुरुक्षेत्रे गयायां च प्रयागेऽमरकण्टके ॥
द्वारवत्यां प्रभासे च गङ्गाद्वारे च पुष्करे ।
तीर्थेष्वेतेषु वै देयं ग्रहणे सोमसूर्ययोः ॥
दिनच्छिद्रेषु सर्वेषु अयने दक्षिणोत्तरे ।
व्यतीपाते बहुगुणं विषुवे च विशेषतः ॥
दातव्यमेतद्राजेन्द्र विचारं नैव कारयेत् ।
बालाग्निहोत्रिणं विप्रं सुरूपं च गुणान्वितम् ॥
सपत्नीकं च संपूज्य भूषयित्वा विभूषणैः ।

पुरोहितं मुख्यतमं कृत्वान्यांश्च तथर्त्विजः ॥
चतुर्विंशद्गुणोपेतान् सपत्नीकान् निमन्त्रितान् ।
अहताम्बरसुच्छन्नान् स्रग्विणः सुविभूषितान् ॥
अङ्गुलीयकरत्नानि कर्णवेष्टांश्च दापयेत् ।
एवं विधांश्च संपूज्य तेषामग्रे स्वयं स्थितः ॥
अष्टाङ्गप्रणिपातेन प्रणम्य च पुनः पुनः ।
पुरोहिताय पुरतः कृत्वा वै करसंपुटम् ॥
यूयं वै ब्राह्मणा धात्रा मैत्रत्वेनानुगृह्यते ।
सौमुख्येनेह भवतां भवेत् पूतो नरः स्वयम् ॥
भवतां प्रीतियोगेन स्वयं प्रीतः पितामहः ।
ब्रह्माण्डेन तु दत्तेन तेषां प्रति जनार्दनः ॥
पिनाकपाणिर्भगवान् शक्रश्च त्रिदशेश्वरः ।
एते वै तोषमायान्ति अनुध्याता द्विजोत्तमैः ॥
एवं* स्तुत्वा ततो राजा ब्राह्मणान् वेदपारगान् ।
ब्रह्माण्डं गुरवे प्रादात् सविधानं पुनः पुनः ॥
सर्वकामैस्ततस्तृप्तो ययौ स्वर्गं नराधिपः ।
तेनापि गुरुणा तच्च विभक्तं ब्राह्मणैः सह ॥
दत्तस्तैरपि चान्येभ्यो ब्रह्माण्डांशो नराधिप ।
ब्रह्माण्डं भूमिदानं च ग्राह्यं नैकेन तद्भवेत् ॥
गृह्णन् दोषमवाप्नोति ब्रह्महत्यां न संशयः ।
सर्वेषां चैव प्रत्यक्षं दातव्यं तं नराधिप ॥
दीयमानं च पश्यन्ति तेऽपि पूता भवन्ति हि ।

---

* श्रुत्वेति क्वचित् पाठः ।

दर्शनादेव ते पूता भवेयुर्नात्र संशयः ॥
भीमद्वादशी वाऽप्रोक्ता स्वर्णनाभिमृगाजिनम् ।
एतानि गत्वा पश्येत् तु दृष्टैरेतैः क्रियाफलम् ॥
अयत्नादेव लभ्येत कर्त्तुश्चैव सलोकताम् ।

इति पद्मपुराणोक्तो ब्रह्माण्डदानविधिः ।

## अथ कल्पपादपसंज्ञं चतुर्थं महादानमारभ्यते ।

**मत्स्य उवाच ।**

कल्पपादपदानाख्यमतः परमनुत्तमम् ।
महादानं प्रवक्ष्यामि सर्वपातकनाशनम् ॥
पुण्यं दिनमथासाद्य तुलापुरुषदानवत् ।
पुण्याहवाचनं कुर्याल्लोकेशावाहनं तथा ॥
ऋत्विग्मण्डपसम्भारभूषणाच्छादनादिकम् ।

आदिशब्देन कालदेशवृद्धिश्राद्धशिवादिपूजागुर्वृत्विक्चतुष्टयवरणमधुपर्कदान-होमवेदिकोपरिचक्रलेखनपञ्चवर्णवितानपताकातोरणादि मत्स्यपुराणोक्ततुलापुरुषदा-नवद्वेदितव्यम् ।

काञ्चनान् कारयेद्वृक्षान् नानाफलसमन्वितान् ।
नानाविहारवस्त्राणि भूषणानि च कारयेत् ॥

'नानाफलानि' स्त्रीपुरुषगोगजवाजिमणिवज्रकनकरजतभक्ष्यफलादीनि ।

शक्तितस्त्रिपलादूर्ध्वमासहस्रात् प्रकल्पयेत् ।
अर्धात् कृतसुवर्णस्य कारयेत् कल्पपादपम् ॥
गुडप्रस्थोपरिष्टाच्च सितवस्त्रयुगावृतम् ।
ब्रह्मविष्णुशिवोपेतं पञ्चशाखं सभास्करम् ॥
कामदेवमधस्ताच्च सकलत्रं प्रकल्पयेत् ।

'अर्धात् क्लृप्तसुवर्णस्येति' यथाशक्तिदानक्लृप्तसुवर्णस्यार्धेन ब्रह्मादिप्रतिमास

हितं कल्पपादपं कुर्यात्। द्वितीयमप्यर्धं चतुर्धा विभज्य एकैकांशेन वक्ष्यमाणस्वस्वदेवतासहितान् सन्तानादीन् विदध्यात् । गुडप्रस्थोऽत्र द्वात्रिंशत्पलपरिमितः ।

तथा चोक्तम् ।

द्वात्रिंशत्पलकः प्रस्थः पुराणे परिकीर्त्तितः—इति ।

ब्रह्मादिलक्षणमुक्तं ब्रह्माण्डदाने ।

कामदेवरूपं तु विष्णुधर्मोत्तरे ।

कामदेवस्तु कर्त्तव्यो रूपेणाप्रतिमो भुवि ।
अष्टबाहुः प्रकर्त्तव्यः शङ्खपद्मविभूषणः ॥
चापबाणकरश्चैव मदादञ्चितलोचनः ।
रतिः प्रीतिस्तथा शक्तिर्भार्याश्चैतास्तथोज्ज्वला ॥
चतस्रस्तस्य कर्त्तव्याः पत्न्यो रूपमनोहराः ।
चत्वारश्च करास्तस्य कार्या भार्यास्तनोपगाः ॥
केतुश्च मकरः कार्यः पञ्चबाणमुखो महान्—इति ।

'अधस्तादिति' ब्रह्मादिभिरपि सम्बध्यते । अथ प्रकृतौ परिमाणाभावात् पुरुषेच्छया प्रतिमादिपरिमाणनियमः ।

सन्तानं पूर्ववत् तद्वत् तुरीयांशेन कल्पयेत् ।

'तुरीयांशेन' द्वितीयार्धचतुर्थांशेनेत्यर्थः। 'तद्वत्' कल्पवृक्षवत् पञ्चशाखं गुडप्रस्थोपरिगतं ब्रह्मादिप्रतिमान्वितं कुर्यादित्यर्थः। केचित् तु कामदेवमधस्तात् प्रकल्पयेदिति सन्तानवृक्षे योजयन्ति तन्मते तत्प्रतिमैव कर्त्तव्या ।

मन्दारं दक्षिणे पार्श्वे श्रिया सार्धं घृतोपरि ।
पश्चिमे पारिभद्रं तु सावित्र्या सह जीरके ॥
सुरभिसंयुतं तद्वद्विलेप्य हरिचन्दनम् ।
तुरीयांशेन कुर्वीत सौम्येन फलसंयुतम् ॥

श्रीलक्षणमुक्तं ब्रह्माण्डे ।

## सावित्रीलक्षणमाह नारदः ।

पद्मासना च सावित्री साक्षसूत्रकमण्डलुः ।

## सुरभिलक्षणं ब्रह्माण्डपुराणे

सवत्सा सुरभी धेनुरागता प्रस्नुतस्तनी—इति ।

'सौम्येन' उत्तरेण । घृतादीनामपि परिमाणापेक्षायां तद्वदिति वचनात् सन्निधानाच्च प्रस्थपरिमाणत्वमवधेयम् ।

कौशेयवस्त्रसंयुक्तानिक्षुमाल्यफलान्वितान् ।
तथाऽष्टौ पूर्णकलशान् पादुकासनभाजनम् ॥
दीपकोपानहच्छत्रचामरासनसंयुतम् ।
फलमाल्ययुतं तद्वदुपरिष्टाद्वितानकम् ॥
तथाऽष्टादशधान्यानि समन्तात् परिकल्पयेत् ।

'अशनभाजनं' भोज्यान्वितभाजनं वितानं पञ्चवर्णम् ।

अथ पूर्ववत् पूर्वेद्युरधिवासनं विधाय श्वोभूते ब्राह्मणवाचनादि पूर्णाहुतिपर्यन्तं कर्मशेषं समापयेत् ।

होमाधिवासनान्ते च स्नापितो वेदपुङ्गवैः ।
त्रिः प्रदक्षिणमावृत्य मन्त्रमेतमुदीरयेत् ॥
नमस्ते कल्पवृक्षाय चिन्तितार्थप्रदायिने ।
विश्वम्भराय देवाय नमस्ते विश्वमूर्त्तये ॥
यस्मात् त्वमेव विश्वात्मा ब्रह्मा स्थाणुर्दिवाकरः ।
मूर्त्तामूर्त्तपरं वीजमतः पाहि सनातन ॥
त्वमेवामृतसर्वस्वमनन्तः पुरुषोऽव्ययः ।
सन्तानाद्यैरुपेतः सन् पाहि संसारसागरात् ॥

अमृता देवास्तेषां सर्वस्वम् 'अमृतसर्वस्वम्' ।

एवमामन्त्र्य तं दद्याद्गुरवे कल्पपादपम् ।

चतुर्भ्यश्चापि ऋत्विग्भ्यः सन्तानादीन् प्रकल्पयेत् ॥

दानवाक्यमत्र तुलापुरुषोक्तमूहनीयम्। 'चतुर्भ्यः प्रकल्पयेदिति' एकैकस्मै दद्यादित्यर्थः। चतुर्भ्य इति वचनादत्र चतुर्णामेव ऋत्विजां वरणमिति गम्यते। ऋत्विगष्टपक्षे तु ऋत्विग्भ्य इति ऋत्विग्युग्मेभ्य इत्यर्थः। एतस्मिँश्च पक्षे जापकादिभ्योऽन्यैव दक्षिणा दातव्या। वेदचतुष्टयापेक्षायां चतुःसंख्यत्वमिदमृत्विजामिति केचित्।

इहापि।

प्राप्य तेषामनुज्ञां च तथान्येभ्योऽपि दापयेत्।

इति बोद्धव्यम्। दक्षिणानिर्णयश्च पूर्ववत्।

स्वल्पेष्वेकाग्निवत् कुर्याद्गुरुवे वाऽभिपूजनम्।
न वित्तशाठ्यं कुर्वीत न च विस्मयवान् भवेत् ॥

स्वल्पत्वविवरणमुक्तं ब्रह्माण्डे।

ततः पुण्याहवाचने कृते वेदिसमीपं गत्वा कृतदेवपूजो यजमानो गुरुः पूर्ववदेव देवताविसर्जनं कुर्यात्।

अनेन विधिना यस्तु महादानं निवेदयेत्।
सर्वपापविनिर्मुक्तः सोऽश्वमेधफलं लभेत् ॥
अप्सरोभिः परिवृतः सिद्धचारणपन्नगैः।
भूतान् भव्याँश्च मनुजाँस्तारयेद्रोमसंमितान् ॥
स्तूयमानो दिवः पृष्ठे पितृपुत्रप्रपौत्रकान्।
विमानेनार्कवर्णेन विष्णुलोकं स गच्छति ॥
दिवि कल्पशतं तिष्ठेद्राजराजो भवेत् ततः।
नारायणफलोपेतो नारायणपरायणः ॥
नारायणकथासक्तो नारायणपुरं व्रजेत्।
यो वा पठेत् सकलकल्पतरुप्रदानं
यो वा शृणोति पुरुषोऽल्पधनः स्मरेद्वा।

सोऽपीन्द्रलोकमधिगम्य सहाप्सरोभि-
र्मन्वन्तरं वसति पापविमुक्तदेहः ॥

इति मत्स्यपुराणोक्तकल्पतरुदानविधिः ।

## लिङ्गपुराणे । सनत्कुमार उवाच ।

अथान्यत् संप्रवक्ष्यामि कल्पपादपमुत्तमम् ।
शतनिष्केण कर्त्तव्यं सर्वशाखासमन्वितम् ॥

'सर्वशाखाः' सर्वदिगन्तशाखाः ।

शाखायां विधिना कृत्वा मुक्तादाम प्रलम्बितम् ।
दिव्यैर्मरकतैश्चैव चाङ्कुराणि प्रकल्पयेत् ॥

'दिव्यैः' उत्कृष्टैरित्यर्थः ।

प्रवालं कारयेद्धीमान् प्रवालेन द्रुमस्य च ।

'प्रवालेन प्रवालं कारयेदिति' द्रुमैर्बालपल्लवान् कारयेदित्यर्थः ।

फलानि पद्मरागैश्च पारिजातस्य शोभनम् ।
मूलदण्डं च नीलेन वज्रेण स्कन्धमुत्तमम् ॥
वैदूर्येण द्रुमाग्रं च पुष्परागेण मस्तकम् ।

स्कन्धादूर्ध्वभागो मस्तकं तदूर्ध्वं द्रुमाग्रम् ।

गोमेदकेन वै स्कन्धं सूर्यकान्तेन सुव्रतः ।
चन्द्रकान्तेन वा वेदिं द्रुमस्य स्फटिकेन वा ॥
वितस्तिमात्र आयामो वृक्षस्य परिकीर्त्तितः ।
शाखाष्टकसमानं च विस्तारं चोर्ध्वतस्तथा ॥

शाखाव्यतिरिक्तस्य वृक्षस्य वितस्तिमात्र उच्छ्रायः कार्यः । 'उर्ध्वतस्तथेति' स्कन्धादुर्ध्वमुखी नवमी या मध्यमशाखा तस्या अपि वितस्तिमात्र उच्छ्रायः । 'शाखाष्टकसमानं विस्तारमिति' अष्टदिग्मुखीनामष्टशाखानां विस्तारं तिर्यग्व्याप्तिं वितस्तिमात्रमेव कुर्यादित्यर्थः ।

तन्मूले स्थापयेल्लिङ्गं लोकपालसमावृतम् ।
पूर्वोक्तवेदिमध्ये तु मण्डले स्थाप्य पादपम् ॥
पूजयेद्देवमीशानं लोकपालाँश्च यत्नतः ।
पूर्ववज्जपहोमाद्यं तुलाभारवदाचरेत् ॥
निवेदयेद्द्रुमं शम्भोर्ब्राह्मणायाऽथ वा नृप ।
ब्राह्मणेभ्योऽथ वा राजा सार्वभौमो भविष्यति ॥

'तुलाभारवदाचरेदिति' अत्र लिङ्गपुराणोक्ततुलापुरुषदानविहितं विधिमाचरेदित्यर्थः ।

## कालोत्तरे ।

पलानां तु सहस्रेण कल्पयेत् कल्पपादपम् ।
समूलदण्डपत्रं च फलपुष्पसमन्वितम् ॥
पञ्चस्कन्धं तु संकल्प्य पञ्चानां स्थापयेत् सुधीः ।
सद्यो जातेन मन्त्रेण देयं ग्राह्यं शिवाग्रतः ॥
दिव्यैर्विमानैः*र्देहान्ते शिवलोके महीयते ।
पितरस्तस्य मोदन्ते सत्यलोके महीपते† ॥

इति शैवकल्पतरुदानविधिः ।

## अथ गोसहस्राख्यं पञ्चमं महादानमुच्यते ।

## मत्स्य उवाच ।

अथातः संप्रवक्ष्यामि महादानमनुत्तमम् ।
गोसहस्रप्रदानाख्यं सर्वपापहरं परम् ॥
पुण्यं तिथिमथासाद्य युगमन्वन्तरादिकम् ।
पयोव्रतस्त्रिरात्रं स्यादेकरात्रमथापि वा ॥

---

* यानैश्चेति पुस्तकान्तरे पाठः ।

† यथासुखमिति क्वचित् पाठः ।

लोकेशावाहनं कुर्यात् तुलापुरुषदानवत् ।
पुण्याहवाचनं कुर्याद्धोमः कार्यस्तथैव च ॥
ऋत्विग्मण्डपसम्भारभूषणाच्छादनादिकम् ।
वृषं लक्षणसंयुक्तं वेदिमध्येऽधिवासयेत् ॥
गोसहस्राद्विनिष्क्रम्य गवां दशकमेव च ।

'पयोव्रतस्त्रिरात्रमिति' दानदिनात् पूर्वं त्रिरात्रं पयोव्रतः स्यादित्यर्थः । अत्रा-दिशब्देन देशकालवृद्धिश्राद्धशिवादिपूजागुर्वृत्विग्वरणमधुपर्कदानकुण्डवेदिकावितान-चक्रलेखनपताकादीनि मत्स्यपुराणोक्ततुलापुरुषदानविहितानि गृह्यन्ते । 'वृषं लक्ष-णसंयुक्तमिति' वृषलक्षणानि-

उन्नतस्कन्धककुदमुज्ज्वलायतकम्बलम् ।

इत्यादीनि वृषोत्सर्गप्रकरणे मत्स्यपुराणोक्तान्येव वेदितव्यानि । 'गोसहस्राद्वि-निष्क्रम्येति' दशोत्तरगोसहस्रादिति वेदितव्यम् । अग्रे दशाधिकगोसहस्रविनियोगदर्श-नात् । यद्यपि गवां दशकमित्यत्र गोमात्रप्रतीतिस्तथाप्युत्तरत्र-

ऋत्विग्भ्यो धेनुमेकैकां दशकाद्विनिवेदयेत् ।

इति धेनुसंशब्दनात् ।

## पुराणान्तरे ।

गोसहस्राद्विनिष्क्रम्य सवत्सं दशकं गवाम् ।

इति श्रवणाच्च धेनुदशकमेवाधिवासनीयम् । इतरासु पुनर्नावश्यं धेनुरूपत्वादरः ।

गोसहस्रं बहिः कुर्याद्वस्त्रमाल्यविभूषितम् ।
सुवर्णशृङ्गाभरणं रौप्यपादसमन्वितम् ॥
अतः प्रवेश्य दशकं वस्त्रमाल्यैस्तु पूजयेत् ।
सुवर्णघण्टिकायुक्तं ताम्रदोहनिकान्वितम् ॥
सुवर्णतिलकोपेतं हेमपट्टैरलङ्कृतम् ।
कौशेयवस्त्रसंवीतं माल्यगन्धसमन्वितम् ॥

हेमरत्नयुतैः शृङ्गैश्चामरैश्चापि शोभितम् ।
पादुकोपानहच्छत्रभाजनासन* संयुतम् ॥

दशसौवर्णिके शृङ्गे खुराः पञ्चपलाः । पञ्चाशत्पलदोहनकः । अन्यत्र तथाभिधानात् । घण्टिकादिसुवर्णशब्दोऽत्र षोडशमाषपरिमितहिरण्यवचनः सकृदुच्चरितसुवर्णशब्दावगतपरिमाणपरित्यागानुपपत्तेः । पादुके काष्ठमय्यौ चर्मकृते उपानहाविति भेदः ।

गवां दशकमध्ये स्यात् काञ्चनो नन्दिकेश्वरः ।
कौशेयवस्त्रसंवीतो नानाभरणभूषितः ॥
लवणद्रोणशिखरे माल्येक्षुफलसंयुतः ।
कुर्यात् पलशतादूर्ध्वं सर्वमेतदशेषतः ॥
भक्तितः पलसाहस्रत्रितयं यावदेव तु ।
गोशते वै दशांशेन सर्वमेतत् प्रकल्पयेत् ॥

'लवणद्रोणशिखरे' लवणद्रोणोपरीत्यर्थः ।

## नन्दिकेश्वरलक्षणं ललितविजये ।

ऊर्ध्वस्त्रिनेत्रो द्विभुजः सौम्यास्यो नन्दिकेश्वरः ।
वामे तु शूलभृद्दक्षे चाक्षमालासमन्वितः–इति ॥

'ऊर्ध्व इति' अशनायानुपविष्ट इत्यर्थः । पलशतादूर्ध्वं पलसहस्रत्रितयं यावदिति । साभरणनन्दिकेश्वरविषयमेतदानन्तर्यात् । 'गोशते वै दशांशेनेति' गोशते देये गामेकामेकं च वृषभं वेदिमध्येऽधिवासयेत् । पलदशकादूर्ध्वं पलशतत्रयं यावदिति साभरणनन्दिकेश्वररचनादिकं कुर्यादित्यर्थः ।

पुण्यं कालमथासाद्य गीतमङ्गलनिःस्वनैः ।
सर्वौषध्युदकस्नानस्नापितो वेदपुङ्गवैः ॥
इममुच्चारयेन्मन्त्रं गृहीतकुसुमाञ्जलिः ।

---

* चामरासनेति क्वचित् पाठः ।

अत्रापि पूर्ववत् पूर्वेद्युरधिवासनं विधाय द्वितीयदिवसे ब्राह्मणवाचनानन्तरमग्निकुण्डेषु ऋत्विगुपवेशनादिपूर्णाहुतिपर्यन्तं कर्मशेषं गुरुः समापयेत् । ततः पुण्यकालमात्मानुकूललग्नमुहूर्त्तादिलक्षणमासाद्य कुण्डसमीपस्थितकलशोदकेन ब्राह्मणैः स्नापितः शुक्लमाल्याम्बरधरो यजमानो वक्ष्यमाणमन्त्रानुदीरयेत् ।

नमो वो विश्वमूर्त्तिभ्यो विश्वमातृभ्य एव च ।
लोकाधिवासिनीभ्यश्च रोहिणीभ्यो नमो नमः ॥
गवामङ्गेषु तिष्ठन्ति भुवनान्येकविंशतिः ।
ब्रह्मादयस्तथा देवा रोहिण्यः पान्तु मातरः ॥
गावो मे अग्रतः सन्तु गावो मे सन्तु पृष्ठतः ।
गावः शिरसि मे नित्यं गवां मध्ये वसाम्यहम् ॥
यस्मात् त्वं वृषरूपेण धर्म एव सनातन ।
अष्टमूर्त्तिरधिष्ठानमतः पाहि सनातनः ॥
इत्यामन्त्र्य तु यो दद्याद्गुरवे नन्दिकेश्वरम् ।
सर्वोपकरणोपेतं गोयुगं च विचक्षणः ॥
ऋत्विग्भ्यो धेनुमेकैकां दशकाद्विनिवेदयेत् ।
गवां शतमथैकैकं तदर्धं चाथ विंशतिः ॥
·········दशपञ्चाशद्वाधिकस्तदनुज्ञया ।

दानवाक्यमत्र तुलापुरुषवद्बोद्धव्यम् । एते च शतप्रभृति पञ्चपर्यन्ता विकल्पा ऋत्विग्विषयास्तदानन्तर्यात् ततश्चायमर्थः सिद्धो भवति । गोदशमध्याच्चन्दिकेश्वरयुतं गोयुगं गुरवे प्रतिपाद्य शेषाणामष्टानां गवामेकैकामेकैकस्मै ऋत्विजे दद्यात् । तथा गोसहस्रमध्यात् । शतद्वयं गुरवे प्रदाय एकैकं शतमृत्विग्भ्यो दद्यात् । अथवा शतं गुरवे पञ्चाशतं ऋत्विग्भ्यः । अथ वा चत्वारिंशतं गुरवे विंशतिं विंशतिमृत्विग्भ्यः । विंशतिं वा गुरवे दश दश ऋत्विग्भ्यः । दश वा गुरवे पञ्च पञ्च ऋत्विग्भ्यो दद्यात् । शेषा गास्तदनुज्ञयाऽन्येभ्योऽपि दद्यात् । दक्षिणां चात्र पूर्ववदेव दद्यात् । अनुक्तदक्ष-

णासु सुवर्णं दक्षिणेति वचनाद्यथाशक्ति सुवर्णं वा ततः पूर्ववदेव पुण्याहवाचनदेवता-पूजनविसर्जनादि कुर्यात् ।

नैका बहुभ्यो दातव्या यतो दोषकरी भवेत् ।
बह्व्यश्चैकस्य दातव्या श्रीमदारोग्यवृद्धये ॥
पयोव्रतः पुनस्तिष्ठेदेकाहं गोसहस्रदः ।

इदं च पयोव्रतानुष्ठानं शक्त्यपेक्ष्यम् । अशक्तौ नक्तमिष्यत इति वचनात् ।

श्रावयेत् शृणुयाद्वापि महादानानुकीर्त्तनम् ।
तद्दिनं ब्रह्मचारी स्याद्यदीच्छेद्विपुलां श्रियम् ॥

## आथर्वणगोपथब्राह्मणे ।

अथातो गोसहस्रविधिर्गोष्ठ उदक्कान्ते शुचौ देशे प्राञ्चमिध्ममुपसमाधायान्वालभ्याऽथ जुहुयात् । आगावसूक्तेनाद्यं जुहुयात् । महाव्रीहीणामैन्द्रं चरुं सौम्यं च सहस्रं तस्याः पयसि श्रपयित्वा गाव इति एवमुभय इत्येतेन जुहुयात् । पश्चादग्नेस्तीर्थोदकपूर्णकलशमवस्थाप्याहिंसंवोगोष्ठेनेति दशगाः स्नापयेत् । त्वरमाणोऽन्याः समभ्युक्ष्य सहस्रं तस्याः स्नानोदकेनेममिन्द्रं वर्धय क्षत्रियं म इति राजानमभिषिच्येमाआप इति षड्भिर्यथोक्तमञ्जनाभ्यञ्जनानुलेपनं कृत्वा सहस्रतमीं प्रथमामलङ्कृत्य गावो मामुपतिष्ठत प्रजावती सूयवासादिति च सर्वासयेत् प्रियमशनं दत्वा द्वितृणमघ्न्य इति सहस्रतमीमालभ्य जपेत् मया गावोपतिना सबद्धमिति मन्त्रेणानेनार्घं दत्त्वा सहस्रतमीं पुनरुपसंगृह्य भूमिष्ट्वा प्रतिगृह्णात्विति जपेत् । सहस्रं तस्याः पृष्ठतो व्रजन् सर्वाः प्रदक्षिणीकृत्य नमस्कृत्य स्वस्ति वाच्य ब्राह्मणेभ्यो निवेद्य दशगा दक्षिणा कर्त्रे सहस्रतमां वस्त्रयुग्मं च तदपि ।

### श्लोकाः ।

सप्तजन्मानुगं पापं पुरुषैः सप्तभिः कृतम् ।
तत्क्षणात् विधिनानेन नाशयेद्गोप्रदो नरः ॥

सर्वेषामिह दानानां फलं यत् परिकीर्त्तितम् ।
तदवाप्नोति विप्रेभ्यो गोसहस्रप्रदो नरः ॥
अश्वमेधं वृषोत्सर्गं गोसहस्रं त्रयं तु यः ।
दद्यान्मादाय इत्याहुः परित*स्तर्पयन्ति हि ? ॥
अस्मादनेन विधिना गोसहस्रं तु यो नरः ।
प्रदद्यात् स विशुद्धात्मा याति तत् परमं पदम् ॥

मत्स्यपुराणे ।

अनेन विधिना यस्तु गोसहस्रप्रदो भवेत् ।
सर्वपापविनिर्मुक्तः सिद्धचारणसेवितः ॥
विमानेनार्कवर्णेन किङ्किणीजालमालिना ।
सर्वेषां लोकपालानां लोके संपूज्यते नरैः ॥
प्रतिमन्वन्तरे तिष्ठेद्राजराजो भवेत् पुनः ।
अश्वमेधशतं कुर्याच्छिवध्यानपरायणः ॥
वैष्णवं लोकमास्थाय† ततो मुच्येत बन्धनात् ।
पितरश्चाभिनन्दन्ति गोसहस्रप्रदं शुभम् ॥
अपि स्यात् स कुलेऽस्माकं पुत्रो दौहित्र एव च ।
गोसहस्रप्रदो भूत्वा नरकादुद्धरिष्यति ॥
स तत्कर्मकरो वा स्यादपि द्रष्टा तथैव च ।
संसारसागरादस्माद्योऽस्मान् सन्तारयिष्यति ॥
इति पठति य एतद्गोसहस्रप्रदानं
सुरभुवनमुपेयात् संस्मरेद्वापि पश्येत् ।
अनुभवति सुखं वा वाच्यमानो निकामं

* पितर इति क्वचित् पाठः ।
† योगमास्थायेति पुस्तकान्तरे ।

प्रहतकलुषदेहः सोऽपि यातीन्द्रलोकम् ॥

इति गोसहस्रदानविधिः ।

सनत्कुमार उवाच ।

गोसहस्रप्रदानं च वदामि शृणु सिद्धये ।
गवां सहस्रमादाय सवत्सं सगुणं शुभम् ॥
ताश्चाभ्यर्च्य यथाशास्त्रमष्टौ सम्यक् प्रयत्नतः ।
तासां शृङ्गाणि हेम्नाऽथ प्रतिशृङ्गेण बन्धयेत् ॥
खुरांश्च राजतेनैव बन्धयेत् कण्ठदेशतः ।
प्रतिनिष्केण कर्त्तव्यं कथं वक्रेण शोभनम् ॥

'गवां सहस्रमादायेति' अष्टाधिकं गोसहस्रमिति ज्ञेयम् ।

ताश्चान्याश्च महाभाग अष्टौ संगृह्य यत्नतः ।

इति वातुलोक्तेः ।

बन्धयेत् कण्ठदेशत इत्यत्र वस्त्रमिति शेषः ।

वस्त्रं बध्वा गले गाश्च विप्रेभ्यो दापयेत् क्रमात् ।
निष्कं स्वर्णमयं कृत्वा पट्टं कण्ठे च बन्धयेत् ॥

इति कामिकोक्तेः ।

विप्रेभ्यो दापयेद्गावो दक्षिणां च पृथक् पृथक् ।
दशनिष्कं तदर्धं वा तदर्धार्धमथापि वा ॥
यथाविभवविस्तारं निष्कमात्रमथापि वा ।
वस्त्रयुग्मं च दातव्यं पृथग्विप्रेषु शोभनम् ॥
गावश्चाराध्य यत्नेन दातव्याः सुमनोरमाः ।
एवं दत्त्वा विधानेन शिवमभ्यर्च्य शङ्करम् ॥
जपेदग्रे यथान्यायं गवां स्तवमनुत्तमम् ।
गावो ममाग्रतो नित्यं गावो मे सन्तु पृष्ठतः ॥

हृदये नः सदा गावो गवां मध्ये वसाम्यहम् ।
एवं स्तुत्वा द्विजाग्रेभ्यो दत्त्वा गास्ताः सदक्षिणाः ॥
तद्रोमसंख्यावर्षाणि स्वर्गलोके महीयते ।

पूर्ववदधिवासनं शिवस्य सहस्रकलशाद्यभिषेचनं कृत्वा गोस्तवमुच्चार्य प्रत्येकं गोदानं कार्यम् । आचार्यादिदक्षिणा च प्राग्वत् ।

इति लिङ्गपुराणोक्तो गोसहस्रदानविधिः ।

अतः परं स्मृतं दानं येन रोहन्ति देहिनः ।
दुर्लभं तत्परं धाम तृप्ताः कामैरशेषतः ॥
सहस्रं तु सवत्सानां धेनूनां यः शिवाय वै ।
स्नानार्थं विधिवद्दद्यात् सोऽपि तत्पदमाप्नुयात् ॥
तद्गोसहस्रक्षीरेण तथा दध्ना च शङ्करम् ।
सर्पिषा च समग्रेण स्नाप्य वाद्यादिमङ्गलैः ॥
दद्यात् सरसिजं रौक्मं लिङ्गं सम्पूज्य यत्नतः ।

'रौक्मं' सौवर्णम् ।

तदन्ते वाऽथ पुष्पैस्तु आपीठान्तं सुशोभनम् ।
वितानहेमघण्टादान् युग्मं चैव निवेदयेत् ॥

आपीठान्तं पुष्पैः पूरयेदिति शेषः ।

दीपदर्पणनैवेद्यं हेमदण्डं च चामरम् ।
अग्निं सन्तर्प्य चाज्येन मन्त्रविच्छ्रोत्रियेण च ॥
हेमवस्त्रयुगेनैव भूषितेन द्विजेन वै ।

'आज्येनेत्यादि' आज्येन द्रव्येण श्रोत्रियेण ऋत्विग्भूतेन सन्तर्पयेदित्यर्थः । 'हेमवस्त्रयुगेनेति' हेम्ना शोभनवस्त्रयुग्मेनेत्यर्थः ।

ततो ब्रह्मरवेणैव शुक्ला गौस्तत्र या शुभा ।
वितानं चोच्छ्रयेत् तस्या गच्छेत् प्रादक्षिणं पुनः ॥

हराय चापरा: सर्वा गास्तास्तदनुचालयेत् ।
मण्डिता हेमवस्त्राद्यैर्महावादित्रनि:स्वनैः ॥
प्रदक्षिणं ततो देवं कृत्वा गावस्तदग्रतः ।
स्थापयित्वा तु ताः सर्वा यजमानः प्रदक्षिणम् ॥
सुरभी या च या मुख्या तस्यास्त्वग्रे च कारयेत् ।
सर्वं तद्गोसहस्रं तु महाब्रह्मरवेण वै ॥
ततस्तु पुच्छमादाय तिलहोमयवाक्षतैः ।
सपुष्पोदकहस्ताभ्यां शङ्कराय निवेदयेत् ॥

'यवाक्षतैः' अक्षतयवैः ।

ततस्त्वेकादशभ्यस्तु ब्राह्मणेभ्यस्तथाऽपराः ।
गावो वस्त्रान्विता दद्यात् तेभ्यो देयं विचिन्त्य च ॥
अव्रतान् सुव्रताँस्तत्र ब्राह्मणाँश्च विशेषतः ।
दीनान् सुदुःखिताँश्चैव भोजयेदनिवारितान् ॥
विधिनाऽनेन ये भक्त्या स्वर्जिता गोसवेन तु ।
उद्दिश्य शङ्करं देवं मुच्यते भवबन्धनात् ॥

स्वर्जिद्गोसवौ दृष्टान्तः ।

अथ वाऽन्यत्प्रकारेण दद्याद्गोशतमुत्तमम्-इति ।

शतशब्दो बहुवाची स चात्र सहस्रपरोऽग्रे सहस्रविनियोगदर्शनात् ।

एकादशाधिकं रुद्रे चिच्छक्तये मिताय च ।
संपूर्णं पूर्ववत् कृत्वा विधिमादौ प्रयत्नतः ॥
होमपूजादिसंयुक्तं दद्यात् तत्रैव शम्भवे ।
दीक्षितानां शतं ह्येकमाहूय शिवमन्दिरे ॥
ततः पूज्यं यथान्यायं दद्यात् तेभ्यो यथा शृणु ।
दशकं दशकं चैव एकैकस्य पृथक् पृथक् ॥

हृदि शम्भुं गवां चैव ध्यात्वा तेषां निवेदयेत् ।
अधिकं दशकं यत्र नीलकण्ठेन्दुशेखरे ॥
दद्यात् पूर्वविधानेन धेनूनां च सवत्सकम् ।

'दीक्षितानां शतमित्यादि' शम्भुप्रीतये शम्भुं ध्यात्वा दीक्षितानां सम्प्रदानभूतानां दद्यादित्यर्थः । 'पूर्वविधानेन' स्नपनप्रकारेण ।

अथ वा श्रोत्रियान् विप्रान् वेदवेदाङ्गपारगान् ।
आहूय द्विगुणं तेभ्यः पञ्च पञ्च ददेत् सुधीः ॥
कृत्वा विधिमिमं जन्तुर्न शोच्यः स्यात् कदाचन ।
गर्भागारज्वरे भूयः परिक्रामति नैव सः ॥

'गर्भागारज्वरे' गर्भवासक्लेशे ।

इति कालिकापुराणोक्तस्त्रिप्रकारगोसहस्रदानविधिः ।

अगस्त्य उवाच ।

दानमन्त्रं प्रवक्ष्यामि गोसहस्राख्यमुत्तमम् ।
यत् कृत्वा नर्मदातीरे मुच्यते भवबन्धनात् ॥
शैवानां वैष्णवानां च सहस्रं भोजयेत् तथा ।
ततः सहस्रं दोग्ध्रीणां शुक्लानां च गवां तथा ॥
गर्भिणीधेनुसंमिश्रं वृषभैर्दशभिर्युतम् ।
अर्चितं गन्धपुष्पाद्यैः हैमवस्त्रैरलङ्कृतम् ॥
प्रदक्षिणमुपक्रम्य मन्त्रेणानेन भक्तितः ।

ॐ नमो भगवते वासुदेवायेति मन्त्रः ।

वेदविद्भिः समाकीर्णे विष्णोरायतने शुभे ।
नर्मदातोयमासाद्य दीपमालां* प्रबन्धयेत् ॥
गावो ममाग्रतो नित्यं गावः पृष्ठत एव च ।

---

* प्रबोधयेदिति पुस्तकान्तरे ।

गावो मे हृदये चापि गवां मध्ये वसाम्यहम् ॥
गवां मन्त्रं समुच्चार्य जपेदासां पुरः स्थितः ।
गन्धतोयाक्षतैर्युक्तं गृहीत्वा ताम्रभाजनम् ॥
गवां पुच्छाम्भसा स्नातः शुक्लवस्त्रसमन्वितः ।
सर्वकल्मषनिर्मुक्तः शुद्धः शुचिमनास्ततः ॥
स्नापयित्वा तु गास्तत्र ता विप्रा नर्मदाजले ।
पञ्चदश्यां पूर्णचन्द्रे राहुसोमसमागमे ॥
तैरेव सार्धं विप्रेन्द्रैरभिपूज्य हरिं स्मरेत् ।
भृत्यपुत्रकलत्राद्यैर्युक्तः स्वजनबान्धवैः ॥
निवेदयेत् तु विप्रेभ्यो मन्त्रेण श्रद्धयाऽन्वितः ।
श्राद्धे दाने च होमे च विवाहे मङ्गले तथा ॥
गोमातरः स्थिता नित्यं विष्णुलोके शिवप्रियाः
शिवायैता मया दत्ता विष्णवे च महात्मने ॥
एवं विप्राय यो दद्यात् यज्ञार्थं समलङ्कृताः
विनिवेद्य च शर्वाय गोसहस्रमलङ्कृतम् ॥
प्राप्नोति परमं स्थानं यद्गत्वा न निवर्त्तते ।
कुलानि त्रिंशदुत्तार्य नरकाद्भृत्यबान्धवान् ॥
स्थापयेद्वैष्णवे लोके शिवस्य च महात्मनः ।
सर्वज्ञः परिपूर्णश्च शुद्धः सर्वगतः प्रभुः ॥
संसारसागरान्मुक्तो हरितुल्यः प्रजायते ।
अनेनैव विधानेन गृहस्था मोक्षमाप्नुयुः ॥
विनाऽपि ज्ञानयोगेन गोसहस्रप्रदानतः ।
तस्मात् त्वमपि राजेन्द्र गोसहस्रप्रदो भव ॥

देववद्दिवि मोदन्ते येन ते पितरः सदा ।

इति स्कन्दपुराणोक्तो गोसहस्रदानविधिः ।

## आदित्यपुराणे ।

अथ प्रयच्छेद्विप्रेषु गोसहस्रं महामुने ।
अर्चयेद्गन्धपुष्पैस्तु पट्टैः सर्वाः समर्चयेत् ॥

'पट्टैः' वस्त्रैः ।

सर्वाः कनकशृङ्गयुताः सर्वा रौप्यखुरार्चिताः ।
हीनाङ्गा न ददेत् गावः कृशा वृद्धातुरास्तथा ॥
एकां गामर्चयेत् तासां शेषाणां च विधिं शृणु ।
तिलानां तु शतं ह्येषां दद्याद्विप्रेषु दक्षिणाम् ॥
पाद्येन विधिना चैव तर्पयित्वा द्विजाँस्तथा ।

'तिलानां शतं' तिलानां द्रोणशतमित्यर्थः । 'पाद्येन' पाद्यार्घादिना ।

शुचिः शुद्धमना भूत्वा योऽर्चयेच्च जनार्दनम् ।
प्रणम्य शिरसा देवं दत्त्वा गावश्च सत्वरम् ॥
तेन ता अर्चिताः सर्वा भविष्यन्ति न संशयः ।
वेदशास्त्रार्थतत्त्वज्ञाः संहिताध्यापका द्विजाः ॥
अग्निहोत्ररता ये च स्वाध्यायनिरताश्च ये ।
एतान् विप्रान् परीक्षेत गोप्रदाने महामुने ॥
ईदृशानां तु यद्दत्तं तच्चानन्तमिहोच्यते ।
अनन्तस्य तदा दानमिति सत्यं महामुने ॥
उपोष्य विधिवच्चैव प्रसन्नमनइन्द्रियैः ।
उपेत्य ब्राह्मणेभ्यश्च दद्याद्गावश्च सत्वरः ॥
स्पर्शयित्वा तु ता गावः सुमनाः सुसमाहितः ।

'स्पर्शयित्वा' दत्त्वा ।

न चैतास्ताडयेद्दण्डैर्न हस्तेन न लेष्टुना ।
यथोक्तं गोसहस्रं तु यः प्रयच्छति वै द्विजः ॥
सर्वक्लेशान् परित्यज्य विष्णुलोके महीयते ।

तथा ।

तिलानां तु शतं यस्तु विना गोभ्यः प्रयच्छति ।
पलमेकं सुवर्णस्य गोसहस्राद्विशिष्यते ॥
यथोक्तं गोसहस्रं तु प्रयच्छेत् तु द्विजातिषु ।
तत्फलं लभते दाता सद्यः पापात् प्रमुच्यते ॥
यस्तु पश्यति पापात्मा सोऽपि पापात् प्रमुच्यते ।
एकविंशतिमुद्धृत्य ये च पूर्वे व्यवस्थिताः ॥
तारयन्ति नराः क्षिप्रं कुलान्येकोत्तरं शतम् ।
अलाभे गोसहस्रस्य सुवर्णं दातुमर्हति ॥
सहस्रार्धं शतं न्यूनं द्विजानां च तिलैः सह ।
तथा च लभते नित्यं संपूर्णं द्विजसत्तम ॥
अर्चितानां सहस्राणां फलं प्राप्नोति मानवः ।
संपूर्णदक्षिणं विप्र गोसहस्रं प्रकीर्त्तितम् ॥
तिलानां तु शतं ह्येकं गवां दानेन तत्समम् ।

सहस्रार्धं सुवर्णस्य षोडशमाषपरिमितस्येति शेषः ।

महाभारते ।

गवां सहस्रदः प्रेत्य नरकं नैव पश्यति ।
सर्वत्र विजयं चापि लभते मनुजाधिप ॥
दशगोसहस्रदो नित्यं शक्रेण सह मोदते ।
अक्षयान् लभते लोकान् नरः शतसहस्रदः ॥

सुवर्णशृङ्गैस्तु विराजितानां गवां सहस्रस्य पुनः प्रदाता ।

प्राप्नोति पुण्यं दिवि शक्रलोकमित्येव माहुर्मुनिवेदसङ्घाः ॥

इति गोसहस्रदानविधिः ।

## अथ हिरण्यकामधेनुसंज्ञं षष्ठं महादानमुच्यते ।

मत्स्य उवाच ।

अथातः सम्प्रवक्ष्यामि कामधेनुविधिं परम् ।
सर्वकामप्रदं नृणां महापातकनाशनम् ॥
लोकेशावाहनं तद्वद्धोमः कार्योऽधिवासनम् ।
तुलापुरुषवत् कुर्यात् कुण्डमण्डपवेदिकाः ॥
स्वल्पेष्वेकाग्निवत् कुर्यात् गुरुरेव समाहितः ।

कुण्डमण्डपवेदिका इत्युपलक्षणम् । इह हि देशकालवृद्धिश्राद्धशिवादिपूजा-ब्राह्मणवाचनगुर्वृत्विग्वरणमधुपर्कदानवेदिकोपरिचक्रलेखनपञ्चवर्णवितानतोरणपताकादि सर्वमुक्तं मत्स्यपुराणोक्ततुलापुरुषदानविहितं वेदितव्यम् । 'स्वल्पेष्वेकाग्निवदिति' एकाग्निवत् करणं व्याख्यातम् ।

काञ्चनस्यातिशुद्धस्य धेनुं वत्सं च कारयेत् ।
उत्तमा पलसहस्रैस्तदर्धेन तु मध्यमा ॥
कनीयसी तदर्धेन कामधेनुः प्रकीर्त्तिता ।
शक्तितस्त्रिपलादूर्ध्वमशक्तोऽपीह कारयेत् ॥

अत्र यद्यपि वत्सपरिमाणमनुक्तं तथाऽपि कामधेनुविधानवत् तप्तकाञ्चनचतुर्थांशेन वत्सः कल्पनीयः । समस्तधेनुपरिमितद्रव्यनिष्कृष्टवत्सनिर्माणव्याप्तिदर्शनादिहापि धेनुदानत्वाविशेषात् तथैव निश्चीयते । तथा च गुडधेन्वादिषु तच्चतुर्थांशेन वत्सः स्यादिति तत्र तत्र वक्ष्यते ।

वेद्यां कृष्णाजिनं तस्य गुडप्रस्थसमन्वितम्
न्यसेदुपरि तां धेनुं महारत्नैरलङ्कृताम् ॥
कुम्भाष्टकसमोपेतां नानाफलसमन्विताम्

कल्पतरुदाने प्रस्थो व्याख्यातः। महारत्नानि पद्मरागप्रभृतीनि। वत्सं दद्ये तु विन्यसेदिति क्वचित् पाठः। 'नानाफलानि' गोगजवाजिस्त्रीपुरुषप्रभृतीनि सौवर्णानि कल्पतरुदानोक्तानि।

तथाऽष्टादशधान्यानि समन्तात् परिकल्पयेत्।
इक्षुदण्डाष्टकं तद्वन्नानाफलसमन्वितम्॥
भाजनं चासनं तद्वत् ताम्रदोहनकं तथा।

अष्टादशधान्यानि परिभाषायां द्रष्टव्यानि। 'नानाफलानि' मातुलिङ्गादीनि।

कौशेयवस्त्रद्वयसंप्रयुक्तां दीपातपत्राभरणाभिरामाम्।
सचामरां कुण्डलिनीं सघण्टां गणत्रिकापादुकरौप्यपादाम्॥
रसैश्च सर्वैः परितोऽभिजुष्टां हरिद्रया पुष्पफलैरनेकैः।
अजाजिकुस्तुम्बुरुशर्कराभिर्वितानकं चोपरि* पञ्चवर्णम्॥
स्नातस्ततो मङ्गलवेदघोषैः प्रदक्षिणीकृत्य सपुष्पहस्तः।
आवाहयेत् तां गुडधेनुमन्त्रैर्द्विजाय दद्यादथ दर्भपाणिः॥

'सघण्टागणत्रिकेत्यादि' घण्टागणत्रिकापादुकाभिः सह वर्त्तत इति सघण्टा गणत्रिकापादुका सा चासौ रौप्यपादा चेति विग्रहः। गणनासाधनत्वाद्गणत्रिका अक्षमाला गणत्रिकेति क्वचित् पाठः। तत्र गणत्रिका कण्ठभूषणं केचित्। केचित् तु गलन्तिकेति पठित्वा जलपूर्णा कर्करीति व्याचक्षते। रसाः परिभाषायामुक्ताः। 'अजाजि, जीरकम्। 'कुस्तुम्बुरुः' धान्यकम्।

एवमुपकल्पितसम्भारः पूर्ववदधिवासनं विधाय तदन्यदिवसे प्रातःकृत्यपुण्याहवाचनोऽग्निकुण्डेषु ऋत्विगुपवेशनादिपूर्णाहुतिपर्यन्तकर्मशेषसमाप्तिं कृत्वा सर्वौषधिजलस्नातः शुक्लमाल्याम्बरो गृहीतकुसुमाञ्जलिर्यजमानस्त्रिः प्रदक्षिणमावृत्य गुडधेनुमन्त्रैस्तामावाहयेत्। गुडधेनुमन्त्राः 'या लक्ष्मीः सर्वभूताना' मित्यादयस्तत्प्रकरणे द्रष्टव्याः। आवाहनानन्तरं वक्ष्यमाणमन्त्रेणामन्त्रयेत्।

---

* चामरपञ्चवर्णमिति पुस्तकान्तरे।

त्वं सर्वदेवगणमन्दिरसङ्गभूता
विश्वेश्वरत्रिपथगोदधिपर्वतानाम् ।
त्वद्दानशस्त्रशकलीकृतपातकौघः
प्राप्तोऽस्मि निर्वृतिमतीव परां नमामि ॥
लोके यथेप्सितफलर्द्धिविधायिनीं त्वा-
मासाद्य को हि भवदुःखमुपैति मर्त्यः ।
संसारदुःखशमनाय यतस्व कामं
त्वां कामधेनुरिति देवगणा वदन्ति ॥
आमन्त्र्य शीलकुलरूपगुणान्विताय
विप्राय यः कनकधेनुमिमां प्रदद्यात् ।
प्राप्नोति धाम सपुरन्दरदेवजुष्टं
कन्यागणैः परिवृतं पदमिन्दुमौलेः ॥

दानवाक्यमत्र तुलापुरुषोक्तमूहनीयम् । विप्रायेत्येकवचनमेकाग्निविधानपक्षेऽनेकाग्निविधानपक्षे तु प्रकृतिभूततुलापुरुषदानवदाचार्यादीनां विभागव्यवस्था तदनन्तरं पुण्याहवाचनवेदिस्थितदेवतापूजनविसर्जनानि कुर्यात् । दक्षिणाविचारश्च पूर्ववत् ।

इति मत्स्यपुराणोक्तो हिरण्यकामधेनुदानविधिः

**व्यास उवाच ।**

राजन्निहैकामपि कामधेनुं दद्यात् समुद्दिश्य तु केशवं त्वाम् ।
विप्राय वै सर्वगुणोपपन्नां कृत्वा व्रतं कृच्छ्रमनोहरैस्तु ॥
सम्यक् प्रदत्तैस्तु गवां सहस्रैः सवत्सवस्त्रैः सहितैश्च हेम्ना ।
काले फलं यल्लभते मनुष्यो न कामधेनोश्च समं द्विजेभ्यः ॥
शतैः सहस्रैश्च तथा हयानां सम्यक् प्रदत्तैश्च महाद्विपानाम्
कन्यारथैर्वा खरवाजियुक्तैः शतैः सहस्रैः सततं द्विजेभ्यः ॥
दत्तैः फलैर्यल्लभते मनुष्यः समं तथा स्यान्न तु कामधेनोः ।

यो जाह्नवीतीरगतो हिमाद्रौ संतप्यतेऽतीव तपः सदा वै ॥
ब्राह्मं पदं गन्तुमना द्विजेन्द्रो नैतत् फलं तच्च हि कामधेनोः ।
चान्द्रायणैः कृच्छ्रमहापराकैः संशुद्ध्यते पापयुतो मनुष्यः ॥
कार्त्तिके कृष्णपक्षे तु नरः प्रयतमानसः ।
एकादश्यामुपोष्याऽथ नरो दिनचतुष्टयम् ॥
घृतेन स्नापयेद्विष्णुं गव्येन पयसाऽपि वा ।
नक्ताशी गोरसैर्हव्यैः पूजयेन्मधुसूदनम् ॥
गन्धपुष्पैः सुनैवेद्यैर्वस्त्राभरणकुण्डलैः ।
शङ्खासिचक्रोद्यतबाहुविष्णोर्गदाब्जहस्तस्य तु शार्ङ्गपाणेः ।
अर्घं प्रयच्छामि जनार्दनस्य श्रिया युतस्यापि धराधरस्य ॥
श्रियः पतिं श्रीधरमेककान्तं* श्रियः सखायं हि श्रियोऽनुकूलम् ।
नमाम्यहं श्रीधरसन्निवासं समर्चितो मे प्रददातु कामान् ॥
एवं पूज्य विधानेन श्रिया युक्तैस्तु नामभिः ।
पृथग्जागरणं कुर्यात् श्रिया सार्धं जगत्पतेः ॥
या देवी भार्गवं भेजे कुलं सर्वत्र पूजिता ।
आयातु सा गृहे नन्दा सुप्रीता वरदा मम ॥
याऽङ्गिरसं सदा देवी सुनन्दा प्रत्युपस्थिता ।
आयातु मे गृहे सा तु सुप्रीता वरदा सती ॥
सुरभी या भरद्वाजं कामधेनुः सुकामदा ।
सदाऽभजद्गृहं साऽत्र ममायातु सुरार्चिता ॥
सुशीला कश्यपं या तु भेजे सर्वत्र कामदा ।
सा मे भवतु सुप्रीता कामधेनुर्गृहे सदा ॥
सुमना या वसिष्ठं तु सम्प्राप्य मुमुदे शुभा ।

---

* श्रीनिवासकान्तमिति पुस्तकान्तरे पाठः ।

सा मे गृहं सदायातु कामदा वरपूजिता* ॥
एवं पूज्यो विधानेन प्रभाते विमले शुभे ।
शुक्लाम्बरधरः स्नातः शुक्लमाल्यानुलेपनः ॥
कृतनित्यक्रियो हृष्टः कुण्डलाङ्गदभूषितः ।
अनुलिप्ते महीपृष्ठे कृष्णाजिनसुसंस्तृते ॥
तिलप्रस्थेन वाऽऽकीर्णे चतुर्वर्णविभूषिते† ।
क्षौमवस्त्रान्विते शुभ्रे मध्वाज्यपात्रसंयुते ॥
शुभवस्त्रैः समावृत्य सर्वरत्नैरलङ्कृताम् ।
सुवर्णशृङ्गीं सखुरां चतुष्कर्षां मनोरमाम् ॥
क्षीराब्धिपयसोपेतां धेनुमन्त्रैस्तु पूजयेत् ।
या धेनुः सर्वदेवानामृषीणां भावितात्मनाम् ॥
क्षीराब्धिनिर्गता या च सा मे भवतु सुस्थिरा ।
घृतक्षीराभिषेकं च कृत्वा विष्णोः प्रयत्नतः ॥
समभ्यर्च्य यथा ज्ञेयं गन्धपुष्पादिभिः क्रमात् ।
गावो ममाग्रतः सन्तु गावः पार्श्वे तु पृष्ठतः ॥
गावो मे हृदये नित्यं गवां मध्ये वसाम्यहम् ।
प्राङ्मुखोदङ्मुखीं वापि सितयज्ञोपवासिनीं ॥
इमां त्वं प्रतिगृह्णीष्व देवदेव जगत्पते ।
सवत्सालङ्कृतां धेनुं गोविन्दः प्रीयतामिति ॥
एवं विप्राय तां दद्यात् कृत्वा चैव प्रदक्षिणम् ।
अनुव्रजेच्च गच्छन्तं पदान्यष्टौ नराधिप ॥
अनेन विधिना यस्तु कामधेनुं प्रयच्छति ।

* कामधेनुः प्रपूजितेति पुस्तकान्तरे ।
† चतुर्वर्णप्रपूजित इति क्वचित् पाठः ।

सर्वकामसमृद्ध्यर्थैः स्वर्गलोके स गच्छति ॥
यद्दत्त्वा सकलां पृथ्वीं राहुग्रस्ते दिवाकरे ।
तत्फलं प्राप्यते राजन् कामधेन्वा न संशयः ॥
चिन्तामणिः कामधेनुस्तथा भद्रघटो नृप ।
त्रीणि समफलान्याहुर्दानानि मुनिसत्तमाः ॥
सप्तावरान् सप्तपरानात्मानं चैव मानवः ।
शतजन्मकृतात् पापान्मोचयत्यवनीपते ॥
पदे पदेऽश्वमेधस्य फलं प्राप्नोति मानवः ।
दानानामेव सर्वेषामुत्तमं परिकीर्त्तितम् ॥
सर्वकामप्रदं धन्यं पापघ्नं सर्वदं शुभम् ।
सर्वेषामेव पापानां जातानां महतामपि ॥
प्रायश्चित्तमिदं शस्तं कथितं ब्रह्मणा नृप ।
ब्रह्मविट्क्षत्रशूद्राणां कर्त्तव्या यत्नतो नृप ॥
सर्वकामफलार्थाय कामधेनुरियं सताम् ।
घृताज्यतिलहोमेन कामधेनुं प्रयत्नतः ॥
संकल्पं प्रतिपाद्येह सर्वपृथ्वीप्रदो भवेत् ।

इति वह्निपुराणोक्तकामधेनुदानविधिः ।

## अथ लिङ्गपुराणे । सनत्कुमार उवाच ।

अथातः संप्रवक्ष्यामि हेमधेनुविधिं क्रमात्* ।
सर्वपापप्रशमनं देशदुर्भिक्षनाशनम् ॥
उपसर्गविनाशं च सर्वव्याधिनिवारणम् ।
निष्काणां तु सहस्रेण सुवर्णेन तु कारयेत् ॥

---

* नृप इति पुस्तकान्तरे ।

तदर्धेनापि वा सम्यक् तदर्धार्धेन वा पुनः ।
शतेन वा प्रकर्त्तव्यं सर्वकार्येषु सुव्रतः ॥

'सर्वकार्येष्विति' अव्यक्तेष्वनुक्तमानेषु सौवर्णसम्प्रदेयेषु सहस्रादिशतावरमानत्वमवधेयमिति । इयं चोक्तिः प्रासङ्गिकी ।

## वातुले मानान्तरमुक्तम् ।

त्रिपलादिसहस्रान्तं हेम्ना धेनुं प्रकल्पयेत्—इति ।
शिवाग्रे कामधेनुं तु पलानां पञ्चभिः शतैः ।
यो ददाति महासेन राहुग्रस्ते दिवाकरे ॥
तेन दत्तं भवेत् सर्वमाब्रह्मभुवनान्तिकम् ।

इति कालोत्तरमतम् ।

गोरूपं सखुरं दिव्यं सर्वलक्षणसंयुतम् ।
खुराग्रे विन्यसेद्वज्रं शृङ्गे वै पद्मरागकम् ॥
भ्रुवोर्मध्येन्यसेद्दिव्यं मौक्तिकं मुनिसत्तम ।
वैदूर्येण स्तनान् कुर्याल्लाङ्गूलं नीलनिर्मितम् ॥
दन्तस्थाने प्रकर्त्तव्यं सर्वरत्नविभूषितम् ।
पशुवत् कारयित्वा तु वत्सं कुर्यात् सुशोभनम् ॥
दशांशकेन कर्त्तव्यं सर्वरत्नविभूषितम् ।

## कामिके तु ।

तुरीयांशेन वत्सकः ।

इत्युक्तम् ।

पूर्वोक्तवेदिकामध्ये मण्डलं च प्रकल्पयेत् ॥
तन्मध्ये सुरभिः स्थाप्या सर्वतः सर्वरत्नका ।
सवत्सां सुरभिं तत्र वस्त्रयुग्मेन वेष्टयेत् ॥
संपूजयेत् तु गायत्र्या सवत्सां सुरभिं पुनः ।

अथैकाग्निविधानेन होमं कुर्याद्यथाविधि ॥
समिधं त्वाज्यभागेन पूर्ववच्छेषमाचरेत् ।
शिवपूजा प्रकर्त्तव्या लिङ्गं स्नाप्यं घृतादिभिः ॥
गामालभ्य च गायत्र्या विप्रेभ्यो दापयेच्च ताम् ।
दक्षिणा च प्रदातव्या त्रिंशन्निष्कं महामते ॥

'गायत्र्या' गोसावित्र्याख्यस्तोत्रमन्त्रेणेत्यर्थः ।

गोसावित्रीति मन्त्रेण मन्त्रयीत विचक्षणः ।

इति वातुलोक्तेः ।

कामिके तु ।

घृताद्यैः पूजयेद्देवं सहस्रकलशादिभिः ।
गामाराध्य तु गाव्यया विप्रेभ्यो दापयेच्च ताम् ॥
आचार्यं पूजयेत् पूर्वं केयूरकटकादिभिः ।
वस्त्रयुग्मं च दत्त्वा तु विज्ञाप्य विधिपूर्वकम् ॥
दक्षिणा तु प्रदातव्या त्रिंशन्निष्का महातप ।

त्रिंशन्निष्कदक्षिणादानं त्वेकाग्निपक्षविषयम् । अनेकाग्नि पक्षे तुलापुरुषवद्दक्षिणा ।

तदुक्तं शैवे ।

अथैकाग्निविधानं वा समिदाज्यं हविष्ययुक् ।
त्रिंशन्निष्का वरा देया गुरोरेकाग्निकल्पतः—इति ।

एकाग्निपक्षश्च स्वल्पवित्तविषयः ।

पूर्ववच्छेषमिति शेषमनुक्तं किञ्चित् तदखिलं लिङ्गपुराणोक्तं तुलापुरुषविहित-माचरेदित्यर्थः ।

कालोत्तरे ।

एतस्यास्तु प्रदाता यस्तेन दत्तं चराचरम् ।
त्रिसप्तकुलसंयुक्तो विमानैर्दिव्यवर्चसैः ॥

शिवलोकमवाप्नोति यावदिन्द्राश्चतुर्दश ।
तदन्ते चक्रवर्त्ती स्यात् ज्ञानवाँस्तु शिवं व्रजेत् ॥

इति नानाशास्त्रीयकामधेनुदानम् ।

## अथ हिरण्याश्वाभिधानं सप्तमं महादानमालिख्यते ।

**मत्स्य उवाच ।**

अथातः संप्रवक्ष्यामि हिरण्याश्वविधिं परम् ।
यस्य प्रसादाद्भुवनमनन्तफलमश्नुते ॥
पुण्यं तिथिमथासाद्य कृत्वा ब्राह्मणवाचनम् ।
लोकेशावाहनं कुर्यात् तुलापुरुषदानवत् ॥
ऋत्विग्मण्डपसम्भारभूषणाच्छादनादिकम् ।
स्वल्पेष्वेकाग्निवत् कुर्याद्धेमवाजिमखं बुधः ॥

अत्रादिशब्देन देशकालवृद्धिश्राद्धशिवादिपूजागुर्वृत्विग्वरणमधुपर्कदानवेदिकोपरिचक्रलेखनवितानतोरणपताकाधिवासनादि मत्स्यपुराणोक्ततुलापुरुषदानविहितं सं गृह्यते । 'स्वल्पेष्वेकाग्निवदिति' व्याख्यातम् ।

स्थापयेद्वेदिमध्ये तु कृष्णाजिनतिलोपरि ।

कृष्णाजिननिहितद्रोणपरिमिततिलोपरीति विज्ञेयम् ।

कौशेयवस्त्रसंवीतं कारयेद्धेमवाजिनम् ।
शक्तितस्त्रिपलादूर्ध्वमासहस्रपलाद्बुधः ॥
पादुकोपानहच्छत्रचामरासनभाजनैः ।
पूर्णकुम्भाष्टकोपेतं माल्यैक्षुफलसंयुतम् ॥
शय्यां सोपस्करां तद्वद्धेममार्त्तण्डसंयुताम् ।

शय्योपस्करा विविधास्तरणोपधानवस्त्रफलपुष्पकुङ्कुमकर्पूरागुरुचन्दनताम्बूलदर्पणकङ्कतिकाचामरव्यजनासनैतदग्रस्थितपात्रा*सिमुद्रिकोपानद्युगलताम्रघटिकादिज-

---

* पुत्रिकेति पुस्तकान्तरे ।

लपात्रदीपिकावितानादयः । 'मार्त्तण्डसंयुतमिति' उपर्यारूढसौवर्णं सूर्याश्वं कुर्या दित्यर्थः ।

सूर्यलक्षणमुक्तं ब्रह्माण्डे ।

ततः सर्वौषधिस्नानस्नापितो वेदपुङ्गवैः ।
इममुच्चारयेन्मन्त्रं गृहीतकुसुमाञ्जलिः ॥

इहापि पूर्वेद्युरधिवासनं विधाय द्वितीयदिवसे पूर्ववत् पुण्याहवाचनादि-पूर्णाहुतिपर्यन्तं कर्म गुरुः समापयेत् ।

अथ सर्वौषधिजलस्नातः शुक्लाम्बरो यजमानस्त्रिः प्रदक्षिणीकृत्य वक्ष्यमाणमन्त्र-मुदीरयेत् ।

नमस्ते सर्वदेवेश वेदाहरणलम्पट ।
वाजिरूपेण मामस्मात् पाहि संसारसागरात् ॥
त्वमेव सप्तधा भूत्वा छन्दोरूपेण भास्करम् ।
यस्माद्भामयसे लोकानतः पाहि सनातन ॥
एवमुच्चार्य गुरवे तमश्वं विनिवेदयेत् ।
दत्त्वा पापक्षयाद्भानोर्लोकमभ्येति शाश्वतम् ॥
गोभिर्विभवतः सर्वान् ऋत्विजश्चाभिपूजयेत् ।
सर्वधान्योपकरणं गुरवे विनिवेदयेत् ॥
सर्वं शय्यादिकं कृत्वा भुञ्जीतातैलमेव हि ।
पुराणश्रवणं तद्वत् कारयेद्भोजनादनु ॥

दानवाक्यमत्र पूर्ववदनुसन्धेयम् । अनुक्तदक्षिणेषु सुवर्णं दक्षिणेति यथाशक्ति सुवर्णदक्षिणा विभववतां स्वविभवानुसारेण सर्वान् सदस्यादीनृत्विजश्च गोभिः पूज-येत् । 'सर्वधान्योपकरणमिति' विनियोगात् पूर्वं धान्यसादनं गम्यते । 'गुरवे निवेदये-दिति' स्वल्पद्रव्यदान आचार्यायैवाश्वं प्रदाय ऋत्विग्भ्यो यथाशक्ति सुवर्णादि दद्यात् । सहस्रपलादिद्रव्यदाने तु प्रकृतिवद्व्यवस्था । स्वल्पतरेष्वेकाग्निपक्षेऽपि द्रष्टव्या । ततश्च पूर्ववत् पुण्याहवाचनदेवतापूजनविसर्जनानि कुर्यात् ।

इमं हिरण्याश्वविधिं करोति संपूज्यमानो दिवि देवतेन्द्रैः ।
विमुक्तपापः स पुरं मुरारेः प्राप्नोति सिद्धैरभिपूजितः सन् ॥

इति पठति य एतद्धेमवाजिप्रदानं
सकलकलुषमुक्तः सोऽश्वमेधेन भूयः ।
कनकमयविमानेनार्कलोकं प्रयाति
त्रिदशपतिवधूभिः पूज्यते योऽथ पश्येत् ॥
यो वा शृणोति पुरुषोऽल्पधनः स्मरेद्वा
हेमाश्वदानमभिनन्दयतीह लोके ।
सोऽपि प्रयाति हतकल्मषशुद्धदेहः
स्थानं पुरन्दरमहेश्वरदेवजुष्टम् ॥

इति मत्स्यपुराणोक्तो हिरण्याश्वदानविधिः ।

सनत्कुमार उवाच ।

हिरण्याश्वप्रदानं च वदामि विजयावहम् ।
अश्वमेधायुतश्रेष्ठं रहस्यं शृणु सुव्रत ॥
अष्टोत्तरसहस्रेण अष्टोत्तरशतेन वा ।
कृत्वाऽश्वं लक्षणैर्युक्तं सर्वालङ्कारसंयुतम् ॥

शतसहस्रशब्दौ विहितोपलक्षणपरौ ।

शक्तितस्त्रिपलादूर्ध्वमासहस्रपलावधि ।
अल्पे त्वेकाग्निवत् कुर्याद्धेमवाजिमखं बुधः ॥

इति वातुलोक्तेः ।

पञ्चकल्याणकं सम्यग्रजतेन तु कारयेत् ।

चतुर्षु पदेषु मुखे च श्वेतो हयः 'पञ्चकल्याणक' उच्यते ।

सर्वलक्षणसंयुक्तं सर्वाङ्गैश्च समन्वितम् ।
सर्वायुधसमोपेतमिन्द्रवाहनमव्ययम् ॥

तं मध्यदेशे संस्थाप्य तुरङ्गं सद्गुणान्वितम् ।
उच्चैःश्रवःसमं ज्ञात्वा आनीयैव समर्चयेत् ॥

'मध्यदेशे संस्थाप्येति' एतद्दानप्रकृतिभूतलिङ्गपुराणोक्ततुलापुरुषदानविहितवेदिकामण्डलमध्ये तिलोपरि तमश्वं संस्थाप्योच्चैःश्रवसमनुध्यायन् पूजयेत् ।

तस्य पूर्वदिशो भागे ब्राह्मणं वेदपारगम् ।
सुरेन्द्रबुद्ध्या सम्पूज्य पञ्च निष्कान् प्रदापयेत् ॥
तमश्वं ब्राह्मणेऽभ्यर्च्य प्रदद्याद्विधिनैव तु ।
सुवर्णाश्वं प्रदद्यात् तु आचार्यमथ पूजयेत् ॥
यथाविभवविस्तारं पञ्चनिष्कैरथापि वा ।
दीनान्धकृपणानाथबालवृद्धकृशातुरान् ॥
तोषयेदन्नदानेन ब्राह्मणाँश्च विशेषतः ।
घृतेन स्नापयेद्देवं लिङ्गमूर्त्तिं महेश्वरम् ॥
सङ्ख्या पलशतं तस्य पयसा त्वेवमेव हि ।
ब्रह्मकूर्चेन संस्थाप्य विलेप्यागुरुचन्दनैः ॥
सम्पूज्य प्रणिपत्याथ देवदेवं क्षमापयेत् ।
एतद्यः कुरुते भक्त्या दानमश्वस्य मानवः ॥
ऐन्द्राँल्लोकाँश्चिरं भुक्त्वा भुवि राजेश्वरो भवेत् ।

इन्द्रबुद्ध्याऽऽराधिताय विप्राय पञ्च निष्कान् दत्त्वा श्रोत्रियादिभ्यो हिरण्याश्वं दत्त्वाऽऽचार्यं चाभ्यर्च्य तस्मै निष्कपञ्चकं दद्यात् । शिवस्नपनादि पूर्वोत्तरतन्त्रं सर्वं पूर्ववत् ।

मत्स्यपुराणादौ त्वाचार्यायैवाश्वदानमुक्तम् ।

कामिके तु ।

गन्धादिभिस्तमभ्यर्च्य विप्रेभ्यो विनिवेदयेत् ।
सुरेन्द्रबुद्ध्या सम्पूज्य पञ्च निष्कान् प्रदाय च ॥

मण्डलाभ्यर्चनं होमं कलशस्थापनं तथा ।
दक्षिणां देशिकादीनां तुलाभारवदाचरेत् ॥

इति लिङ्गपुराणोक्तो हिरण्याश्वदानविधिः ।

## अथ हिरण्याश्वरथनामधेयमष्टमं महादानमुपक्रम्यते ।

## मत्स्यपुराणे । मत्स्य उवाच ।

अथातः सम्प्रवक्ष्यामि महादानमनुत्तमम् ।
पुण्यमश्वरथं नाम महापातकनाशनम् ॥
पुण्यं दिनमथासाद्य कृत्वा ब्राह्मणवाचनम् ।
लोकेशावाहनं कुर्यात् तुलापुरुषदानवत् ॥
ऋत्विग्मण्डपसम्भारभूषणाच्छादनादिकम् ।

'तुलापुरुषदानवदिति' मत्स्यपुराणोक्ततुलापुरुषवद्बोद्धव्यम् । आदिशब्दस्यापि पूर्ववदेव व्याख्या ।

कृष्णाजिने तिलान् कृत्वा काञ्चनं कारयेद्रथम् ।
अष्टाश्वं चतुरश्वं वा चतुश्चक्रं सकूवरम् ॥
इन्द्रनीलेन कुम्भेन * ध्वजरूपेण संयुतम् ।
लोकपालाष्टकोपेतं पद्मरागदलान्वितम् ॥

अत्र तिलानां रथस्य च परिमाणापेक्षायां पुरुषेच्छया नियमः प्रकृतौ परिमाणाश्रवणात् । केचित् तु सन्निधानात् सुवर्णहस्तिरथादिदानस्थितं तिलानां द्रोणपरिमाणत्वमिह वदन्ति । 'कूवरो' युगाधारकाष्ठम् । 'ध्वजो' दण्डः स च रथस्य सौवर्णत्वात् सौवर्ण एव तथा चोपरिस्थितेन इन्द्रनीलमणिमयेन कलशेन युक्तः कर्त्तव्यः । लोकपाललक्षणमुक्तं ब्रह्माण्डे ।

चत्वारः पूर्णकलशा धान्यान्यष्टौ दशैव तु ।
कौशेयवस्त्रसंयुक्तमुपरिष्टाद्वितानकम् ॥

---

* कुन्तेनेति पुस्तकान्तरे ।

माल्येक्षुफलसंयुक्तं पुरुषेण समन्वितम् ।
यो यद्भक्तः पुमान् कुर्यात् स तन्नाम्नाऽधिवासनम् ॥

वितानमत्र पञ्चवर्णम् । पुरुष इष्टदेवताकारः सौवर्णरथे स्थापनीयः । वस्त्रो-पानत्पादुकाः ।

गोभिर्विभवतः सार्धं दद्याच्च शयनासनम् ।
आभारात् त्रिपलादूर्ध्वं शक्तितः कारयेद्बुधः ॥

'भारः' पलसहस्रद्वयमेतच्च सुवर्णमानं ध्वजपुरुषलोकपालाश्वचक्ररक्षकसहितस्य वेदितव्यम् ।

अष्टाभिरथ संयुक्तं चतुर्भी रथवाजिभिः ।
द्वाभ्यामथ युतं दद्याद्धेमसिंहध्वजान्वितम् ॥

हैमेन सिंहाङ्कितेन युक्तमिति अष्टाश्वपक्षे । चतुरश्वपक्षे चेन्द्रनीलमयकुम्भो ध्वजे कार्यः । अश्वद्वयपक्षे हेमसिंह इति व्यवस्था ।

चक्ररक्षावुभौ तस्य तुरगस्थावथाश्विनौ ।
पुण्यं कालं ततः प्राप्य पूर्ववत् स्नापितो द्विजैः ॥
शुक्लमाल्याम्बरो दद्यादिमं मन्त्रमुदीरयेत् ।

'चक्ररक्षौ' चक्रसमीपे अश्वारूढावश्विनीकुमारौ कार्यौ ।

## तल्लक्षणमाह गोभिलः ।

द्विभुजौ देवभिषजौ कर्त्तव्यावश्ववाहनौ ।
तयोरोषधयः कार्या दिव्या दक्षिणहस्तयोः ॥
वामयोः पुस्तकौ कार्यौ दर्शनीयौ तथा द्विज ।

'पुण्यकालं' यजमानानुकूलं लग्नमुहूर्त्तादिकम् ।

अत्रापि पूर्ववदधिवासनदिनादन्यदिवसे पुण्याहवाचनादि सकलकर्मसमाप्तौ सर्वौषधिजलस्नातो गृहीतकुसुमाञ्जलिर्यजमानस्त्रिः प्रदक्षिणीकृत्य वक्ष्यमाणं मन्त्रमु-दाहरेत् ।

नमो नमः पापविनाशनाय विश्वात्मने वेदतुरङ्गमाय ।
धाम्नामधीशाय भवाभवाय पापौघदावानल देहि शान्तिम् ॥
वस्वष्टकादित्यमरुद्गणानां त्वमेव धाता परमं निधानम् ।
यतस्ततो मे हृदयं प्रयातु धर्मैकतानत्वमघौघनाशात् ॥

इहापि दानप्रयोगसुवर्णदक्षिणादानर्त्विगाचार्यद्रव्यविभागस्वल्पैकाग्निविधानादि पूर्ववदनुसन्धेयम् । ततः पुण्याहवाचनदेवतापूजनविसर्जनादि कुर्यात् ।

## अथाथर्वणगोपथब्राह्मणे ।

ॐ अथातोऽश्वरथविधिमनुक्रमिष्यामः । सर्वपापापनोदन उद्गयन आपूर्यमाणपक्षे श्वः पुण्ये नक्षत्रे श्रद्धाप्रेरितो ग्रहयुक्तो ग्रहणकाले वा । अथ ऋत्विक् प्रदानकालात् सुवर्णं रथमानीय सर्वं शान्त्युदकेनाभ्युक्ष्य यथोक्तमाञ्जनाभ्यञ्जनानुलेपनं कारयित्वा वासो गन्धान् स्रजश्चाबध्य अग्निमुपसमाधाय अन्वालभ्याथ जुहुयात् । उदेहि वाजिन्निति द्वाभ्यां सूर्यं चरुं श्रपयित्वा विषासहिं सहमानमित्यभिमन्त्रयान्वालभ्याथ जुहुयात् । रथं योक्त्रं युगमश्वौ च सर्वं शान्त्युदकेनाप्लाव्य वा तुरङ्गं वाजिन्नित्यश्वयोर्मूर्ध्नि सम्पातान् स्थालीपाकाद्यजेत् । उद्यते नम इति नवभिर्मन्त्रैर्नमस्कृत्य द्विजानन्ते तर्पयेत् ।

## तत्र श्लोकौ ।

सर्वेषामेव दानानां फलं यत् तत् प्रकीर्त्तितम् ।
तत् तदाप्नोति विप्रेभ्यो विधिनाऽश्वरथं ददत् ॥
अनामयं स्थानमवाप्य देवैरलङ्घनीयं सुकृतं हिरण्मयम् ।
सुवर्णतेजाः प्रविमुक्तपापो रथैश्चरन् दिव्यति सूर्यलोके ॥

## मत्स्यपुराणे ।

इति तुरगरथप्रदानमेतद्भवभयसूदनमत्र यः करोति ।
सकलकलुषपटलैर्विमुक्तदेहः परममुपैति पदं पिनाकपाणेः ॥

देदीप्यमानवपुषा विजितप्रभावमाक्रम्य मण्डलमखण्डलचण्डभानोः ।
सिद्धाङ्गनानयनषट्पदपीयमानवक्त्राम्बुजोऽम्बुजभवेन चिरं सहास्ते ॥
इति पठति शृणोति वा य इत्थं कनकतुरङ्गमरथप्रदानमेव ।
न स नरकपुरं व्रजेत् कदाचिन्नरकरिपोर्भवनं प्रयाति भूयः ॥

इति हिरण्याश्वरथदानविधिः ।

## अथ हेमहस्तिरथाभिधानं नवमं महादानमारभ्यते ।

### मत्स्यपुराणे । मत्स्य उवाच ।

अथातः संप्रवक्ष्यामि हेमहस्तिरथं शुभम् ।
यस्य प्रदानाद्भवनं वैष्णवं याति मानवः ॥
पुण्यां तिथिमथासाद्य तुलापुरुषदानवत् ।
विप्रवाचनकं कुर्याल्लोकेशावाहनं बुधः ॥
ऋत्विग्मण्डपसम्भारभूषणाच्छादनादिकम् ।
अत्राप्युपोषितस्तद्वद्ब्राह्मणैः सह भोजनम् ॥

इहाप्यादिशब्देन देशकालवृद्धिश्राद्धादिसर्वमनुक्तं मत्स्यपुराणोक्ततुलापुरुषस्थितं वेदितव्यम् । 'उपोषित इति' उपवासाशक्तौ नक्तमपि वेदितव्यम् ।

कुर्यात् पुष्परथाकारं काञ्चनं मणिमण्डितम् ।
वलभीभिर्विचित्राभिश्चतुश्चक्रसमन्वितम् ॥
लोकपालाष्टकोपेतं शिवार्कब्रह्मसंयुतम् ।
मध्ये नारायणोपेतं लक्ष्मीपुष्टिसमन्वितम् ॥

'पुष्परथः' क्रीडार्थो रथः स चतुष्किकाकारेणोपर्याच्छादितो भवति वलयेभ्यो लोकपालाश्रयः । लोकपालब्रह्मशिवार्कलक्षणमुक्तं ब्रह्माण्डे । मध्यशब्दः पूर्वापराभ्यां सम्बध्यते । शिवादीनामपि स्थानापेक्षायास्तेनैव निवृत्तेः ।

## नारायणादिलक्षणं पञ्चरात्रे ।

नारायणश्चतुर्बाहुः शङ्खं चक्रं तथोत्तरे ।

दक्षिणे तु महापद्मं नीलजीमूतसन्निभः ॥
वामे श्रीर्वल्लकीहस्ता पुष्टिः पद्मकरा परा ।

इति ।

कृष्णाजिने तिलद्रोणं कृत्वा संस्थापयेद्रथम् ।
तथाऽष्टादशधान्यानि भाजनासनचन्दनैः ॥
दीपिकोपानहच्छत्रपादुकादर्पणान्वितम् ।
ध्वजे तु गरुडं कुर्यात् कूवराग्रे विनायकम् ॥
नानाफलसमायुक्तमुपरिष्टाद्वितानकम् ।
कौशेयं पञ्चवर्णं च अम्लानकुसुमान्वितम् ॥
चतुर्भिः कलशैः सार्धं गोभिरष्टाभिरन्वितम् ।
चतुर्भिर्हयमातङ्गैर्मुक्तादामविभूषितैः ॥
स्वरूपतः करिभ्यां च युक्तं कृत्वा निवेदयेत् ।
कुर्यात् पञ्चपलादूर्ध्वमाभारादपि शक्तितः ॥

'ध्वजे तु गरुडं कुर्यादित्यादि' ध्वजो दण्डः ।

## गरुडलक्षणमुक्तं नारदीये ।

ॐ ऐन्द्रस्याग्रतः पक्षी गुडाकेशः कृताञ्जलिः ।
सव्यजानुनतो भूमौ मूर्धा च फणिमण्डितः ॥
पक्षिजङ्घो नरग्रीवस्तुङ्गनासो नराङ्गकः ।
द्विबाहुः पक्षयुक्तश्च कर्त्तव्यो विनतासुतः ॥

## विनायकस्य ।

चतुर्भुजस्त्रिनेत्रश्च कर्त्तव्योऽत्र गजाननः ।
नागयज्ञोपवीतश्च शशाङ्ककृतशेखरः ॥
दन्तं दक्षकरे दद्याद्द्वितीये चाक्षसूत्रकम् ।
तृतीये परशुं दद्याच्चतुर्थे मोदकं तथा ॥

उपर्यधोहस्तयोर्दन्तादि देयमिति। कूबरो व्याख्यातः। 'अम्लानकुसुमं' पुष्पविशेषः। रूढिर्योगिकमपहरतीति न्यायात्। महाप्रहेति प्रसिद्धमेव गृह्यते। भारो व्याख्यातः। ध्वजगतदेवताश्च पञ्चपलादिपरिमितेन रथवत् कृतसुवर्णेनैव निष्पादनीयाः। एवं सम्भारानुपकल्प्य पूर्ववदधिवासनं विधाय दिवसेषु पुण्याहवाचनादिसकलं कर्मकाण्डं समाप्य सर्वौषधिजलैराचार्यो यजमानस्य स्नपनं कुर्यात्।

ततो मङ्गलशब्देन स्नापितो वेदपुङ्गवैः।
त्रिः प्रदक्षिणमावृत्य गृहीतकुसुमाञ्जलिः॥
इममुच्चारयेन्मन्त्रं ब्राह्मणेभ्यो निवेदयेत्।
नमो नमः शङ्करपद्मजार्कलोकेशविद्याधरवासुदेवैः।
त्वं सेव्यसे देव पुराणयज्ञ तेजोमयस्यन्दन पाहि यस्मात्॥
यत् तत् पदं गुह्यतमं मुरारेरानन्दहेतुर्गुणरूपमन्तः।
योगैकमानसदृशो मुनयः समाधौ-
पश्यन्ति तत्त्वमसि नाथ रथेऽधिरूढः।
यस्मात् त्वमेव भवसागरसंश्रिताना-
मानन्दभाण्डभृतमध्वरपानपात्रम्॥
तस्मादघौघशमनेन कुरु प्रसादं
चामीकरेभरथसाधनसम्प्रदानात्।

मन्त्रेणानेन प्रणम्य यथाशक्ति सुवर्णदक्षिणामुपकल्प्य पूर्ववत् प्रयोगमुच्चार्य तं गजरथं प्रत्यक्षगजसंयुतं ब्राह्मणेभ्यः प्रतिपादयेत्। आचार्यादीनामर्धचतुर्भागादिव्यवस्था। तदनुज्ञया चान्येभ्योऽपि दानम्। दीनानाथपूरणं चेति प्रकृतिवदाचरणीयम्। ततः पुण्याहवाचने कृते यजमानो वेदिसमीपं गत्वा देवतापूजां विदध्यात्। आचार्यस्तु विसर्जयेच्च।

**आथर्वणगोपथब्राह्मणे। अथातो हस्तिरथदानविधिं वक्ष्ये।**

जातरूपमयं कृत्वा रथं चक्रसुशोभनम्।
हस्तिभिः सप्तभिर्युक्तमर्चयित्वा यथाविधि॥

अथ वा चतुर्भिर्युक्तं हैमं राजतमेव वा ।
अस्पृष्टं दारुजं वापि सर्वसम्भारपूरितम् ॥
हस्तियुग्मेन संवीतं* सौरभेययुगेन वा ।
भुङ्क्ते सप्तैव जन्मानि सप्तद्वीपां वसुन्धराम् ॥

हस्तियुक्ते चन्द्रमसि पौर्णमास्यमावास्ययोरन्यस्मिन् पुण्ये तिथावह्नि हस्ति वा शुचौ देशे तन्त्रमित्युक्तं प्राञ्चमिध्ममग्निमुपसमाधायान्वारभ्याऽथ जुहुयात्। सवित्रे स्वाहा पतङ्गाय स्वाहा पावकाय स्वाहा सहस्ररश्मये स्वाहा मार्त्तण्डाय स्वाहा विष्णवे स्वाहा प्रजापतये स्वाहा परमेष्ठिने स्वाहेति हुत्वा हस्तिवर्चसप्रथतां वृहद्यश इति कलशे सम्पातानानीय युगं योक्त्रं रथमिति सर्वं सम्प्रोक्ष्य यज्ञस्य त्वा मनसायुनज्मीति योजयेत् । अश्रान्तस्य त्वा मनसा युनज्मि प्रथमस्य च उत्कूलमुद्वहो भवोदुह्य धावतां युक्तायार्घं दद्यात् स्यावैर्युक्तः सितपाद्धिरण्मयो यस्य रथः पथिभिर्वर्त्तते शिवैः शन्तो अग्ने वसुविदा हिरण्यकृद्धिरण्यपाणिः सविता नोऽभिरक्षतु ।

बृहद्धस्तिरथं युक्तं हस्तेन तु ददन्नरः ।
सवितुः स्थानमाप्नोति दिव्यां कामजवां शुभाम् ॥

**मत्स्यपुराणे ।**

इत्थं प्रणम्य कनकेन रथप्रदानं
  यः कारयेत् सकलपापविमुक्तदेहः ।
विद्याधरामरमुनीन्द्रगणाभिजुष्टं
  प्राप्नोत्यसौ पदमतीन्द्रियमिन्दुमौलेः ॥
कृतदुरितवितानप्रोज्ज्वलद्वह्निजाल-
  व्यतिकरकृतदाहोद्वेगभाजोऽपि बन्धून् ।

---

* संयुक्तमिति पुस्तकान्तरे ।

नर्यति च पितृपौत्रान् रौरवादप्यशेषान्

कृतगजरथदानः शाश्वतं सद्म विष्णोः ॥

इति हेमहस्तिरथदानविधिः ।

## अथ पञ्चलाङ्गलाख्यं दशमं महादानमुपपाद्यते ।

### मत्स्य उवाच ।

अथातः सम्प्रवक्ष्यामि महादानमनुत्तमम् ।
पञ्चलाङ्गलकं नाम महापातकनाशनम् ॥
पुण्यां तिथिमथासाद्य युगादिग्रहणादिकाम् ।
भूमिदानं नरो दद्यात् पञ्चलाङ्गलकान्वितम् ॥
कर्वटं खेटकं वापि ग्रामं वा सस्यशालिनम् ।
निवर्त्तनं शतं वापि तदर्धं वापि शक्तितः ॥
सारदारुमयान् कृत्वा हलान् पञ्च विचक्षणः ।
सर्वोपकरणैर्युक्ताँस्तथान्यान् पञ्च काञ्चनान् ॥

### कर्वटादिस्वरूपं मार्कण्डेयपुराणे ।

सोत्सेधवप्रप्राकारं सर्वतः खातकावृतम् ।
योजनार्धार्धविष्कम्भमष्टभागायतं पुरम् ॥
तदर्धेन तथा खेटं तत्पादेन च कर्वटम् ।
तथा शुद्धजनप्रायाः सुसमृद्धकृषीवलाः ॥
क्षेत्रोपभागभूमध्ये वसतिर्ग्रामसंज्ञिते—इति ।

निवर्त्तमानं तु सप्तहस्तेन दण्डेनेत्यादि वक्ष्यति । 'सारदारूणि' शाकेङ्गुदीचन्दनप्रभृतीनि । 'उपकरणानि' युगयोक्त्रफालरज्जुप्राजनादीनि ।

वृषान् लक्षणसंयुक्तान् दशैव च धुरन्धरान् ।
सुवर्णशृङ्गाभरणान् मुक्तालाङ्गूलभूषणान् ॥
रौप्यपादाग्रतिलकान् रक्तकौशेयभूषितान् ।

स्रग्दामचन्दनयुतान् * शालायामधिवासयेत् ॥

वृषलक्षणानि सुशीलत्वमरुग्णमिन्द्रियत्वमरोगित्वं क्लेशसहत्वमित्यादीनि । 'अग्रं' ललाटदेशः । ततश्च रौप्यपादान् रौप्यललाटतिलकांश्चेति ।

पर्जन्यादित्यरुद्रेभ्यः पायसं निर्वपेच्चरुम् ।
एकस्मिन्नेव कुण्डे तु चरुमस्मै निवेदयेत् ॥
पलाशसमिधस्तद्वदाज्यं कृष्णतिलांस्तथा ॥

इहापि पूर्ववदधिवासनादि विधाय तदन्यदिवसे पुण्याहवाचनं कृत्वाग्निकुण्डेषु ऋत्विगुपवेशनादिकर्मशेषं समापयेत् । किं तु परोऽत्रायं विशेषस्तुलापुरुषोक्तहोमे विहितशेषाणामृत्विजामन्यतमं गुरुरादिशेत् । स एक एव ऋत्विगेकस्मिन्नेव कुण्डे पर्जन्यादित्यरुद्रेभ्यस्तल्लिङ्गमन्त्रैः पायसचरुप्रभृतिद्रव्येणाष्टोत्तरसहस्रं जुहुयात् ।

तुलापुरुषवत् कुर्याल्लोकेशावाहनं बुधः ।
ततो मङ्गलशब्देन शुक्लमाल्याम्बरो बुधः ॥
आहूय द्विजदाम्पत्यं हेमसूत्राङ्गुलीयकैः ।
कौशेयवस्त्रकटकैर्मणिभिश्च विभूषयेत् ॥
शय्यां सोपस्करां दद्याद्धेनुमेकां पयस्विनीम् ।
तथाष्टादशधान्यानि समन्तादधिवासयेत् ॥
ततः प्रदक्षिणीकृत्य गृहीतकुसुमाञ्जलिः ।
इममुच्चारयेन्मन्त्रमथ सर्वं निवेदत् ॥

लोकेशावाहनमित्युपलक्षणम् । अत्र हि देशकालवृद्धिश्राद्धशिवार्दिपूजाब्राह्मणवाचनगुर्वृत्विग्वरणमधुपर्कदानकुण्डमण्डपवेदिकावितानचक्रलेखनतोरणपताकादि मत्स्यपुराणोक्ततुलापुरुषविहितं गृह्यते । 'तत इति' होमानन्तरं सर्वौषधिजलस्नातः शुक्लाम्बरधरो दद्यादित्यन्वयः । 'आहूय द्विजदाम्पत्यमिति' सकलकर्मनियुक्तस्य गुरोर्दक्षिणान्तराप्रतीतेः सन्निहितपरित्यागे कारणाभावात् द्विजशब्दस्याविरोधाच्च सकल-

---

* स्रगन्धचन्दनयुतामिति पुस्तकान्तरे पाठः ।

तस्य गुरोरेव दातव्यमिति गम्यते। तदनुज्ञया चान्येभ्योऽपि देयमिति। स्वल्पेष्वेकाग्नि-विधानमपि बोद्धव्यम्। शय्योपस्करा हिरण्याश्वदाने व्याख्याताः।

**अथ मन्त्रः।**

यस्माद्देवगणाः सर्वे स्थावराणि चराणि च।
धुरन्धराङ्गे तिष्ठन्ति तस्माद्भक्तिः शिवेऽस्तु मे॥
यस्माच्च भूमिदानस्य कलां नार्हन्ति षोडशीम्।
दानान्यन्यानि मे भक्तिर्धर्मे एव दृढा भवेत्॥

इति मन्त्रमुच्चार्य यथाशक्ति दक्षिणामुपकल्प्य पूर्वप्रयोगेण प्रतिपादयेत्। ततश्च पुण्याहवाचनदेवतापूजनविसर्जनानि।

दण्डेन सप्तहस्तेन त्रिंशद्दण्डा निवर्त्तनम्।
त्रिभागहीनं गोचर्ममानमाह प्रजापतिः॥
मानेनानेन यो दद्यान्निवर्त्तनशतं बुधः।
विधिनानेन तस्याशु क्षीयते पापसंहतिः॥
तदर्धमपि वा दद्यादपि गोचर्ममात्रकम्।
भवनस्थानमात्रं वा सोऽपि पापैः प्रमुच्यते॥

यावन्ति लाङ्गलकमार्गमुखानि भूमे-
र्भासां पतेर्दुहितुरङ्गजरोमकाणि।
तावन्ति शङ्करपुरे स समा हि तिष्ठे-
द्भूमिप्रदानमिह यः कुरुते मनुष्यः॥
गन्धर्वकिन्नरसुरासुरसिद्धसङ्घै-
राधूतचामरमुपेत्य महद्विमानम्*।
संपूज्यते पितृपितामहबन्धुयुक्तः
शम्भोः पुरं व्रजति चामरनायकः सन्॥

---

* महद्विमानैरिति क्वचित् पाठः।

इन्द्रत्वमप्यधिगतं क्षयमभ्युपैति
गोभूमिलाङ्गलधुरन्धरसम्प्रदानात् ।
तस्मादघौघपटलक्षयकारि भूमे-
र्दानं विधेयमतिभूतिभवोद्भवाय ॥

इति श्रीमत्स्यपुराणोक्तः पञ्चलाङ्गलकदानविधिः ।

**श्रीभगवान् उवाच ।**

अतः परं प्रवक्ष्यामि दानमप्यद्भुतं तव ।
येन दत्तेन राजेन्द्र सर्वदानप्रदो भवेत् ॥
सर्वपापप्रशमनं सर्वसौख्यप्रदायकम् ।
संयुक्तहलपङ्क्त्याख्यदानं सर्वफलप्रदम् ॥
पङ्क्तिर्दशहला प्रोक्ता हलस्य स्याच्चतुर्युगम्* ।
सारदारुमयान्याहुर्हलानि दश पण्डिताः ॥
सौवर्णपट्टनद्धानि रत्नवन्ति शुभानि च ।
यूनश्च बलिनो भव्यान्नाङ्गहीनान् स्वलङ्कृतान् ॥
वस्त्रकाञ्चनपुष्पैस्तु चन्दनादिग्धमस्तकान् ।
भद्राङ्गान् योजयेत् तेषु लाङ्गलेषु वृषान् पुमान् ॥
योक्त्राणि युगलग्नानि सवृषाणि च कारयेत् ।
प्रतोदकीलिकाबन्धसर्वोपकरणानि च ॥
एवं विधैर्हलैः कुर्यात् संयुक्तां हलपङ्क्तिकाम् ।
खेटकं कर्वटं वापि ग्रामं वा सस्यशालिनम् ॥
निवर्त्तनशतं वापि तदर्द्धं वापि कल्पयेत् ।
एवं विधां पर्वकाले दद्यात् प्रयतमानसः ॥
कार्त्तिक्यां वाऽथ वैशाख्यामुत्तरे त्वयने तथा ।

---

* चतुर्गवमिति पुस्तकान्तरे पाठः ।

जन्मर्क्षे ग्रहणे वापि विषुवे चाऽथ दापयेत् ॥
ब्राह्मणान् वेदसम्पन्नानव्यङ्गाङ्गान् स्वलङ्कृतान् ।
श्रोत्रियाँश्च विनीताँश्च हलसंख्यान् निमन्त्रयेत् ॥
दशहस्तप्रमाणेन कारयेन्मण्डपं बुधः ।
पूर्वेद्युः कुण्डमेकं च हस्तमात्रं च शोभनम् ॥
तत्र व्याहृतिभिर्होमं कुर्युस्ते द्विजसत्तमाः ।
पर्जन्यादित्यरुद्रेभ्यः पायसं निर्वपेच्चरुम् ॥
पलाशसमिधस्तद्वदाज्यं कृष्णतिलाँस्तथा ।
आवास्य च ततः पङ्क्तिं धान्यमध्यगतां शुभाम् ॥
ततः पर्वसमीपे तु स्नातः शुक्लाम्बरः शुचिः ।
हलपङ्क्तिं योजयित्वा यजमानः समाहितः ॥
शङ्खतूर्यनिनादैश्च ब्रह्मघोषैः सपुष्कलैः ।
इममुच्चारयेन्मन्त्रं गृहीतकुसुमाञ्जलिः ॥
यस्माद्देवगणाः सर्वे हले तिष्ठन्ति सर्वदा ।
वृषस्कन्धे सन्निहितास्तस्माद्भक्तिः शिवेऽस्तु मे ॥
यस्माच्च भूमिदानस्य कलां नार्हन्ति षोडशीम् ।
दानान्यन्यानि मे भक्तिर्धर्मे चास्तु सदा दृढा ॥
एवमुक्ते ततः पङ्क्तिं प्रेरयेद्यो द्विजोत्तमः ।
बीजानि सर्वरत्नानि सुवर्णं रजतं तथा ॥
स्वयं पश्चाद्धले लग्नो विप्रहस्तेषु निर्वपेत् ।
यायान्निवर्त्तनं यावत् ततस्तु विरमेद्बुधः ॥
प्रदक्षिणं ततः कृत्वा विप्राणां प्रतिपाद्य च ।
सदक्षिणविधानेन प्रणिपत्य विसर्जयेत् ॥
अनेन विधिना यस्तु दानमेतत् प्रयच्छति ।

एकविंशत्कुलोपेतः स्वर्गलोके महीयते ॥
सप्तजन्मानि दारिद्र्यं दौर्भाग्यं व्याधयस्तथा ।
न पश्यति च भूमेश्च तथैवाधिपतिर्भवेत् ॥
दृष्ट्वा तु दीयमानं तु दानमेव युधिष्ठिर ।
आजन्मनः कृतात् पापान्मुच्यते नात्र संशयः ॥
दानमेतत् पुरा दत्तं दिलीपेन ययातिना ।
शिबिना निमिना चैव भरतेन च धीमता ॥
तेऽद्यापि दिवि मोदन्ते दानस्यास्य प्रभावतः ।
प्रयत्नेन महीपाल दानमेतन्नृपोत्तम* ॥
दातव्यं भक्तियुक्तेन स्त्रिया वा पुरुषेण वा ।
यदि पङ्क्तिर्न विद्येत पञ्च चत्वारि वा नृप ॥
एकमप्युक्तविधिना हलं देयं विचक्षणैः ।

यावन्ति लाङ्गुलमुखोत्थमृदां रजांसि
यावन्ति चात्र सुधुरन्धररोमकाणि ।
तावन्ति शङ्करपुरे स युगानि तिष्ठेत्
पङ्क्तिप्रदानमिह यः कुरुते मनुष्यः ॥
युक्तां वृषैरतिबलैर्हलपङ्क्तिमेनां
पुण्येऽह्नि भक्तिसहितां द्विजपुङ्गवानाम् ।
यच्छन्ति ये सुकृतिनो वसुधासमेता-
स्ते भूभुजां सुखमुपेत्य भवन्ति भव्याः ॥

इति भविष्योत्तरोक्तो हलपङ्क्तिदानविधिः ।

**अथैकादशं धरादानसंज्ञं महादानमुपवर्ण्यते ।**

**मत्स्यपुराणे ।**

---

* दापयेत् तन्नृपोत्तम इति क्वचित् पाठः ।

मत्स्य उवाच ।

अथातः संप्रवक्ष्यामि धरादानमनुत्तमम् ।
पापक्षयकरं नृणाममङ्गल्यविनाशनम् ॥
कारयेत् पृथिवीं हैमीं जम्बुद्वीपानुकारिणीम् ।
मर्यादापर्वतवतीं मध्ये मेरुसमन्विताम् ॥
लोकपालाष्टकोपेतां नववर्षसमन्विताम् ।
नदीनदशतोपेतामन्ते सागरवेष्टिताम् ॥

'अनुकारिणीं' सदृशीमित्यर्थः ।

इह हि जम्बुद्वीपसदृशीं कुर्यादित्युक्ते निखिलनगनगरसरोवरवनाद्यन्वितमहीसादृश्यप्राप्तौ मर्यादापर्वतवतीमित्यादिना तावन्मात्रान्वितधरण्यनुकार इति गम्यते । इतरथा सामान्येनैव तदवगतेर्विशेषानर्थक्यप्रसङ्गात् । तदयमर्थः । हैमीं पृथ्वीं कुर्यादित्युक्ते सप्तद्वीपवत्याः* प्रसङ्गे जम्बुद्वीपानुकारिणीमित्युच्यते । तत्रापि नानापर्वतान्वितानुकारप्रसङ्गे मर्यादापर्वतवतीमिति । तथासति मेरोरनुकरणप्राप्तौ मध्ये मेरुसमन्वितामिति । नानादेवगणनिवृत्त्यर्थं लोकपालाष्टकोपेतामिति । एवं च संख्येयपक्षाश्रयणे† पुराणान्तरोपदर्शितवर्षचतुष्टयादिपक्षपरिग्रहशङ्कानिवृत्त्यर्थं नववर्षसमन्वितामित्युच्यते ।

तत्र जम्बुद्वीपमुपवर्णितं विष्णुपुराणे ।

नववर्षं तु मैत्रेय जम्बुद्वीपमिदं मया ।
लक्षयोजनविस्तारं संक्षेपात् कथितं तव ॥
जम्बुद्वीपं समावृत्य लक्षयोजनविस्तरः ।
मैत्रेय वलयाकारः स्थितः क्षीरोदधिर्बहिः ॥
जम्बुद्वीपः समस्तानां द्वीपानां मध्यतः स्थितः ।
तस्यापि मेरुर्मैत्रेय मध्ये कनकपर्वतः ॥

---

* सप्तद्वीपवत्याः करणप्रसङ्ग इति क्वचित् पाठः ।

† संक्षेपपक्षाश्रयण इति वा पाठः ।

चतुरशीतिसाहस्रैर्योजनैरस्य चोच्छ्रयः ।
प्रतिष्ठा षोडशाधस्ताद्द्वात्रिंशन्मूर्ध्नि विस्तृतः ॥
मूले षोडशसाहस्रो विस्तारस्तस्य सर्वतः* ।

पुराणान्तरे त्वष्टषष्टियोजनोच्छ्रय इत्युक्तम् ।

तथा ।

मेरोश्चतुर्दिशं तत्र नवसाहस्रविस्तृतम् ।
इलावृतं महाभागश्चत्वारश्चानुपर्वताः ॥
विष्कम्भा रचिता मेरोर्योजनायुतमुच्छ्रिताः ।
पूर्वेण मन्दरो नाम दक्षिणे गन्धमादनः ॥
वैभ्राजः पश्चिमे पार्श्वे सुपार्श्वश्चोत्तरे स्मृतः ।

मर्यादापर्वतास्तु ब्रह्माण्डपुराणे दर्शिताः ।

जाठरो देवकूटश्च पूर्वस्यां दिशि पर्वतौ ।
तौ दक्षिणोत्तरायामावानीलनिषधायतौ ॥
कैलासो हिमवाँश्चैव दक्षिणे वरपर्वतौ ।
पूर्वपश्चायतावेतावर्णवान्तव्यवस्थितौ ॥
त्रिशृङ्गो जारुधिश्चैव उत्तरौ वरपर्वतौ ।
पूर्वपश्चायतावेतावर्णवान्तव्यवस्थितौ ॥
निषधः पारिजातश्च पश्चिमौ वरपर्वतौ ।
तौ दक्षिणोत्तरायामावानीलनिषधायतौ ।

नीलनिषधपर्वतौ त्वग्रे वक्ष्येते ।

'लोकपालाष्टकोपेतामिति' लोकपाला इन्द्रादयोऽष्टौ । तेषां लक्षणं पूर्वमुक्तं ब्रह्माण्डदाने । तत्सन्निवेशाश्च मेरोरुपरि प्रदक्षिणक्रमेण पूर्वादिदिक्षु कर्त्तव्याः । 'नववर्षसमन्वितामिति'—

* मध्यत इति पुस्तकान्तरे ।

वर्षोपवर्णनं च ब्रह्माण्डपुराणे ।

उत्तरं यत् समुद्रस्य हिमाद्रेश्चैव दक्षिणम् ।
एतद्वै भारतं नाम भारती यत्र सन्ततिः ॥
भारतं प्रथमं वर्षं ततः किंपुरुषं स्मृतम् ।
हरिवर्षं तथैवान्यन्मेरोर्दक्षिणतो द्विज ॥
रम्यकं चोत्तरे वर्षं* तस्यैवानु हिरण्मयम् ।
उत्तराः कुरवश्चैव यथा वै भारतं तथा ॥
मेरोः पूर्वेण भद्राश्वं केतुमालं च पश्चिमे ।
वर्षे द्वे तु समाख्याते तयोर्मध्यमिलावृतम् ॥
नवसहस्रमेतेषामेकैकं द्विजसत्तमाः ।

तथा ।

हिमवान् हेमकूटश्च निषधश्चैव दक्षिणे ।
नीलः श्वेतश्च शृङ्गी च उत्तरे वर्षपर्वताः ॥
सहस्रद्वितयोच्छ्रायास्तावद्विस्तारिणश्च ते ।
लक्षप्रमाणौ द्वौ मध्ये दशहीनास्तथा परे ॥

'लक्षप्रमाणावित्यादि' इलावृतस्योभयपार्श्ववर्त्तिनौ नीलनिषधौ द्वौ पर्वतौ दैर्घ्येण लक्षगुणौ† विज्ञेयौ । तद्बाह्यवर्त्तिनौ श्वेतहेमकूटौ नवतिसहस्रयोजनप्रमाणौ विज्ञेयौ । तथा तद्बाह्यस्थितौ शृङ्गिहिमवन्तौ अशीतिसहस्रयोजनप्रमाणावित्यर्थः ।

अत्र युक्तिरुक्ता मत्स्यपुराणे ।

द्वीपस्य मण्डलीभावात् ह्रासवृद्धीः प्रकीर्त्तिते ।

इति ।

ब्रह्माण्डपुराणे ।

मेरोस्तु पश्चिमे भागे नवसाहस्रसम्मिते ।

---

* चोत्तरवर्षमिति पुस्तकान्तरे ।

† लक्षप्रमाणाविति पुस्तकान्तरे ।

चतुस्त्रिंशत्सहस्राणि गन्धमादनपर्वतः ॥
चत्वारिंशत्सहस्राणि परिवृद्धो महीतलात् ।
सहस्रमवगाहे तु सति द्विगुणविस्तरः ॥
पूर्वेण माल्यवान् शैलस्तत्प्रमाणः प्रकीर्त्तितः ।

अत्र शतसहस्रादियोजनपरिमाणानां पृथिव्यादीनां कर्त्तुमशक्यत्वाद्योजनसहस्रस्थानेऽर्धाङ्गुलादिमानं परिकल्प्य यथोक्तसंख्यातारतम्यमनुष्ठेयम् । 'नदीनदशतोपेतामिति' नद्यो भागीरथीप्रभृतिका नदाः शोणादयस्तेषां साकल्येन विधातुमशक्यत्वाद्यावच्छक्यमनुकारः कर्त्तव्यः । 'अन्ते सागरवेष्टितामिति' यद्यपि यावत्परिमाणा पृथ्वी तावानेव सागरः तथाऽप्यनुकारमात्रोपदेशाच्छक्यानुकारमात्रमाचरणीयम् ।

महारत्नसमाकीर्णां वसुरुद्रार्कसंयुताम् ।
हेम्नः पलसहस्रेण तदर्धं वाऽथ शक्तितः ॥
शतत्रयेण वा कुर्याद्द्विशतेन शतेन वा ।
कुर्यात् पञ्चपलादूर्ध्वमशक्तोऽपि विचक्षणः ॥
तुलापुरुषवत् कुर्यात् लोकेशावाहनं बुधः ।
ऋत्विग्मण्डपसम्भारभूषणाच्छादनादिकम् ॥
वेद्यां कृष्णाजिनं कृत्वा तिलानामुपरि न्यसेत् ।
तथाऽष्टादश धान्यानि रसाँश्च लवणादिकान् ॥
तथाऽष्टौ पूर्णकलशान् समन्तात् परिकल्पयेत् ।
वितानकं च कौशेयं फलानि विविधानि च ॥
तथांऽशुकानि रम्याणि श्रीखण्डशकलानि च ।
इत्येवं रचयित्वा तामधिवासनपूर्वकम् ॥
शुक्लमाल्याम्बरधरः शुक्लाभरणभूषितः ।
प्रदक्षिणं ततः कृत्वा गृहीतकुसुमाञ्जलिः ॥

'महारत्नेत्यादि' महारत्नानि माणिक्यप्रभृतीनि परिभाषायां दर्शितानि । वसुरुद्रार्करूपमुक्तं ब्रह्माण्डदाने । 'आच्छादनादिकम्' इत्यादिशब्देन देशकालवृद्धिश्राद्ध-

शिवादिपूजाब्राह्मणवाचनाधिवासनादि सर्वं तुलापुरुषोक्तमनुष्ठेयम् । पूर्णकलशान् स्रग्गन्धपञ्चरत्नदूर्वाङ्कुरचूतपल्लवान्वितानित्यवधेयम् । 'वितानं' पञ्चवर्णमिति । 'प्रदक्षिणं कृत्वेति' त्रिः प्रदक्षिणमावृत्येत्यर्थः । प्रदक्षिणादिकं च द्वितीयदिवसे पूर्णाहुत्यन्तकर्मशेषसमाप्तौ सर्वौषधिस्नानानन्तरमनुसन्धेयम् ।

पुण्यकालमथासाद्य मन्त्रानेतानुदाहरेत् ।
नमस्ते सर्वदेवानां त्वमेकं भवनं यतः ॥
धात्री च सर्वभूतानामतः पाहि वसुन्धरे ।
वसून् धारयसे यस्मात् वसु चातीव निर्मलम् ॥
वसुन्धरा ततो जाता तस्मात् पाहि भयादलम् ।
चतुर्मुखोऽपि नो गच्छेद्यस्मादन्तं तवाचले ॥
अनन्तायै नमस्तस्मात् पाहि संसारकर्दमात् ।
त्वमेव लक्ष्मीर्गोविन्दे शिवे गौरीति संस्थिता ॥
गायत्री ब्रह्मणः पार्श्वे ज्योत्स्ना चन्द्रे रवौ प्रभा ।
बुद्धिर्बृहस्पतौ ख्याता मेधा मुनिषु संस्थिता ॥
विश्वं व्याप्य स्थिता यस्मात् ततो विश्वम्भरा मता ।
धृतिः क्षितिः क्षमा क्षोणी पृथ्वी वसुमती रसा ॥
एताभिर्मूर्त्तिभिः पाहि देवि संसारसागरात् ।
एवमुच्चार्य तां देवीं ब्राह्मणेभ्यो निवेदयेत् ॥
धरार्धं वा चतुर्भागं गुरवे प्रतिपादयेत् ।
शेषं चैवाऽथ ऋत्विग्भ्यः प्रणिपत्य विसर्जयेत् ॥

अत्रापि पूर्ववद्दानवाक्यमुच्चार्य जलपूर्वं दानमाचार्यानुज्ञयाऽन्येभ्योऽपि दानं दीनानाथपूरणम् । स्वल्पे त्वेकाग्निविधानं भूमिपतिकर्त्तव्ये* कर्मणि ग्रामादिदक्षिणादानमशक्तकर्तृके यथाशक्ति सुवर्णदक्षिणादानमित्यनुसन्धेयम् । अथ ब्राह्मणवाचनानन्तरं देवतापूजनविसर्जनानि कुर्यात् ।

---

* भूमिपतिकर्तृक इति पुस्तकान्तरे ।

## आथर्वणगोपथब्राह्मणे ।

अथ रोहिण्यां स कल्पामुपोषितो ब्रह्म यथाबीजरसरत्नगन्धाव-कीर्णतीर्थोदकपूर्णकलशमभिमृष्टाभिषेकमन्त्रैर्यथोक्तैर्दातारमभिषिञ्चति । व्रतेन त्वं व्रतपत इति व्रतमुपैत्यायाचिताशनावधःशायिनौ भवतः। व्रतो-पचारं यथाशक्त्येकरात्रं पञ्चरात्रं वा द्वादशरात्रं व्रतं चरित्वा श्वोभूते तन्त्रमाज्यभागान्तं कृत्वाऽन्वारभ्याथाज्यं जुहुयात् । कामसूक्तं कालसूक्तं पुरुषसूक्तमिति । अथ सुवर्णमयीं भूमिं भूमेः प्रतिकृतिं गोचर्ममात्रां कृत्वा-ऽऽनीय वेद्युत्तरतोऽस्यां वेदिमित्युपस्थाप्य गिरयस्ते पर्वता इति पर्वतानव-स्थाप्य हिरण्यरजतमणिमुक्ताप्रवालकादिभिरुपशोभयेत् । यद्दहः संप्रय-तीरिति । सामन्दसानेति नदीः कल्पयित्वा रसैश्च परिपूरयेत् । अपरमग्र-मसि समुद्रन्त्वाभ्यवसृजामीति समुद्रान् वनस्पतिः सह देवै*र्नआयग-न्निति बृहस्पतिर्नेति वनस्पतीनन्याँश्च यज्ञे त्वा मनसा सङ्कल्पयेन्मनसा-सङ्कल्पवतीह भवति निधी बिभ्रतीति नमस्कारयित्वा सत्यं बृहस्पत्यनु-वाकोये देवासोदिव्येकादशस्थेति पुण्याहं वाचयेत् । संस्थापयेन्न च दि वो देवकृतेनेत्यभिमन्त्र्य ब्राह्मणेभ्यो दद्याद्दातुरेषास्मैरोहिणीकामं निकामं वा दुःख इति ।

यथा रोहन्ति बीजानि हलाकृष्टे महीतले ।
एवं कामाः प्ररोहन्ति प्रेत्य हि मनसा सदा ॥
सर्वेषामेव दानानां यत्फलं समुदाहृतम् ।
तत् प्राप्नोति च विप्रेभ्यो दत्वा भूमिं यथाविधि ॥

## मत्स्यपुराणे ।

अनेन विधिना यस्तु दद्याद्धेमधरां शुभाम् ।
पुण्यकालेऽतिसंप्राप्ते स पदं याति वैष्णवम् ॥

---

* न प्रागपगन्निति पाठान्तरम् ।

विमानेनार्कवर्णेन किङ्किणीजालमालिना ।
नारायणपुरं गत्वा कल्पत्रयमथो वसेत् ॥
पुत्रपौत्रप्रपौत्राँश्च तारयेदेकविंशतिम् ।
इति पठति य इत्थं यः शृणोति प्रसङ्गा-
दपि कलुषविमानैर्मुक्तदेहः समन्तात् ।
दिवममरवधूभिर्याति संप्रार्थ्यमानः
पदममरसहस्रैः सेवितं चन्द्रमौलेः ॥

इति धरादानविधिः ।

## लिङ्गपुराणे । सनत्कुमार उवाच ।

सुवर्णमेदिनीदानं प्रवक्ष्यामि समासतः ।
पूर्वोक्तं देशकाले तु कारयेन्मुनिभिः सह ॥
लक्षणेन यथापूर्वं कूपे वा मण्डपेऽथ वा ।
मेदिनीं कारयेद्दिव्यां सहस्रेणापि वा पुनः ॥
एकहस्तेन कर्त्तव्या चतुरस्रा सुशोभना ।
सप्तद्वीपसमुद्राद्यैः पर्वतैरपि संयुता ॥
सर्वतीर्थनगोपेता मध्ये मेरुसमन्विता ।
अथ वा मध्यतो द्वीपं नवखण्डं प्रकल्पयेत् ॥
पूर्ववन्निखिलं कृत्वा मण्डले वेदिमध्यतः ।
सप्तभागैकभागेन सहस्राद्विधिपूर्वकम् ॥
ब्राह्मणेभ्यः प्रदातव्या दक्षिणा पूर्वचोदिता ।
सहस्रकलशाद्यैश्च शङ्करं पूजयेच्छिवम् ॥
सुवर्णमेदिनी प्रोक्ता लिङ्गेऽस्मिन् पूर्ववन्मतम् ।

'मुनिभिः' नियतात्मभिर्विप्रैः सहेत्यर्थः । 'सहस्रेण' पलानामिति ज्ञेयं हेम्नः पलसहस्रेणेत्यादि पञ्चपलादूर्ध्वं कुर्यादिति मत्स्योक्तेः । सा च एकहस्तमिता चतु-

रक्षा सप्तद्वीपवती कार्या । अथ वेति पक्षान्तरं स्वल्पद्रव्याभिप्रायं तदेवाह 'सप्रभागैकभागेन' । 'सहस्रादिति' सहस्रसप्तमांशेन 'नवखण्डं जम्बुद्वीपमात्रां कल्पयेदित्यर्थः । 'ब्राह्मणेभ्य इति' बहुत्वमनेकाग्निपक्षविषयम् । 'पूर्ववदिति' लिङ्गपुराणोक्ततुलापुरुषदानवदित्यर्थः ।

कालोत्तरे ।

पृथिवीदानमेवात्र श्रृणु लेशेन षण्मुख ।
उत्तमा मध्यमा कन्या पृथिवी त्रिविधा मता ॥
शतार्धकोटिविस्तारा तूत्तमा परिकीर्त्तिता ।
सप्तद्वीपावसाना तु मध्यमा समुदाहृता ॥
जम्बुद्वीपावधिः कन्या त्रिविधां परिकल्पयेत् ।
उत्तमा पञ्चभिर्भारैः काञ्चनेन प्रकल्पयेत् ॥
सहस्रद्वितयेनैव कन्या द्वादशपर्वताः ।
तदर्धात् तारजं कूर्मं तथा पद्मं समादिशेत् ॥

द्वादशपर्वतास्तु कालोत्तरोक्तरत्नमेरुदाने द्रष्टव्याः । तारजं रूप्यकृतम् ।

उत्तमा कथिता पृथ्वी त्र्यंशेन मध्यमा मता ।
कन्यकाऽत्र त्रिभागेन त्रिहान्या कूर्मपङ्कजे ॥
ऋग्यजुःसामगानां तु शिवभक्तेषु* निक्षिपेत् ।
चतुष्पादषट्पदार्थसंहितापाठकाय च ॥
तस्य पादः प्रदातव्यः पृथ्वीकूर्मकजेषु च ।
शेषेषु च यथान्यायं ज्ञानं ज्ञात्वा निवेदयेत् ॥
सूर्यस्य ग्रहणे वत्स शिवस्याग्रे निवेदयेत् ।
मेरुवत् कल्पयेत् तत्र पर्वतांश्च त्रयोदश ॥
सहस्रेण पलानां तु तत्र मेरुं प्रकल्पयेत् ।

---

* निर्वपेदिति पाठः पुस्तकान्तरे ।

सहस्रद्वितयेनैव कल्प्या द्वादशपर्वताः ॥
चतुःशतसमायुक्ताः प्रत्येकं तु ग्रहाः स्मृताः ।
तथैव राशयः कल्प्या नक्षत्राणि तदर्धतः ॥
द्वीपाश्च ग्रहवत् कल्प्या जम्बुसंज्ञादिकास्ततः ।
क्षाराद्यस्तु तथा सप्त देवयोन्यष्टकं तथा ॥
मृगाद्याश्च यथा यद्वद्भुवो ब्रह्मादयस्तथा ।
पातालसप्तकं कल्प्यं भूर्लोकादि च सप्तकम् ॥
सहस्रखण्डं कूर्मं च नवखण्डं कजोद्भवम् ।
एवं कल्प्यं शिवस्याग्रे शिवविप्रेषु दापयेत् ॥
सुव्रतेष्वहृताङ्केषु वेदसिद्धान्तवेदिषु ।
दातव्या पृथिवी तेषां बहुरूपं स्मरँस्तथा ॥

बहून्यघोरघोरतराणि रूपाणि यस्यासौ 'बहुरूपः' अघोरमन्त्रः ।

अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः सर्वतः शर्वसर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः ।

राहुणा गृह्यमाणे तु सूर्यबिम्बे तु निर्वपेत् ।
एवं सङ्कल्प्य विधिवच्छिवस्याग्रे प्रदापयेत् ॥
परमाणवो यावन्तो ब्रह्माण्डस्य भवन्ति हि ।
तावत्कल्पसहस्राणि शिवलोके महीयते ॥
पितरस्तस्य नन्दन्ति वल्गन्ति च यथासुखम् ।
रुद्रायुर्यावदन्ते च रुद्रलोके वसन्ति च ॥
महीभुजस्तदन्ते तु शिवभक्त्या भवन्ति हि ।
मोक्षः प्रजायते तेषां शिवभावानुदीक्षया ॥

इति सुवर्णपृथिवीदानविधिः ।

**सूत उवाच ।**

अतः परं प्रवक्ष्यामि युष्माकं मुनिसत्तमाः ।

जम्बुद्वीपप्रदानाख्यं महादानमनुत्तमम् ॥
यस्य प्रदानान्मनुजो वैष्णवं लोकमाप्नुयात् ।
सर्वपापक्षयकरं सर्वमङ्गलकारकम् ॥
आरोग्यश्रीकरं चैवमायुर्वर्धनमुत्तमम् ।
भुक्तिदं मुक्तिदं नृणामभीष्टफलदं शुभम् ॥
यथाऽऽह भगवान् शम्भुः पृष्टः पर्वतकन्यया ।
तथेदं संप्रवक्ष्यामि युष्माकं मुनिसत्तमाः ॥
ईशमासीनमेकान्ते कैलासे हिमवत्सुता ।
प्रणिपत्य जगन्नाथं पर्यपृच्छत सादरा ॥
भगवन् किं नरैः कार्यं सर्वदुःखनिवारणम् ।
अनायासेन देवेश सर्वमङ्गलकारकम् ॥
इत्येवमुक्तः पार्वत्या पिनाकी वृषभध्वजः ।
यथाऽऽह भगवान् देव्यै तत्सर्वं कथयामि वः ॥

ईश्वर उवाच ।

शृणु देवि महादानं जम्बुद्वीपाह्वयं तु तत् ।
यथाह भगवानद्य पद्मयोनिर्जनार्दनः ॥
पुण्येऽह्नि पुण्यनक्षत्रे पुण्यकाले तु सर्वतः ।
विषुवत्ययनादौ च ग्रहणे चन्द्रसूर्ययोः ॥
व्यतीपातेऽथ वा कुर्याज्जन्मर्क्षे वा विशेषतः ।
अष्टम्यां पञ्चदश्यां वा नित्यं वा दानमाचरेत् ॥
पुण्यदेशेषु सर्वेषु नदीदेवालयादिषु ।
दानं गृहे वा दातव्यं श्रद्धा वा यत्र जायते ॥
विप्रं तु वेदविदुषं गुरुं सम्पूज्य यत्नतः ।
भूलेपनादि यत् कार्यं सर्वं विप्रेण कारयेत् ॥

विलेपयेत् सर्वभूमिं गोमयेन सवारिणा ।
तत्र विंशतिहस्तं तु लेपयेत् परिमण्डलम् ॥
लवणेनोदधिं तत्र परितः परिकल्पयेत् ।
प्रादेशमात्रं विस्तारादष्टद्रोणेन पार्वति ॥
तत्राक्षतान् निर्विकिरेत् श्वेतपुष्पैः समन्ततः ।
तन्मध्ये कारयेन्मेरुं धान्यभारत्रयेण वै ॥

मेरुर्महाव्रीहिमयस्तु मध्ये
सुवर्णकल्पद्रुमसंयुतः स्यात् ।
पूर्वेण मुक्ताफलवज्रयुक्तो
याम्येन गोमेदकपुष्परागैः ॥
पश्चाच्च गारुत्मतनीलरत्नैः
सौम्येन वैदूर्यसरोजरागैः ।
श्रीखण्डखण्डैरभितः प्रवाल-
लतान्वितः शुक्तिशिलातलः स्यात् ॥
शुक्लाम्बराण्यम्बुधरावली स्यात्
पूर्वेण पीतानि च दक्षिणे तु ।
वासांसि पश्चादथ कर्बुराणि
रक्तानि चैवोत्तरतो घनाली ॥
ब्रह्मा तु मध्ये कमलासनस्थ-
श्चतुर्मुखः काञ्चननिर्मिताङ्गः ।
चतुर्भुजश्चात्र निवेशनीयो
दधत् स्रुचं चात्र कमण्डलुं च ॥
तथाऽक्षसूत्रं जपसाधनं च
कृष्णाजिनं चोपरितश्च बिभ्रत् ।

गङ्गां चतुर्धा पतितां निधाय
　चतुर्दिशं चोदकपूर्णरूपाम् ॥
रौप्यान् महेन्द्रप्रभृतीनथाष्टौ
　संस्थाप्य लोकाधिपतीन् क्रमेण ।
नानाद्विजौघानि च राजतानि
　मृगाश्च सर्वत्र निवेशनीयाः ॥
पूर्वेण मन्दरगिरिर्यवतण्डुलाभ्यां
　शुक्लाम्बरेण परितः परिवेष्टितान्तः ।
प्लक्षेण काञ्चनमयेन वृषेण तद्व-
　द्रौप्येण वृक्षमृगपक्षियुतो विधेयः ॥
याम्येन गन्धमदनोऽत्र गिरिस्तु कार्यो
　मुद्गैश्च जम्बुतरुणा च हिरण्मयेन ।
हैमेन यक्षपतिना च विराजमानः
　पीताम्बरेण परितः परिवेष्टितश्च ॥
पश्चात् तिलाचलमथोपरि कर्बुराभं
　वासः सपिप्पलहिरण्मयहंसयुक्तम् ।
आकारयेद्विपुलभन्द्रसुगन्धपुष्पं
　रौप्येण शक्तिघटितेन विराजमानम् ॥
संस्थाप्य तं विपुलशैलमथोत्तरेण
　शैलं सुपार्श्वमपि माषमयं सुवस्त्रम् ।
न्यग्रोधवृक्षमपि हेममयं सुधेनुं
　रौप्यैश्च शक्तिघटितैश्च शुभं विधाय ॥
मेरोश्च पुष्पाभरणं च कार्यं
　घृतोदकं प्रश्रवणं च दिक्षु ।

क्षीराज्यदध्ना मधुना सरांसि
प्रागादि तेषां च यथाक्रमेण ॥
हिमहेमकूटनिषधाः क्रमतश्च याम्ये
सौम्ये च नीलसितशृङ्गयुताः क्रमेण ।
प्रादेशमात्रं परिनिःसृतास्ते
प्रागायता ह्युपरि* वस्त्रयुताश्च सर्वे ॥
प्रत्येकमत्र वर्षच्छदपर्वतानां
भारेण धान्यपरिमाणमुशन्ति सन्तः ।
शक्त्या च रौप्यकृतपक्षयुताश्च सर्वे
सौगन्धिपुष्पफलवस्त्रयुता विधेयाः ॥

आनीलनिषधायामौ माल्यवद्गन्धमादनौ ।
तेषां मध्यगतो मेरुस्तौ च धान्यविनिर्मितौ ॥
निषधः पारिजातश्च मर्यादापर्वताविमौ ।
मेरोः पञ्चमभागेन यथा तौ गन्धमादनौ ॥
गन्धमादनशैलोऽसौ पूर्वपश्चाद्यथाविधौ ।
श्वेततण्डुलनिर्माणौ दक्षिणोत्तरतः स्थितौ ॥
सितान्तःप्रमुखाः सर्वे दक्षिणे ककुभादयः ।
शङ्खकूटादयश्चैव उत्तरे परिकीर्त्तिताः ॥
ताँस्त्रीन् केशरशैलाँश्च कृत्वा धान्यमयान् शुभान् ।
वस्त्रैरावेष्ट्य शैलेन्द्रं मेरुमन्याँश्च वेष्टयेत् ॥
दक्षिणं भारतं वर्षं तत् किंपुरुषसंवृतम् ।
हरिवर्षं ततः प्रोक्तं मेरोर्दक्षिणतस्ततः ॥

---

* प्रागायमाह्युपरीति क्वचित् पाठः ।

इलावृतं वृतं मेरोश्चतुर्थं वृषभं तथा ।
रम्यं हिरण्मयं तस्मात् कुरवश्चेति चोत्तराः ॥
भद्राश्वः केतुमालश्च पूर्वपश्चिमतः स्थितौ ।
प्रोक्तानि नववर्षाणि जम्बुद्वीपे तु नामतः ॥
हिमाद्रिमध्ये देवेशं श्रियं च विनिवेशयेत् ।
प्रासादाभिमुखावेतौ काञ्चनेन विनिर्मितौ ॥
शङ्खचक्रगदापाणिं पीतवाससमच्युतम् ।
किरीटकेयूरधरं श्रीवत्साङ्कितवक्षसम् ॥
पद्मासने समासीनां पद्महस्तां सुलोचनाम् ।
प्रसन्नवदनां देवीं तस्य दक्षिणतो न्यसेत् ॥
कैलासमध्यतो मां च त्वां चैव विनिवेशयेत् ।
मां च शङ्करनामानं त्वां च गौरीं वरानने ॥
चतुर्भुजं वृषस्थं च जटिलं चन्द्रमौलिनम् ।
खट्वाङ्गशूलवरदाभयहस्तं च मां न्यसेत् ॥
मदुत्सङ्गगतां त्वां च दर्पणेन्दीवरान्विताम् ।
भद्राश्वे भगवन्तं च हयरूपमुखं हरिम् ॥
सौवर्णं स्थापयेद्देवं भारते कूर्मरूपिणम् ।
वाराहं केतुमाले वै मत्स्यं कुरुषु चोत्तरे ॥
सौवर्णानथ वा रौप्यान् स्थापयेत् तु यथाक्रमम् ।
एवं जम्ब्वाह्वयं* द्वीपं कृत्वा चैव यथाविधि ॥
अर्घपाद्यासनं स्नानं यथावत् स्थापनं क्रमात् ।
ब्रह्मादयस्तथा देवाः शैलाः कल्पद्रुमास्तथा ॥
स्वनाममन्त्रैः पूजार्हा नमस्कारान्तदीपितैः ।

---

* एवं लब्ध्वाद्भूयर्मिति पुस्तकान्तरे पाठः ।

गन्धपुष्पनमस्कारधूपदीपफलैस्तथा ॥
तथोपहरणाद्यैश्च पूजयित्वा प्रयत्नतः ।
भद्राश्ववर्षे होमं तु सर्पिषा च समाचरेत् ॥
स्वनाममन्त्रैर्होतव्यं स्वाहाकारसमायुतैः ।
दशोत्तरशतं हुत्वा ब्रह्मणे मेरवे तथा ॥
इतरेषां च सर्वेषामष्टोत्तरशताहुतीः ।
स्नानार्थं यजमानस्य पुरतः कलशं न्यसेत् ॥
आढकोदरपूर्णं तु स्वकूर्चं वस्त्रवेष्टितम् ।
गन्धाः सुमनसस्तस्य कुशाग्रान् विनिवेशयेत् ॥
याश्च श्रेयो विधास्यन्ति ताश्चात्रावाहयेत् ततः ।
गङ्गाद्याः सरितः सर्वाः समुद्राश्च सरांसि च ॥
आयान्तु यजमानस्य दुरितक्षयकारकाः ।
इत्यावाह्य ततस्तस्य कलशं विमलोदकम् ॥
अभ्यर्च्य गन्धपुष्पाद्यैः स्थापयेत् प्रीतिपूर्वकम् ।
स्नापयेत् प्राङ्मुखं तत्र दातारं कलशोदकैः ॥
ऋग्भिर्वरुणदेवीभिः पावमानीभिरेव च ।
दानकाले च संप्राप्ते दाता नारी नरोऽथ वा ॥
स्नापितो गुरुणा तेन सार्धं दानं समाचरेत् ।
त्रिः प्रदक्षिणमावृत्य गृहीतकुसुमाञ्जलिः ॥
प्रत्येकं पर्वतान् सर्वान् प्रणिपत्य पुरःसरम् ।
मध्यमं गुरवे दद्यादिमं मन्त्रमुदीरयेत् ॥
अन्यस्मै वा प्रदातव्यं तस्यानुज्ञामवाप्य च ।

यथा च भूरादिसमस्तलोका-
स्त्वयि स्थिता भूधरराज नित्यम् ।

अमी सुरा असुरा लोकनाथा
ब्रह्मादयो देवगणाश्च नित्यम् ॥
त्वत्संप्रदानादहमप्यशेषैः
पापैर्विमुक्तस्तु यथा भवेयम् ।
श्रेयस्तथा पर्वतराज मह्यं
कुरु प्रभो देववरैश्च सार्धम् ॥
इतीदमुक्त्वा प्रददेत् तु मेरुं
सकाञ्चनं राजतवस्त्रयुग्मम् ।
प्रत्येकमेकं द्विजपुङ्गवानां
प्रागादि दद्यादितरान् क्रमेण ॥
सुरासुराणाममृतार्थसिद्ध्यै
कृतं त्वया मन्दरशैल साह्यम् ।
तथा च मां रक्ष च सवतस्त्वं
तव प्रसादाद्विरजा यथाऽहम् ॥
गन्धादिमादन इतीरितभूधरेन्द्र
वेदे तवापि गरुडाय नमोऽस्तु तुभ्यम् ।
त्वत्संप्रदानहतपापसमस्तदोषं
छायाधिशैलवर रक्ष च मामजस्रम् ॥
देवालयाय विपुलाय नमोऽचलाय
हंसाय वेदपुरुषाय नमोऽच्युताय ।
युष्मत्प्रदाननिहताखिलपापराशिं
हंसेन सार्धममराचल पाहि मां त्वम् ॥
वन्दे सुपार्श्वममराचलमप्रमेयं
धेनुं च देवसुरभिं प्रणतोऽस्मि नित्यम् ।

त्वद्ध्यानभक्तियुतसत्क्रियया ऽहमद्य
त्वामेव यामि शरणार्थमवेहि मां त्वम् ॥
श्रीवत्सवक्षसमनादिमजं समस्त-
लोकाधिपं सकलकारणमच्युतं च ।
नारायणं शरणमेमि धराधरेन्द्रैः
सार्धं श्रिया हिमवतः स्थितिमादिमीडे ॥
देवाय देवगणपूजितपादपद्म-
युग्माय भक्तजनदुःखविनाशनाय ।
कैलासशैलनिलयाय भवाय नित्यं
गौरीप्रियाय वरदाय नमः शिवाय ॥
चक्री त्वनादिनिधनः शरणागतं मां
भद्राश्वनामनि गतो हरिरच्युतो ऽसौ ।
आस्ते हयाननवपुः सनकादियोगि-
पूगैरभिष्टुतपुरातनकीर्त्तियुक्तः ॥
मध्ये महार्णवहिमाचलयोर्निषण्णं
कूर्माकृतिं शरणमेमि भवाभवाय ।
पारावरं मथितमत्र सदा दधाति
यस्त्वं नमामि सुरपूजितमप्रमेयम् ॥
वाराहरूपिणमनन्तमनन्तकेतुं
लोकस्वरूपिणमनेकशिरो ऽक्षिपादम् ।
वन्दे महीधरममेयमपारकीर्त्तिं
यक्षेशमेमि शरणं हरमीशितारम् ॥
देवस्तथोत्तरकुरुष्वपि नित्यमास्ते
मत्स्यः सुरेन्द्रगणपूजितपादपद्म ।

रक्षत्वशेषजगतां पतिरच्युतोऽसौ
संसारदुःखचलितं शरणागतं माम् ॥
उक्त्वैवमात्ममघनाशनदानमन्त्रं
प्रत्येकमेकं द्विजपुङ्गवानाम् ।
भुक्त्वा शुभानि मनसेच्छति यानि वाऽसौ
गच्छेच्च यत्र न निवर्त्तयतीह मर्त्यः ॥
गुरवे दक्षिणां दद्यात् सुवर्णं चैव वाससी ।
यागोपकरणं सर्वं गुरवे विनिवेदयेत् ॥
इत्याह भगवान् प्रीतः पार्वत्या परमेश्वरः ।
अहमप्यब्रुवं सर्वं युष्माकं मुनिसत्तमाः ॥

इति ब्रह्माण्डपुराणोक्तो जम्बुद्वीपदानविधिः ।

ब्रह्मोवाच ।

शृणु देव मुने दानं सप्तद्वीपाह्वयं च तत् ।
यत् कृत्वा पृथिवीदानफलं सर्वमुपाश्नुते ॥
पुण्यकालेषु सर्वेषु चन्द्रसूर्यग्रहादिषु ।
देवागारादिदेशेषु पुण्येष्वायतनेषु च ॥
विप्रं गुरुं वेदविदं च दक्षं विद्याप्रदं वृणुयात् तत्र पूर्वम् ।
स कारयेच्चैव तदङ्गकार्यमृते दानं गुरुणाऽनेन सर्वम् ॥
समां भूमिं लिम्पयेद्गोमयेन सवारिणा शुचि तत्रापि मध्ये ।
कृत्वा द्वीपं जम्बुसंज्ञं यथावत् तद्बाह्ये च प्लक्षनामा निबद्धः ॥
जम्बुप्लक्षाह्वयौ द्वीपौ शाल्मलश्च तथाऽपरः ।
कुशः क्रौञ्चश्च शाकश्च पुष्करश्चैव सप्तमः ॥
एते द्वीपाः समुद्रैश्च सप्त सप्तभिरावृताः ।
लवणेक्षुसुरासर्पिर्दधिदुग्धजलैः समम् ॥

जम्बुद्वीपः समस्तानामेतेषां मध्यमः स्मृतः ।
तस्यापि मेरुर्देवर्षे मध्ये कनकपर्वतः ॥
प्लक्षद्वीपस्य विस्तारः षोडशाङ्गुल इष्यते ।
पादाधिकस्तथाऽन्येषामुत्तरोत्तरमुच्यते ॥
षोडशद्रोणधान्यैश्च प्लक्षद्वीपं प्रकल्पयेत् ।
ततः पादाधिकं प्रोक्तमन्येषामुत्तरोत्तरम् ।
विस्तार एष द्वीपानामुदधीनां च सर्वशः ॥
प्लक्षादिपञ्चद्वीपेषु वर्षभूधरनिम्नगाः ।
प्रत्येकं सप्तसप्त स्युः श्वेततण्डुलनिर्मिताः ॥
पुष्करे भूधरं त्वेकं मध्यतो वलयाकृतिम् ।
वर्षद्वयं तथा चान्यं नामतः श्रूयतां मुने ॥
प्लक्षे शान्तमयं वर्षं शिशिरं सुखदं तथा ।
आनन्दं च शिवं चैव क्षेमकृत् सुख*मेव च ॥
गोमेदपर्वतश्चान्द्रो नारदो दुन्दुभिस्तथा ।
सोमकः सुमनाश्चैव वैभ्राजः सप्त पर्वताः ॥
अनुतप्ता शिवा चापि अम्बिका त्रिदिवी क्रमात् ।
अमृता सुकृता चैव सप्तैतास्तत्र निम्नगाः ॥
प्लक्षं तु प्रथमे वर्षे मध्यतो विनिवेशयेत् ।
पलेन वा यथाशक्ति तदर्धेन विनिर्मितम् ॥
तत्पार्श्वे देवदेवेशं सर्वलोकगुरुं हरिम् ।
सोमरूपधरं देवं सौवर्णं विनिवेशयेत् ॥
श्वेतो हरितजीमूतौ रोहितो वैद्युतस्तथा ।
नम्रतः सुप्रभः सप्त वर्षाण्येते च पर्वताः ॥

---

* तदध्रुवमिति नवीनप्रथमपुस्तकपाठान्तरम् ।

कुमुदश्चोदनश्चैव तृतीयश्च वलाहकः ।
कङ्कश्च महिषश्चैव ककुद्मान् सप्तमो गिरिः ॥
योनिस्तोया वितृष्णा च चन्द्रा शुक्ला च मोचनी ।
विवृत्तिः सप्त नद्यश्च शाल्मले परिकीर्त्तिताः ॥
उद्भिदो वेणुमांश्चैव सुरत्नो लवणो धृतिः ।
प्रभाकरश्च कपिलः पर्वतान् शृणु नारद ॥
मणिद्रुमो हैमशैलो द्युतिमान् पुष्पवाँस्तथा ।
कुशोधनश्च हरितो मन्दरः सप्तमस्तथा ॥
धूतपापा शिवा चापि पवित्रा शमिता तथा ।
द्युदम्भा महिषी चैव सर्वपापहरा तथा ॥
कुशस्तम्बं कुशद्वीपे क्रौञ्चे चैतान् निबोध मे ।
वर्षाणि भूधराश्चैव विष्णुश्च पर एव च ॥
अन्धकारो मुनिश्चैव दुन्दुभिः सप्तमस्तथा ।
क्रौञ्चश्च* वामनश्चैव अन्धकारोऽथ पञ्चमः ॥
पुण्डरीको दुन्दुभिश्च सप्तैते स्युरिहाचलाः ।
गौरी कुमारी सन्ध्या च रात्रिश्चैव मनोजवा ॥
यक्षादिः पुण्डरीकश्च सप्तसप्त उदाहृताः ।
शाकमध्ये शाकवृक्षो वर्षप्लक्षे च निम्नगाः ॥
सप्तसप्त च देवर्षे श्रूयतां गदतो मम ।
जलदश्च कुमारश्च सुकुमारो मणीचकः ॥
कुसुमोत्तममोदश्च सप्तमश्च महाद्रुमः ।
उदयो जलधारश्च रैवतश्चानुपर्वताः ॥
पञ्चमोऽभ्रगिरिः शैलो ह्यम्बिका केसरी तथा ।

---

* क्रौधश्चेति नवीनप्रथमपुस्तकपाठः ।

सुकुमारी कुमारी च नलिनी वेणुका तथा ॥
इन्दुका रेणुका चैव गभस्तिः सप्तमी तथा ।
पुष्करे तु महापद्मो धातकीति प्रकीर्त्तितौ ॥
मध्यतो वलयाकारो मानसोऽत्र च पर्वतः ।
न्यग्रोधवृक्षः पूर्वे तु ब्रह्मणः स्थानमुच्यते ॥
सप्तमः पुष्करद्वीपस्तद्वद्देवसमावृतः ।
एवं द्वीपाः समुद्रैश्च सप्त सप्तभिरावृताः ॥
द्वीपैश्चैव समुद्रैश्च समाना द्विगुणाः परे ।
द्वीपमानान् द्रुमान् सर्वान् राजतान् विनिवेशयेत् ॥
तथा पक्षिमृगान् मत्स्यान् पर्वतोदधिषु क्षिपेत् ।
जम्बुद्वीपाधिपं विष्णुं तत्र चैव निवेशयेत् ॥

प्लक्षे सोमं शाल्मले वायुरूपं कुशद्वीपे ब्रह्मरूपं पुराणम् ।
क्रौञ्चे रुद्रं शाकसंज्ञेऽथ सूर्यं ब्राह्मं रूपं पुष्करे देवदेवम् ॥
कृत्वा चैकं बहुधा चारुमूर्त्तिं हिरण्यजं जगतामीशमाद्यम् ।
प्रक्षाल्य पूतेन जलेन मन्त्रैः संप्रोक्ष्य दर्भैश्च निधाय देवान् ॥
संवेष्ट्य वस्त्रैश्च धराधरेन्द्रान् समन्ततो विकिरेत् पुष्पवृष्ट्या ।
अर्घादिभिर्हव्ययुतैश्च हस्तैः संपूज्य मेरुं प्रमथांश्च सर्वान् ॥
स्वनाममन्त्रैश्च नमोयुतैश्च स्वाहायुतैः पूर्ववद्धोममन्त्रः ।
यथा पुरा तत्र तथैव कुर्याद्देवाधिशैलेन्द्रवनस्पतीनाम् ॥
पूर्वेद्युरेवं विधिना समाप्य गुरुश्च तत्राधिवसेन्निशायाम् ।
निशासु वेदानुमतस्तथैव वस्त्रादिदानं च ततः क्रमेण ॥
ततः प्रभाते विमले तु दानकाले तदा स्नापितो धौतवस्त्रः ।
यथा पूर्वं जम्बुसंज्ञस्य चोक्तं तथा दानं सादरं कारयित्वा ॥
ततो विप्रान् पूज्य तेषां क्रमेण तां दापयेन्मन्त्रपूर्वं तथैव ।

सोमं वायुं ब्रह्मरूपं च चन्द्रं तथा सूर्यं ब्रह्मणो रूपमाद्यम् ॥

वीरुधौषधिवृक्षाणां मृगाणां जगतां प्रभो ।
आह्लादजननो यस्मात् तस्मात् त्वं पाहि मां सदा ॥
अन्तर्बहिश्च तत्सर्वं व्याप्य यो जगति स्थितः ।
सदागतिरमेयात्मा रक्ष त्वं व्याहृतस्तु माम् ॥
यः कर्त्ता जगतां पाता ब्रह्मा लोकपितामहः ।
त्वत्संप्रदानाद्देवेश श्रेयश्चास्तु सदा मम ॥
रक्षार्थं देवदेवानां जगतामपि शङ्कर ।
त्वया तु त्रिपुरं दग्धं सदा मे संप्रसीद तत् ॥
उदेत्यस्तमनं याति नित्यं पाति जगत्त्रयम् ।
प्रत्यक्षं सर्वलोकानां योऽसौ मे संप्रसीदतु ॥
सृष्टिस्थितिविनाशानां कारणं जगतामसौ ।
हिरण्यगर्भो भगवान् सदा मे संप्रसीदतु ॥

इत्येवमेव विधिभिर्द्विजपुङ्गवानां प्रत्येकमेकं च यथाक्रमेण ।
दद्यात् तदा गुरवे दक्षिणां च वासः सुवर्णादधिकं सुवर्णम् ॥
कृत्वा सप्तद्वीपपर्यन्तभूमिं दत्त्वा देवान् जातरूपान् क्रमेण ।
दद्यात् तस्मै गुरवे दानशेषं साङ्गोपाङ्गं धान्यवस्त्रादि सर्वम् ॥
आदावन्ते पञ्चभिर्विप्रवर्यैः पुण्याहं च स्वस्तिमृद्धिं च वाच्यम् ।
दद्यात् तेभ्यो दक्षिणां जातरूपं वासो धान्यं भोजयेद्ब्राह्मणाँश्च ॥

सप्तद्वीपाह्वयं दानमेवं कृत्वाऽथ नारद ।
नारी वा पुरुषो वाऽथ वैरिञ्चिं लोकमाप्नुयात् ॥
उवाच नारदायैवं भगवान् लोकभावनः ।
यथा मयाऽपि तत् सर्वं प्रोक्तं वै मुनिसत्तमाः ॥

इति ब्रह्माण्डपुराणोक्तः सप्तद्वीपदानविधिः ।

पुलस्त्य उवाच ।

तत्रासीना मुनयः शौनकाद्यास्ते चारण्ये नैमिषे सत्रयागे ।
सुखासीनं सूतसूनुं तदानीं गत्वाऽपृच्छन् यज्ञकर्मावसाने ॥
उग्रश्रवः परिपृच्छामहे त्वां किं कृत्वाऽसौ पुरुषो वाऽथ नारी ।
आयुश्च सर्वं लभतेऽथ रोगैर्विमुच्यते भूतिमुपैति चाग्र्याम् ॥
दुःस्वप्रणाशं* ग्रहभीतिनाशं दृष्टं तथा त्रिविधे चाद्भुते वा ।
अथान्यद्वा भयदोषप्रशान्तिमभीष्टसिद्धिं प्रददाति कर्त्तुः ॥
दानं व्रतं देवताभ्यर्च्चनं वा किं तत् कृत्वा कृतकृत्यो भवेत् सः ।
शुश्रुषवस्तव वाक्यं च यत् तु वदास्माकं सूत दानानि विद्वन् ॥
इत्येवमुक्तो मुनिभिस्तदानीमुग्रश्रवाः प्रत्युवाचाथ तेषाम् ।
शृणुध्वं वः कथयिष्याम्यहं तत् त्वेवं भूतं पृथिवीपद्मदानम् ॥
देवागारे नदनद्योस्तु तीरे गृहेऽन्यस्मिन् पुण्यदेशे च कुर्यात् ।
तडागे वा नन्दने वाऽथ कुर्यादारामे वा रमते यत्र चेतः ॥
विप्रं गुरुं वेदपुराणदक्षं सङ्गृह्य वै तानि क्रमादरेण ।
दद्यात् तु तस्मै गुरवेऽथ वासो युगं शुभं काञ्चनभूषणानि ॥
अलङ्कृतोऽसौ प्रकरोति सर्वमृते दानं किञ्चिदिहास्ति कार्यम् ।
गव्येन भूमिं शकृता जलेन चालेपयेद्विंशतिहस्तमात्राम् ॥

कूटं वर्षातपत्राणां समं प्राक्प्लवमेव वा ।
षोडशारत्निमात्रं तु चतुरस्रं प्रकल्पयेत् ॥
यथेष्टं तत्र कुर्याद्वै स्तम्भाँश्च परिकल्पयेत् ।
चतुर्द्वारसमायुक्तं चतुस्तोरणभूषितम् ॥
दर्भमालापरिवृतं मङ्गलाङ्कुरशोभितम् ।
वितानेनोपरिच्छन्नं शुभेन सितरूपिणा ॥

* दुःस्वप्ननाशमिति क्वचित् पाठः ।

परितो लोकपालानां ध्वजांश्च परिकल्पयेत् ।
वस्त्रैरावेष्टयेत् स्तम्भाँश्चतुर्दिक्षु विचक्षणः ॥
लम्बयेत् पुष्पमालाश्च सर्वतः स्तम्भसन्धिषु ।
प्रागुदक्प्रवणां भूमिं गोमयेनोपलेपयेत् ॥
एवं कूटप्रपां चाथ पटं वा परिकल्पयेत् ।
मध्ये व्रीहिमयं शैलं महामेरुं प्रकल्पयेत् ॥
मध्यमं दशभारेण* तुरीयांशेन चेतरान् ।
मन्दरं पुरतः कृत्वा दक्षिणे गन्धमादनम् ॥
विपुलं पश्चिमे शैलं सुपार्श्वं चोत्तरेऽचलम् ।
विष्कम्भपर्वतौ द्वौ तु पूर्वपश्चिमभागयोः ॥
परितश्चान्तरे वर्षपर्वताः समुदाहृताः ।

विष्कम्भपर्वतौ मन्दरगन्धमादनावेवाभिप्रेतौ वर्षपर्वतास्तु धरादानोपदिष्टा द्रष्टव्याः ।

जम्बुप्लक्षाह्वयौ द्वीपौ शाल्मलश्च तथा परः ।
कुशं क्रौञ्चश्च शाकश्च पुष्करं चैव सप्तमम् ॥
लवणेक्षुसुरासर्पिर्दधिदुग्धजलैः समम् ।
एवं द्वीपाः समुद्रैश्च सप्त सप्तभिरावृताः ॥
एवं व्रीहिमयान् शैलान् पत्रिणः कारयेत् तथा ।
भारार्धेनाथ वा शैलानितरान् परिकल्पयेत् ॥

'इतरान्' वर्षपर्वतानित्यर्थः ।

संवेष्ट्य शैलान् वासोभिः सर्वानेव महोदधीन् ।
चतुरश्चतुरः पात्रान् तत्तद्द्रव्येण संविशेत् ॥

---

* तृतीयांशेनेति क्वचित् पाठः ।

मन्दारं पारिजातं च सन्तानं हरिचन्दनम् ।
मेरोरुपरि सौवर्णान् चतुर्दिक्षु निवेशयेत् ॥
तन्मध्ये कल्पवृक्षं च सौवर्णं कमलासनम् ।
ब्रह्माणं द्विभुजं देवं प्राङ्मुखं विनिवेशयेत् ॥
मेरुशृङ्गाणि चत्वारि राजतानि प्रकल्पयेत् ।
सौवर्णं मादनं प्लक्षं मन्दरे विनिवेशयेत् ॥
हिरण्यं गरुडं जम्बुगन्धमादनपर्वते ।
सौवर्णं च पुरोहंसमश्वत्थं परिकल्पयेत् ॥
सुपार्श्वे सुरभीं हैमीं न्यग्रोधं च निवेशयेत् ।
राजतानपि सर्वेषु मृगपक्षिमहीरुहः ॥
इक्षुचन्दनखण्डानि सर्वेषु विनिवेशयेत् ।
द्वारेषु कुम्भौ जलवस्त्रयुक्तौ फलैर्युतौ चन्दनखण्डयुक्तौ ।
कोणेषु पूर्णं कलशं तथैव चतुर्दिशमिक्षुरसं निधाय ॥
कृत्वैवमद्रिप्रवराँश्च देवानाराधयँश्चन्दनपुष्पधूपैः ।
स्वनाममन्त्रैश्च नमोऽन्तरूपैरभ्यर्च्य सर्वानथ विप्रमुख्यान् ॥
सार्धं तथा गुरुणा पञ्चभिस्तैः पुण्याहकं स्वस्तिमृद्धिं च वाच्यम् ।
ततोऽत्र होमं गुरुरेव कुर्यात् पूर्वोत्तरस्यां दिशि भूधराणाम् ॥
अग्निं समाधाय घृतेन दध्ना जुहोति देवाय च नाम चोक्त्वा ।
तथा गिरीणामपि नाममन्त्रैर्दशाहुतीरधिकं चैवमेकम् ॥
पूर्वेद्युरेवं गुरुरेव कृत्वा निशां तथा जागरणं च कुर्यात् ।
रक्षोघ्नमन्त्राँश्च जपन् स आस्ते ततः प्रभाते विमले प्रकर्त्ता ॥
प्राप्ते पुण्ये दानकाले प्रदाता कुशोदकैस्तिलमिश्रैश्च विद्वान् ।
स्नात्वा शुचिर्गुरुणा प्रोक्षितोऽसौ तथा मन्त्रैर्वारुणैः पावमानैः ॥
दद्यात् पुष्पाञ्जलिं तत्र मेरोः कृत्वा प्रदक्षिणम् ।

संपूज्य दद्याद्विप्राय गुरवे वाहिताग्नये ॥
यस्मात् त्वं लोकपालानां ब्रह्मणः परमेष्ठिनः ।
आवासः सर्वदेवानां तस्मान्मां पाहि सर्वतः ॥
यस्मात् त्वं क्षितिपद्मस्य कर्णिकारं महीधर ।
तस्मात् त्वं सर्वदा ह्यस्मच्छ्रेयांसि प्रददस्व वै ॥
इति दद्यान्महामेरुं विप्राय विदुषे ततः ।
प्रागाद्युत्तरपर्यन्तान् विप्रेभ्यः प्रतिपादयेत् ॥
प्रत्येकमेकं विदुषां चतुर्णां प्रतिकल्पयेत् ।
दद्यात् पुष्पाञ्जलिं चैव कृत्वा चापि प्रदक्षिणम् ॥
यस्मात् त्वं मदनावासो देवानामपि पर्वत ।
संप्रीयतां मे भगवान् मन्दरः पर्वतोत्तमः ॥
यस्मात् त्वं गरुडावासः सदा देवालयाचलः ।
संप्रीयतां मे भगवान् गन्धमादनपर्वतः ॥
यस्मिन्नश्वत्थवृक्षस्थो हंसरूपी सदा वसेत् ।
तस्मात् संप्रीयतां मह्यं विपुलः पर्वतोत्तमः ॥
सुरभिस्तिष्ठते नित्यं न्यग्रोधो मस्तके तव ।
आरामो देवतानां त्वं सुपार्श्व प्रीतिमान् भव ॥
इत्येवं पृथिवीपद्मदानं दानोत्तमं तथा ।
दत्वा भुङ्क्तेऽधिकान् भोगान् ब्रह्मसालोक्यमाप्नुयात् ॥
पुण्याहं स्वस्तिमृद्धिं च वाचयेद्गुरुणा सह ।
विद्वद्भिः पञ्चभिर्विप्रैर्दद्यात् तेषां तु दक्षिणाम् ॥
दानोपदेष्ट्रे गुरवे दक्षिणां प्रतिपादयेत् ।
उपदेष्टाऽत्र षष्ठोऽभिप्रेतो वैतानिकस्य तु ॥
गुरोस्तेषां च दद्यात् तु दक्षिणामित्यनेन च ।

इति दक्षिणादानसिद्धेः ।

दानमानसमं निष्कं जातरूपं विधानतः ।
आसनं शयनं वस्त्रं पात्रं भोजनसाधनम् ॥
पानीयसाधनं कांस्यं गुरवे प्रतिपादयेत् ।
एतद्दानेऽप्युपयुक्तं समस्तं दद्यात् तस्मै गुरवे वस्त्रजातम् ।
स्वयं भुङ्क्ते स घृतं पाणिनाक्तं गुरून् विप्रान् भोजयेद्धेष्टवर्गान् ॥
एवं पुरा ऋषये नारदाय जगत्कर्त्ता वाऽब्रवीत् पद्मयोनिः ।
मया चोक्तं पृथिवीपद्मदानं ततः किं च प्रब्रवीमि द्विजेन्द्राः ॥

इति ब्रह्माण्डपुराणोक्तः पृथिवीपद्मदानविधिः ।

शौनक उवाच ।

अन्त्यजागमने मर्त्त्यः पाण्डुरोगी प्रजायते ।
वक्ष्यामि तत्प्रतीकारं दानहोमादिकर्मणा ॥
पलत्रयेण कुर्वीत राजतेन वसुन्धराम् ।
तदर्धेनाथ वा कुर्याद्वित्तशाठ्यं न कारयेत् ॥
सपर्वतवनां कृत्स्नां समुद्रपरिवेष्टिताम् ।
नवरत्नानि निक्षिप्य श्वेतवस्त्रेण वेष्टयेत् ॥
कांस्यपात्रे विनिक्षिप्य पलाष्टकविनिर्मिते ।
देवीमावाहयेत् तत्र सर्वाधारां हरिप्रियाम् ॥
एह्येहि देवि धात्री त्वं रूपेऽस्मिन् सम्यगाविश ।
सहिता पर्वतैर्द्वीपैः समुद्रैः सुमना भव ॥

इत्यावाहनमन्त्रः ।

एवमावाह्य तां देवीं गन्धमाल्यैः समर्चयेत् ।
उपचारैः षोडशभिराचार्यः सर्वशास्त्रवित् ॥
होमं चापि प्रकुर्वीत समिदाज्यतिलैरथ ।
भूमिर्भूमीति मन्त्रेण समिद्धोमः प्रकीर्त्तितः ॥

तथा ।

भूमिर्भूमिमगात्माना मातामातरमित्यपि ।
मन्त्रः प्रकीर्त्तितश्चाग्नौ तिलाज्याहुतिभिर्हुनेत् ॥
अग्नेरुत्तरतश्चापि कुम्भं वस्त्रेण वेष्टितम् ।
स्थापयेदव्रणं शुभ्रमवस्थानादिमृत्तिकाः ॥
प्रक्षिपेच्च ततः शुद्धवारिणा परिपूरिते ।
पवमानादिभिर्मन्त्रैरभिषेकं च कारयेत् ॥
शन्नोदेव्यनुवाकेन शान्तिं चापि प्रकल्पयेत् ।
अभिषिक्तस्य चाङ्गानि वस्त्रेण परिमार्जयेत् ॥
अक्षोभ्यमनुवाकेन यथालिङ्गं सदर्भकम् ।
आचार्याय च तां पृथ्वीं दद्याद्रोगी समाहितः ॥
मन्त्रेणानेन विधिवत् प्राङ्मुखाय ह्युदङ्मुखः ।
धात्री धरित्री भूतानां वराहेणोद्धृता प्रिया ॥
रत्नगर्भसमुद्रैकवसना सर्वशोभना ।
दानेनानेन सुप्रीता पाण्डुरोगं व्यपोहतु ॥

दानमन्त्रः ।

अनेन विधिना दत्त्वा पृथ्वीदानं प्रयत्नतः ।
यज्जातं वैकृतं मर्त्ये ह्यन्त्यजागमनेन तु ॥
तत्सर्वं नाशमायाति पाण्डुरोगादिकं महत् ।
शान्त्यर्थं ब्राह्मणैः सार्धं कुर्यात् पुण्याहवाचनम् ॥

इति पद्मपुराणोक्तः पाण्डुरोगहरः पृथिवीदानविधिः ।

## अथ विश्वचक्रशब्दितं द्वादशं महादानमाख्यायते ।

## मत्स्यपुराणे । मत्स्य उवाच ।

अथातः संप्रवक्ष्यामि महादानमनुत्तमम् ।

विश्वचक्रमिति ख्यातं सर्वपापप्रणाशनम् ॥
तपनीयस्य शुद्धस्य विषुवादिषु कारयेत् ।
ज्येष्ठं पलसहस्रेण तदर्धेन तु मध्यमम् ॥
तस्यार्धेन कनिष्ठं स्यात् विश्वचक्रमुदाहृतम् ।
अन्यद्विंशपलादूर्ध्वमशक्तोऽपि निवेदयेत् ॥
षोडशारं ततश्चक्रं भ्रमन्नेम्यष्टकावृतम् ।
नाभिमध्ये स्थितं विष्णुं योगारूढं चतुर्भुजम् ॥
शङ्खचक्रेऽस्य पार्श्वे तु देव्यष्टकसमावृतम् ।

'अरो नाम' नाभ्यन्तोपक्रमान्तगामी शलाकाकृतिरवयवविशेषः । 'नेमयः' प्रधयो* भ्रमन्त्यो वलयाकारेणावस्थिताः । तासामष्टकेन तुल्यान्तरालेनावृतं वेष्टितम् । 'नाभिपद्मे स्थितमिति' अष्टदलपद्माकारा नाभिस्तत्कर्णिकायाम् । 'योगारूढमिति' हृद्देशावस्थापितहस्तद्वयं पार्श्वस्थितशङ्खचक्रं विष्णुं विन्यस्य दलाष्टकपूर्वादिक्रमेण शक्त्यष्टकं प्रतिष्ठापयेत् ।

## तल्लक्षणं तु नारदीये ।

विमलोत्कर्षिणी ज्ञाना क्रिया योगा तथाऽपरा ।
प्रज्ञा सत्या तथेशाना नवमी वाऽप्यनुग्रहा ॥
सर्वा दक्षिणहस्तेन वरदेन विराजिताः ।
सव्येन चक्रे धारिण्यः स्त्रीरूपाश्चारुभूषणाः ॥

इत्यत्र देव्यष्टकसमावृतमितिवचनान्नवम्या अनुपयोगः ।

द्वितीयावरणे तद्वत् पूर्वतो जलशायिनः ।
अत्रिर्भृगुर्वशिष्ठश्च ब्रह्मा कश्यप एव च ॥
मत्स्यः कूर्मो वराहश्च नरसिंहोऽथ वामनः ।

---

* प्रधीयन्ते काष्ठान्यत्रेति चक्रावयवकाष्ठासज्जनस्थाने रथनाभौ ।

रामो रामश्च कृष्णश्च बुद्धः कल्कीति च क्रमात् ॥

जलशाय्यिप्रभृतीनां लक्षणमुक्तं ब्रह्माण्डदानद्वये ।

मत्स्यादीनां तु पञ्चरात्रे ।

वामे शङ्खं गदां दक्षे द्विभुजो मत्स्यरूपधृक ।
नराङ्घ्रिर्मत्स्यरूपी वा मत्स्यरूपी जनार्दनः ॥

एतदेव कूर्मलक्षणं मत्स्यपदस्थाने कूर्मपदप्रयोगे सति ।

मधुपिङ्गलवर्णं च चतुर्बाह्वायुधैर्युतम् ।
नराङ्गं शूकरास्यं च मनाक्पीनं सुभीषणम् ॥
श्रीर्वामकूर्परस्था तु धरानन्तौ पदानुगौ ।
एतद्रूपधरं देवं वराहं भुक्तिमुक्तिदम् ॥
ज्वलदग्निसमाकारं सिंहवक्त्रं नराङ्गकम् ।
दंष्ट्राकरालवदनं ललज्जिह्वं सुभीषणम् ॥
वृत्ताक्षं जटिलं क्रुद्धमालीढं पीनवक्षसम् ।
अभेद्यतीव्रनखरं वामोरूकृतदानवम् ॥
तद्वक्षो दारयन्तं च कराभ्यां नखरैर्भृशम् ।
गदाचक्रधरं द्वाभ्यां नरसिंहं जगत्प्रभुम् ॥
कुण्डिच्छत्रधरो द्विदोर्वामनः परिकीर्त्तितः ।
क्षत्रान्तकरणं घोरमुद्वहन् परशुं करे ॥
जामदग्न्यः प्रकर्त्तव्यो रामो रोषारुणेक्षणः ।
युवा प्रसन्नवदनः सिंहस्कन्धो महाबलः ॥
आजानुबाहुः कर्त्तव्यो रामो बाणधनुर्धरः ।
शङ्खचक्रधरः कार्यो नीलोत्पलदलच्छविः ॥
कृष्णो दीर्घद्विबाहुश्च सर्वदैत्यक्षयङ्करः ।
काषायवस्त्रसंवीतः स्कन्धसंसक्तचीवरः ॥

पद्मासनस्थो द्विभुजो ध्यायी* बुद्धः प्रकीर्त्तितः ।
खड्गोद्यतकरः क्रुद्धो हयारूढो महाबलः ॥
म्लेच्छोच्छेदकरः कल्की द्विभुजः परिकीर्त्तितः ।

इति ।

तृतीयावरणे गौरी मातृभिर्वसुभिर्युता ।

गौरीलक्षणमुक्तं ब्रह्माण्डपुराणे ।

**ब्रह्माण्याद्याः सप्तमातरः । तासां च लक्षणमुक्तं लक्षणसंग्रहे ।**

गौरी चतुर्मुखी वीरा अक्षमालास्रुचाऽन्विता ।
कुण्डाज्यपात्रिणी वामे ब्रह्माणी हंससंस्थिता ॥

'गौरी' गौरवर्णा ब्रह्माणीविशेषणमेतत् ।

त्रिनेत्रा शूलहस्ता च जटाखण्डेन्दुमण्डिता ।
कपालमालिनी शुक्ला रुद्राणी वृषसंस्थिता ॥
रक्ता शक्तिधरा देवी रक्तमाल्याम्बरान्विता ।
शिखिपृष्ठसमारूढा कौमारी स्कन्दरूपिणी ॥
शङ्खचक्रगदाशार्ङ्गखड्गहस्ता च तार्क्ष्यगा ।
श्यामा चतुर्भुजा देवी वैष्णवी वनमालिनी ॥
कृष्णा पीनोदरा क्रूरा शूकरास्यानुकारिणी ।
सवस्त्रा यौवनोद्भिन्ना नार्याभरणभूषिता ॥
वाराही महिषस्था तु मदिरादण्डधारिणी ।
खड्गखेटकसंयुक्ता अथ वाऽपि चतुर्भुजा ॥
सहस्राक्षा गजारूढा हेमाभा वज्रधारिणी ।
इन्द्राणी सर्वसिद्धार्था सर्वाभरणभूषिता ॥

---

* धीर इति क्वचित् पाठः ।

गर्त्ताक्षी क्षीणदेहा तु क्षामकुक्षिभयङ्करी ।
विवृतास्या च दंष्ट्रोग्रा शिवे वा कौशिके स्थिता ॥
लेलिहाना विमुक्ताक्षी ज्वलत्केशाहिमण्डिता ।
द्वीपिचर्माम्बरा क्रुद्धा चामुण्डा मुण्डमालिनी ॥
जटिला वर्त्तुला त्र्यक्षा चतुर्बाहुषु बिभ्रती ।
कपालकर्त्तरी याम्ये पाशं शूलं च वामतः—इति ॥

वस्वष्टकलक्षणमुक्तं ब्रह्माण्डदाने ।

चतुर्थे द्वादशादित्या वेदाश्चत्वार एव च ।
पञ्चमे पञ्चभूतानि रुद्राश्चैकादशैव तु ॥
लोकपालाष्टकं षष्ठे दिग्मातङ्गास्तथैव च ।
सप्तमेऽस्त्राणि सर्वाणि मङ्गल्यानि च कारयेत् ॥
अन्तरान्तरतो देवान् विन्यसेदष्टमे पुनः ।

आदित्यलोकपालदिग्गजानां लक्षणमुक्तं ब्रह्माण्डदाने । वेदस्वरूपाणि महाभूतघटदाने वक्ष्यन्ते ।

पञ्चभूतानि पृथिव्यादीनि । तल्लक्षणमुक्तं विष्णुधर्मोत्तरे ।

शुभवर्णा मही कार्या दिव्याभरणभूषिता ।
चतुर्भुजा सौम्यवपुश्चन्द्रांशुसदृशाम्बरा ॥
रत्नपात्रं सस्यपात्रं पात्रमौषधसंयुतम् ।
पद्मं करे च कर्त्तव्यं भुवो यादवनन्दन ॥
दिग्गजानां चतुर्णां सा कार्या पृष्ठगता तथा ।
सर्वौषधियुता देवी शुक्लवर्णा ततः स्मृता ॥

अपां रूपमुक्तं स्कन्दपुराणे ।

तस्य ध्यानवतः पूर्वमापः प्रत्यक्षतां ययुः ।

स्त्रीरूपाः शुभ्रवर्णाश्च द्विभुजाः श्वेतवाससः ॥
दधानाः पाशकलशौ करयोर्मकरासनाः ।

तेजस्त्वग्निस्तस्य रूपमुक्तं ब्रह्माण्डदाने । वायोश्च ।

आकाशरूपमुक्तं विष्णुधर्मोत्तरे ।

नीलोत्पलाभं गगनं तद्वर्णाम्बरधारि च ।
चन्द्रार्कहस्तं कर्त्तव्यं द्विभुजं सौम्यदर्शनम् ॥
द्विरष्टवर्षाकारं च स्त्रीपुंसव्यञ्जनोज्झितम् ।

रुद्रलक्षणमुक्तं विश्वकर्मणा ।

रक्तवर्णास्त्रिनयना द्विभुजाश्चन्द्रमौलयः ।
जटिलाश्च प्रकर्त्तव्या रुद्रा बाणधनुर्धराः—इति ॥

'अष्टमेऽस्त्राणि सर्वाणीति' अत्र सत्यपि सर्वशब्दे षोडशकोष्ठसन्निवेशोपयोगित्वादष्टावस्त्राणि मङ्गल्यानि चाष्टावित्येतावतामेव परिग्रहो न्याय्यः ।

अस्त्राण्युक्तानि गरुडपुराणे ।

खड्गशूलगदाशक्तिकुन्ताङ्कुशधनूंषि च ।
स्वधितिश्चेति शस्त्राणि तेषु चापं प्रशस्यते—इति ॥

मङ्गल्यान्याह पराशरः ।

दक्षिणावर्त्तशङ्खश्च रोचना चन्दनं तथा ।
मुक्ताफलं हिरण्यं च छत्रं चामरमेव च ॥
आदर्शश्चेति विज्ञेयं मङ्गल्यं मङ्गलावहम् ।

'अन्तरान्तर इति' पूर्वोक्तिः सर्वैरेव सम्बध्यते । अन्तराणामन्तरो मध्यदेश इत्यर्थः । अष्टमावरणे तु पूर्वोक्तान् ब्रह्मादीन् षोडश देवान् विन्यसेदिति दानविवेककारः । अभीष्टदेवान् विन्यसेदिति केचित् । एते च देवताविशेषा विश्वचक्रनिर्माणार्थमवक्लृप्तस्यैव सुवर्णस्य मध्यतश्चक्रारूढा निष्पादनीयाः । न पृथक् सुवर्णेन तथाविधस्यैव चक्रस्य कार्यतयोपदेशात् ।

तुलापुरुषवच्छेषं समन्तात् परिकल्पयेत् ।
ऋत्विग्मण्डपसम्भारभूषणाच्छादनादिकम् ॥
विश्वचक्रं ततः कुर्यात् कृष्णाजिनतिलोपरि ।
तथाऽष्टादश धान्यानि रसाँश्च लवणादिकान् ॥
पूर्णकुम्भाष्टकं चैव वस्त्राणि विविधानि च ।
माल्येक्षुफलरत्नानि वितानं वाऽपि कारयेत् ॥

अत्रादिशब्देन वृद्धिश्राद्धशिवादिपूजाब्राह्मणवाचनाधिवासनादीनि संगृह्यन्ते ।

## भविष्योत्तरे ।

अधिवास्य ततश्चक्रं पश्चाद्धोमं समाचरेत् ।
चातुश्चरणिकासूत्रब्राह्मणाश्चतुरोऽष्ट वा ॥
होमं कुर्युर्यतात्मानो वस्त्राभरणभूषिताः ।
होमद्रव्यसमोपेताः स्रुक्स्रुवैस्ताम्रभाजनैः ॥
चक्रप्रतिष्ठितानां तु सुराणां होम इष्यते ।
तल्लिङ्गैर्जुहुयान्मन्त्रैः सर्वोपद्रवशान्तये ॥

## मत्स्यपुराणे ।

ततो मङ्गलशब्देन स्नातः शुक्लाम्बरो गृही ।
होमाधिवासनान्तेषु गृहीतकुसुमाञ्जलिः ॥
इममुच्चारयेन्मन्त्रं त्रिः कृत्वा तु प्रदक्षिणम् ।
नमो विश्वमयायेति विश्वचक्रात्मने नमः ॥
परमानन्दरूपी त्वं पाहि संसारकर्दमात् ।
तेजोमयमिदं यस्मात् सदा पश्यन्ति योगिनः ॥
हृदि तत्त्वं गुणातीतं विश्वचक्रं नमाम्यहम् ।
वासुदेवे स्थितं चक्रं चक्रमध्ये च माधवः ॥
अन्योन्याधाररूपेण प्रणमामि स्थिताविह ।

विश्वचक्रमिदं यस्मात् सर्वपापहरं परम् ॥
आयुधं चाधिवासस्य भवादुद्धर मामतः ।
इत्यामन्त्र्य च यो दद्याद्विश्वचक्रं विमत्सरः ॥
विमुक्तः सर्वपापेभ्यो विष्णुलोके महीयते ।
वैकुण्ठलोकमासाद्य चतुर्बाहुः सनातनः ॥
सेव्यतेऽप्सरसां सङ्घैस्तिष्ठेत् कल्पशतत्रयम् ।

अत्रापि पूर्ववत्स्नानवाक्यमभिधाय यथाशक्ति सुवर्णदक्षिणासहितं चक्रपूर्णमाचार्यादिभ्यः संप्रदानप्रतिपादनं तदनुज्ञयाऽन्येभ्योऽपि दानम् । दीनानाथतर्पणं स्वस्त्येष्टाग्निविधानमृत्विगाचार्याणां विभागव्यवस्था चेति सर्वं प्रतिमदनुष्ठेयम् । ततः पुण्याहवाचनदेवतापूजनविसर्जनानि कुर्यात् ।

प्रणमेद्वा स्वयं कृत्वा विश्वचक्रं दिने दिने ।
तस्यायुर्वर्धते नित्यं लक्ष्मीश्च विपुला भवेत् ॥

इति सकलजगत्सुराधिवासं वितरति यस्तपनीयषोडशारम् ।
हरिभुवनमुपागतः स सिद्धैश्चिरमधिगम्य नमस्यते शिरोभिः ॥
अद्भुतदर्शनतां प्रयाति शम्भोर्मदनसुदर्शनतां च कामिनीनाम् ।
सद्भुदर्शनकेशवानुरूपः कनकसुदर्शनदानधूतपापः ॥
कृतगुरुदुरितानि षोडशारप्रवरसुदर्शनदानतो निरस्य ।
व्रजति च स पुरारिधाम नित्यं मयनमित्य भुवने भवानि भूयः ॥

इति मत्स्यपुराणोक्तो विश्वचक्रदानविधिः ।

## अथ कल्पलताभिधानं त्रयोदशं महादानमुपवर्ण्यते ।

मत्स्य उवाच ।

अथातः संप्रवक्ष्यामि महादानमनुत्तमम् ।
महाकल्पलता नाम महापातकनाशनम् ॥
पुण्यां तिथिमथासाद्य कृत्वा ब्राह्मणवाचनम् ।

ऋत्विग्मण्डपसम्भारभूषणाच्छादनादिकम् ॥
तुलापुरुषवत् कुर्याल्लोकेशावाहनादिकम् ।

आदिशब्दव्याख्यानं पूर्ववत् ।

चामीकरमयीः कुर्यात् दशकल्पलताः शुभाः ।
नानापुष्पफलोपेता नानांशुकविभूषिताः ॥
विद्याधरसुपर्णानां मिथुनैरुपशोभिताः ।
हारानादित्सुभिः* सिद्धैः फलानि च विहङ्गमैः ॥

चामीकरं सुवर्णं कल्पलतास्तुलाकारा विधेयाः। नानाफलानि पुंस्त्रीगोगजवाजिप्रभृतीनि स्वरूपपुष्पफलानां तुलनार्थत्वेनैवोपपत्तेः । 'अंशुकानि' वस्त्राणि । 'सुपर्णाः' पक्षिणः । एवं दशकल्पलतां विधाय वेदिकायां लिखितचक्रस्योपरि मध्ये द्वयं पूर्वादिदिक्षु चाष्टौ स्थापयेत् ।

लोकपालानुसारिण्यः कर्त्तव्यास्तासु देवताः ।
ब्राह्मीमनन्तशक्तिं च लवणस्योपरि न्यसेत् ॥
अधस्ताच्च तयोर्मध्ये पद्मशङ्खकरे शुभे ।

'लोकपालानुसारिण्यो देवताः' लोकपालशक्तय इत्यर्थः । 'अधस्ताच्च तयोरिति' मध्यस्थापितयोः कल्पलतयोरधस्तात् पद्मकरां ब्राह्मीं शङ्खधरामनन्तशक्तिं च स्थापयेत् । लवणादिपरिमाणं च परिमाणविशेषानिर्देशात् पुरुषेच्छया नियम्यते । लवणं स्तूपयोर्न्यस्येदिति क्वचित् पाठस्तत्र स्तूपो राशिः । द्विवचनं राशिद्वयापेक्षयेति ।

इभासनस्था तु गुडे पूर्वतः कुलिशायुधा ।
रजन्यजस्थिताग्नेयी स्रुचपाणिरथानले ॥
याम्या महिषमारूढा गदिनी तण्डुलोपरि ।
घृतेन नैर्ऋती स्थाप्या सखड्गा दक्षिणापरे ॥
वारुणे वारुणी क्षीरे झषस्था नागपाशिनी ।
पताकिनी च वायव्ये मृगस्था शर्करोपरि ॥

सौम्या तिलेषु संस्थाप्या शङ्खिनी निधिसंस्थिता ।
माहेश्वरी वृषगता त्वीशपाणि*स्त्रिशूलिनी ॥

'इभो' गजः स च चतुर्दन्तो विधेयः। 'कुलिशं' वज्रम् । 'रजन्यजस्थितेति' रजनी हरिद्रा अजश्छागो हरिद्रोपरिस्थापिता च्छागवाहनेत्यर्थः । 'अनले' आग्नेयदिग्भागे । 'दक्षिणापरे' नैर्ऋतदिग्भागे । नैर्ऋती प्रेतवाहनेत्यवधेयम् । 'झषस्था' मकरवाहनेत्यर्थः । 'निधिसंस्थितेति' निधिरूपं कलशानुकारि ।

मौलिन्यो वरदास्तद्वत् कर्त्तव्या बालिकान्विताः ।
शक्त्या पञ्चपलादूर्ध्वमासहस्रात् प्रकल्पयेत् ॥
सर्वासामुपरिष्टाच्च पञ्चवर्णं वितानकम् ।
धेनवो दशकुम्भाश्च वस्त्रयुग्मानि चैव हि ॥

'मौलिन्यो' मुकुटधराः । 'वरदा इति' यथोक्तायुधधारिण्यः करादितरेण करेण वरदमुद्रान्विता इत्यर्थः । 'बालिका' कर्णभूषणम् । बालकान्विता इति क्वचित् पाठस्तदा वामोत्सङ्गस्थितबालका इति व्याख्या । एतच्च पञ्चपलादिपरिमितकल्पलताकरणोपक्लृप्तसुवर्णेनैव विभज्य सर्वं कर्त्तव्यं पृथग्द्रव्येण कर्त्तव्याऽनुपदेशात् ।

मध्यमे द्वे तु गुरवे ऋत्विग्भ्योऽन्यास्तथैव च ।
ततो मङ्गलशब्देन स्नातः शुक्लाम्बरो बुधः ॥
त्रिः प्रदक्षिणमावृत्य मन्त्रानेतानुदीरयेत् ।

'तत इति' होमाधिवासनपुण्याहवाचनादि पूर्वोक्तकर्मकलापानन्तर्यमुच्यते । 'स्नात इति' कुण्डसमीपवर्त्तिकलशस्थितसर्वौषधिजलेन ऋत्विग्भिः स्नापितः । गृहीतकुसुमाञ्जलिरित्यपि ज्ञेयम् ।

**अथ मन्त्रः ।**

नमो नमः पापविनाशिनीभ्यो ब्रह्माण्डलोकेश्वरपालनीभ्यः ।

---

* वरदेतीति पाठो युक्तः ।

आशंसिताधिक्यफलप्रदाभ्यो दिग्भ्यस्तथा कल्पलतावधूभ्यः ॥

अथ पूर्ववत् प्रयोगमुच्चार्य मध्यमे द्वे देवतादिसहिते कल्पलते गुरवे प्रतिपाद्य शेषा ऋत्विग्भ्यः प्रतिपादयेत् । तदनुज्ञयाऽन्येभ्योऽपि दानं दीनानाथपूरणं स्वल्पं त्वेकाग्निविधानं चेति पूर्वोक्तमनुसन्धेयम् । ततः पुण्याहवाचनदेवतापूजनविसर्जनानि कुर्यात् ।

इति सकलदिगङ्गनाप्रदानं भवभयसूदनकारि यः करोति ।
अभिमतफलदे स नाकलोके वसति पितामहवत्सराणि त्रिंशत् ॥

'अभिमतफलदे' इष्टफलदायिनि ।

पितृशतमवतारयेद्भवाब्धेः स च दुरितौघविदारणाकुलदेहः ।
सुरपतिवनितासहस्रसङ्घैः परिवृतमम्बुजसंसदाभिवन्द्यः ॥
इति विधानमिदं सदिगङ्गनाकनककल्पलताविनिवेदने ।
पठति यः स्मरतीह तदीक्षते स पदमेति पुरन्दरसेवितम् ॥

इति मत्स्यपुराणोक्तः कल्पलतादानविधिः ।

## अथ सप्तसागरसंज्ञं चतुर्दशं महादानमाख्यायते ।

### मत्स्य उवाच ।

अथातः संप्रवक्ष्यामि महादानमनुत्तमम् ।
सप्तसागरकं नाम महापातकनाशनम् ॥
पुण्यं दिनमथासाद्य कृत्वा ब्राह्मणवाचनम् ।
तुलापुरुषवत् कुर्याल्लोकेशावाहनं बुधः ॥
ऋत्विग्मण्डपसम्भारभूषणाच्छादनादिकम् ।

आदिशब्देन वृद्धिश्राद्धपुण्याहवाचनादि ।

कारयेत् सप्तकुण्डानि काञ्चनानि विचक्षणः ।
प्रादेशमात्राणि तथाऽरत्निमात्राणि वा पुनः ॥
कुर्यात् सप्तपलादूर्ध्वमासहस्राच्च शक्तितः ।

संस्थाप्यानि च सर्वाणि कृष्णाजिनतिलोपरि ॥

'कुण्डानि' भाण्डानि। प्रादेशादिपरिमाणं तिर्यगूर्ध्वं परिच्छेद्यम् । एकविंशत्य-ङ्गुष्ठपर्वपरिमितोऽरत्निः। तदर्धं प्रादेशः । तिला द्रोणपरिमाणाः । सौवर्णसंप्रदेयाग्रयाणां कृष्णाजिनसम्बन्धिनां तेषां तथा व्याप्तिदर्शनात् ।

प्रथमं पूरयेत् कुण्डं लवणेन विचक्षणः ।
द्वितीयं पयसा तद्वत् तृतीयं सर्पिषा पुनः ॥
चतुर्थं तु गुडेनैव दध्ना पञ्चममेव च ।
षष्ठं शर्करया तद्वत् सप्तमं तीर्थवारिणा ॥
स्थापयेल्लवणस्यान्ते ब्रह्माणं काञ्चनं शुभम् ।
केशवं क्षीरमध्ये तु घृतमध्ये महेश्वरम् ॥
भास्करं गुडमध्ये तु दधिमध्ये सुराधिपम् ।
शर्करायां न्यसेल्लक्ष्मीं जलमध्ये तु पार्वतीम् ॥
सर्वेषु सर्वरत्नानि धान्यानि च समन्ततः ।

ब्रह्मादिप्रतिमालक्षणमुक्तं ब्रह्माण्डदाने। सर्वरत्नानि सर्वधान्यानि च परिभाषायाम् ।

तुलापुरुषवच्छेषमत्रापि परिकल्पयेत् ।
ततो वारुणहोमान्ते स्नापितो वेदपुङ्गवैः ॥
त्रिः प्रदक्षिणमावृत्य मन्त्रानेतानुदाहरेत् ।

शेषशब्देन पुण्याहवाचनमाचार्यादिभ्यो जलपूर्वोक्तं दानम् । तदनुज्ञया चान्येभ्योऽपि दानं दीनानाथतर्पणं स्वल्पेष्वेकाग्निविधानमित्याद्यनुसन्धेयम् । अयं विशेषो द्वितीयदिवसे तुलापुरुषोक्तकर्मशेषसमाप्तौ पूर्णाहुतेः पूर्वमाज्यतिलैस्तल्लिङ्गमन्त्रेण सहस्रसंख्यो वारुणहोमः कर्तव्यः ।

नमो वः सर्वसिन्धूनामाधारेभ्यः सनातनाः ।
जन्तूनां प्राणदेभ्यश्च समुद्रेभ्यो नमो नमः ॥

क्षीरोदकाज्यदधिमाधवलावणेक्षु-
सारामृतेन भुवनत्रयजीवसङ्घान् ।
आनन्दयन्ति वसुभिश्च यतो भवन्त-
स्तस्मान्ममाप्यघविनाशमलं विदध्वम् ॥
यस्मात् समस्तभुवनेषु भवन्त एव
तीर्थामरासुरस्तुबद्धमणिप्रतानम् ।
पापक्षयाम्बरविलेपनभूषणाय
लोकस्य बिभ्रति तदस्तु ममापि लक्ष्मीः ॥

ततो यथा शक्तिदक्षिणासहितसंप्रदानान्ते पूर्ववत् पुण्याहवाचनदेवतापूजनवि-सर्जनादि कुर्यात् ।

इति ददाति रसामरसंयुतान् सुचिरविस्मयवानिह सागरान् ।
अमलकाञ्चनवर्णमयानसौ पदमुपैति हरेरमरावृतः ॥
सकलपापविघातविराजितः पितृपितामहपुत्रकलत्रकम् ।
नरकलोकसमाकुलमप्यलं झटिति सोऽर्पयते शिवमन्दिरम् ॥

इति मत्स्यपुराणोक्तः सप्तसागरदानविधिः ।

## अथ रत्नधेनुसमाख्यं पञ्चदशमहादानं प्रतिपाद्यते ।

## मत्स्यपुराणे । मत्स्य उवाच ।

अथातः संप्रवक्ष्यामि महादानमनुत्तमम् ।
रत्नधेनु इति ख्यातं गोलोकफलदं नृणाम् ॥
पुण्यां तिथिमथासाद्य तुलापुरुषदानवत् ।
लोकेशावाहनं कृत्वा ततो धेनुं प्रकल्पयेत् ॥
भूमौ कृष्णाजिनं कृत्वा लवणद्रोणसंयुतम् ।
धेनुं रत्नमयीं कुर्यात् संकल्प्य विधिपूर्वकम् ॥

लोकेशावाहनमित्युपलक्षणम् । अत्र हि देशकालवृद्धिश्राद्धशिवादिपूजाब्राह्मण-

वाचनगुर्वृत्विग्वरणमधुपर्कदानकुण्डमण्डपवेदिकाचक्रलेखनवितानतोरणपताकादिकं मत्स्यपुराणोक्ततुलापुरुषविहितं संगृह्यते । 'धेनुं प्रकल्पयेदिति' लवणद्रोणोपरि रेखाभिः प्राङ्मुखीमुदक्पादां सवत्सां गवाकृतिं रचयेदित्यर्थः ।

स्थापयेत् पद्मरागाणामेकाशीतिं मुखे बुधः ।
पुष्परागशतं तद्वद्घोणायां परिकल्पयेत् ॥
ललाटे हेमतिलकं मुक्ताफलशतं दृशोः ।

'घोणायां' नासिकाग्रभागे । हेमतिलकादिषु सारतः परिमाणतश्च फलविशेष इति न्यायात् ज्ञायते यथाशक्त्यनुष्ठानम् । मुक्ताफलशतं नेत्रद्वये विभज्य स्थापनीयम् ।

भ्रूयुगे विद्रुमशतं शुक्ती कर्णद्वये स्थिते ।
काञ्चनानि च शृङ्गाणि शिरो वज्रशतात्मकम् ॥

'शृङ्गाणीति' वत्सशृङ्गापेक्षया बहुवचनम् ।

ग्रीवायां नेत्रपट्टकं गोमेदकशतात्मकम् ।
इन्द्रनीलशतं पृष्ठे वैदूर्यशतपार्श्वके ॥
स्फटिकैरुदरं तद्वत् सौगन्धिकशतात् कटिम् ।
खुरा हेममयाः कार्याः पुच्छं मुक्तावलीमयम् ॥

'स्फटिकैरित्यत्र' साहचर्यात् तद्वदितिवचनाच्छतसंख्यैरित्यवधेयम् । 'सौगन्धिकं' माणिक्यविशेषः । मुक्ताफलानामपि शतसंख्यत्वमवधेयम् ।

सूर्यकान्तेन्दुकान्तौ च घ्राणे कर्पूरचन्दनम् ।
कुङ्कुमानि च रोमाणि रौप्यां नाभिं च कारयेत् ॥
गारुत्मतशतं तद्वदपाने परिकल्पयेत् ।
तथान्यानि च रत्नानि स्थापयेत् सर्वसन्धिषु ॥

'अन्यानि' माणिक्यादीनि यथाशक्ति यथालाभं स्थापयेत् ।

कुर्याच्छर्करया जिह्वां गोमयं च गुडात्मकम् ।
गोमूत्रमाज्येन तथा दधि दुग्धं स्वरूपतः ॥

पुच्छाग्रे चामरं दद्यात् समीपे ताम्रदोहनम् ।
कुण्डलानि च हैमानि भूषणानि च शक्तितः ॥
कारयेदेवमेवं तु चतुर्थांशेन वत्सकम् ।

'एवमेवमिति' एतैरेव धेनूक्तै रत्नादिद्रव्यैरित्यर्थः ।

तथा सर्वाणि धान्यानि पादाश्चेक्षुमयाः स्मृताः ।
नानाफलानि सर्वाणि पञ्चवर्णवितानकम् ॥
एवं विरचनां कृत्वा तद्वद्धोमाधिवासनम् ।
ऋत्विग्भ्यो दक्षिणां दत्त्वा धेनुमामन्त्रयेद्बुधः ॥
गुडधेनुवदामन्त्र्य इदं चोदाहरेत् ततः ।

'तद्वदिति' मत्स्यपुराणोक्ततुलापुरुषदानवदित्यर्थः । सर्वौषधिस्नानादिकमपि तद्वदेव ज्ञेयम् । दक्षिणां दत्त्वेति क्रमोऽत्राविवक्षितः । दक्षिणा चात्र यथाशक्ति सुवर्णं नृपकर्तृके तु दाने ग्रामरत्नादय इति गुडधेनुवत् । या लक्ष्मीरित्यादिमन्त्रैः ।

त्वां सर्वदेवगणधाम यतः पठन्ति
रुद्रेन्द्रविष्णुकमलासनवासुदेवाः ।
तस्मात् समस्तभुवनत्रयदेवयुक्ता
मां पाहि देवि भवसागरपीड्यमानम् ॥
आमन्त्र्य वेत्थमभितः परिवृत्य भक्त्या
दद्याद्द्विजाय गुरवे जलपूर्वकं ताम् ।
यः पुण्यमाप्य दिनमत्र कृतोपवासः
पापैर्विमुक्ततनुरेति पदं मुरारेः ॥

'परिवृत्य' प्रदक्षिणीकृत्य गृहीतकुसुमाञ्जलिरित्यपि ज्ञेयम् । कृतोपवासस्त्व-मधिवासनदिने । अशक्तौ तु नक्तमित्युक्तम् । गुरवे दद्यादित्येकाग्निपक्षविषयम् अने-काग्निपक्षे तु तुलापुरुषवद्व्यवस्था । दानान्तरं पूर्ववत् पुण्याहवाचनदेवतापूजनविस-र्जनानि कुर्यात् ।

इति सकलविधिज्ञो रत्नधेनुप्रदानं
वितरति स विमानं प्राप्य देदीप्यमानम् ।
सकलकलुषमुक्तो बन्धुभिः पुत्रपौत्रैः
सह मदनसुरूपः स्थानमभ्येति शम्भोः ॥

इति मत्स्यपुराणोक्तो रत्नधेनुदानविधिः ।

**अथ महाभूतघटशब्दितं षोडशं महादानमिह निरूप्यते। मत्स्य उवाच ।**

अथातः संप्रवक्ष्यामि महादानमनुत्तमम् ।
महाभूतघटं नाम महापातकनाशनम् ॥
पुण्यां तिथिमथासाद्य कृत्वा ब्राह्मणवाचनम् ।
ऋत्विग्मण्डपसम्भारभूषणाच्छादनादिकम् ॥
तुलापुरुषवत् कुर्याल्लोकेशावाहनादिकम् ।

आदिशब्दस्तु पूर्ववदेव व्याख्येयः ।

कारयेत् काञ्चनं कुम्भं महारत्नाचितं बुधः ।
प्रादेशादङ्गुलशतं यावत् कुर्यात् प्रमाणतः ॥
क्षीराज्यपूरितं तद्वत् कल्पवृक्षसमन्वितम् ।

क्षीरघृते गव्ये समपरिमाणे च स्थापनीये । कल्पवृक्षलक्षणं पञ्चशाखत्वादि कल्पतरुदाने द्रष्टव्यम् ।

पद्मासनगतांस्तद्वद्ब्रह्मविष्णुमहेश्वरान् ।
वराहेणोद्धृतां तद्वत् कुर्यात् पृथ्वीं सपङ्कजाम् ॥
वरुणं चासनगतं काञ्चनं मकरोपरि ।
हुताशनं मेषगतं वायुं कृतमृगासनम् ॥
तथाकाशाधिपं कुर्यान्मूषकस्थं विनायकम् ।
विन्यसेद्घटमध्ये तान् वेदपञ्चकसंयुतान् ॥

ब्रह्मादिलक्षणं वरुणादिलक्षणं च मत्स्यपुराणोक्तब्रह्माण्डदानविहितं वेदितव्यम् । वराहलक्षणं तु पद्मपुराणोक्तब्रह्माण्डे । विनायकस्वरूपं हस्तिरथ इति ।

ऋग्वेदस्याक्षसूत्रं तु यजुर्वेदस्य पङ्कजम् ।
सामवेदस्य वीणा स्याद्वीणां दक्षिणतो न्यसेत् ॥
अथर्ववेदस्य पुनः स्रुक्स्रुवौ कमलं करे ।
पुराणवेदो वरदः साक्षसूत्रकमण्डलुः ॥
परितः सर्वधान्यानि चामरासनदर्पणम् ।
पादुकोपानहच्छत्रदीपिकाभूषणानि च ॥
शय्या च जलकुम्भाश्च पञ्चवर्णवितानकम् ।
स्नात्वाधिवासनान्ते तु मन्त्रमेतमुदीरयेत् ॥

'पादुका' काष्ठकृता । जलकुंभाः षोडश प्रकृतौ तथादर्शनात् । अधिवासनान्ते स्नात्वेति पूर्वस्मिन् दिनेऽधिवासनं विधाय द्वितीयदिवसे पुण्याहवाचनादि पूर्णाहुतिपर्यन्तं कर्मशेषं समाप्य सर्वौषधिजलैः पूर्ववदृत्विग्भिः स्नापितो यजमानस्त्रिः प्रदक्षिणमावृत्य गृहीतकुसुमाञ्जलिः वक्ष्यमाणं मन्त्रमुदाहरेत् ।

नमो वः सर्वदेवानामाधारेभ्यश्चराचरे ।
महाभूताधिदेवेभ्यः शान्तिरस्तु शिवं मम ॥
यस्मान्न किञ्चिदप्यस्ति महाभूतैर्विना कृतम् ।
ब्रह्माण्डे सर्वभूतेषु तस्माच्छ्रीरक्षयास्तु मे ॥
इत्युच्चार्य महाभूतघटं यो विनिवेदयेत् ।
सर्वपापविनिर्मुक्तः प्रयाति परमां गतिम् ॥
विमानेनार्कवर्णेन पितृबन्धुसमन्वितः ।
स्तूयमानोऽमरस्त्रीभिः पदमभ्येति वैष्णवम् ॥

अत्र च जलपूर्वं ब्राह्मणेभ्यः प्रदेये प्रतिपादिते तुलापुरुषवद्विभागव्यवस्था । तदनुज्ञया चान्येभ्योऽपि दानं दीनानाथपूरणं च कर्त्तव्यम् । अदक्षिणस्य कर्मणो निष्फलत्वाद्-

यथाशक्ति गुर्वादिभ्यो भूमिसुवर्णादिकं दक्षिणेति स्वल्पे त्वेकाग्निविधानमप्यवगन्त-व्यम् । तदनन्तरं पूर्ववत् पुण्याहवाचनदेवतापूजनविसर्जनानि ।

षोडशैतानि यः कुर्यात् महादानानि मानवः ।
न तस्य पुनरावृत्तिरिह लोकेऽभिजायते ॥
इति पठति य इत्थं वासुदेवस्य पार्श्वे
ससुतपितृकलत्रः संशृणोतीह सम्यक् ।
पुररिपुभवने वा मन्दिरे वार्कलक्ष्मी-
श्चिरममरवधूभिर्मोदते सोऽपि कल्पम् ॥

इति मत्स्यपुराणोक्तो महाभूतघटदानविधिः ।

इति श्रीमहाराजाधिराजश्रीमहादेवस्य समस्तकरणाधीश्वरसकलविद्या-
विशारदश्रीहेमाद्रिविरचिते चतुर्वर्गचिन्तामणौ दानखण्डे
षोडशमहादानविधिप्रकरणम् ॥ ५ ॥

## अथ पर्वतदानविधिः ।

अयं लोकालोकः परमहिमवान् शश्वदुदयः
सुपार्श्वस्थायिश्रीः कलितविपुलाभोगसुभगः ।
इति प्रत्यक्षेऽपि स्फुरदखिलशैलेन्द्रविभवः
परं हेमाद्रित्वं प्रकटयति विश्रान्तविबुधः ॥
धान्यशैलादिदानानामिह हेमाद्रिसूरिणा ।
विचित्रविधिविस्तारः प्रस्तावः क्रियतेऽधुना ॥

### तत्र धान्यपर्वतदानं तावदुच्यते तदेव पद्मपुराणे ।

**भीष्म उवाच ।**

भगवन् श्रोतुमिच्छामि दानमाहात्म्यमुत्तमम् ।
यदक्षयं परे लोके देवर्षिगणपूजितम् ॥

**पुलस्त्य उवाच ।**

मेरोः प्रदानं वक्ष्यामि दशधा मुनिसत्तम ।
यत्प्रसादान्नरो लोकानाप्नोति सुरपूजितान् ॥
पुराणेषु च देवेषु यज्ञेष्वायतनेषु च ।
न तत् फलमधीतेषु कृतेष्विह यदश्नुते ॥

'पुराणेषु वेदेषु यज्ञेष्वायतनेषु च' कृतेषु न तत् फलमिति सम्बन्धः ।

तस्माद्विधानं वक्ष्यामि पर्वतानामनुत्तमम् ।
प्रथमो धान्यशैलः स्याद्द्वितीयो लवणाचलः ॥
गुडाचलस्तृतीयस्तु चतुर्थो हेमपर्वतः ।
पञ्चमस्तिलशैलः स्यात् षष्ठः कार्पासपर्वतः ॥

सप्तमो घृतशैलश्च रत्नशैलस्तथाष्टमः ।
राजतो नवमस्तद्वद्दशमः शर्कराचलः ॥
वक्ष्ये विधानमेतेषां यथावदनुपूर्वशः ।
अयने विषुवे चैव व्यतीपाते दिनक्षये ॥
शुक्लपक्षे तृतीयायामुपरागे शशिक्षये ।
विवाहोत्सवयज्ञे वा द्वादश्यामथ वा पुनः ॥
शुक्लायां पञ्चदश्यां वा पुण्यर्क्षे च विधानतः ।
धान्यशैलादयो देया यथाश्रद्धं विधानतः ॥
तीर्थे वाऽऽयतने वापि गोष्ठे वापि भवाङ्गणे ।
मण्डपं कारयेद्भक्त्या चतुरस्रमुदङ्मुखम् ॥
प्रागुदक्प्रवणं तद्वत् प्राङ्मुखो वा विधानतः ।

मण्डपलक्षणं तु परिभाषायां प्रतिपादितम् ।

अत्र चायं विधानक्रमः । दानदिवसात् पूर्वेद्युः पूर्वाह्णे कृतस्नाता-दिक्रियो यजमानोऽमुकपर्वतदानमहं श्वः करिष्य इति कृतसंकल्पो वृद्धि-श्राद्धमाभ्युदयिकं विधाय पूर्ववत् पुण्याहवाचनं कुर्यात् । तदनन्तरं तु अद्या-मुकस्मिन् देशेऽमुकस्मिन् कालेऽमुकपर्वतदानेनाहं यक्ष्ये तत्र तदङ्गभूत-होमादिकेऽमुकशर्माणममुकवेदाध्यायिनमृत्विजं त्वामहं वृण इति ।

## पुराणवेदविदां चतुर्णामृत्विजां वरणम् । तथा ।

ॐ अद्याऽमुकस्मिन् देशेऽमुकस्मिन् कालेऽमुकपर्वतदानेनाहं यक्ष्ये तत्र तदङ्गभूतानि कर्माणि कर्तुं कारयितुं चामुकसगोत्रममुकशर्माणममुक-वेदाध्यायिनं गुरुं त्वामहं वृण इत्याचार्यं वृणुयात् । वृतोऽस्मीति सर्वत्र प्रति-वचनम् । तत्र तावन्मधुपर्केणार्चयेदिति सर्वपर्वतदानसाधारणोऽयं विधिः ।

गोमयेनोपलिप्तायां भूमावास्तीर्य वै कुशान् ।
तन्मध्ये पर्वतं कुर्याद् विष्कम्भपर्वतान्वितम् ॥

धान्यद्रोणसहस्रेण भवेद्गिरिरिहोत्तमः ।
मध्यमः पञ्चशतिकः कनिष्ठः स्यात् त्रिभिः शतैः ॥

द्रोणलक्षणमुक्तं परिभाषायाम् । प्रमाणस्यकरचरणस्य पुंसो द्वादशभिः प्रसृतिभिः कुडवो भवति । अनेन कुडवेन चतुर्गुणोत्तरं प्रस्थाढकद्रोणा भवन्ति । अतश्चतुःषष्ट्या कुडवैरेको द्रोणो भवतीति कल्पतरुणा व्याख्यातम् ।

मेरुर्महाव्रीहिमयस्तु मध्ये सुवर्णवृक्षत्रयसंयुतः स्यात् ।
पूर्वेण मुक्ताफलवज्रयुक्तो याम्येन गोमेदकपुष्परागैः ॥
पश्चाच्च गारुत्मतनीलरत्नैः सौम्येन वैदूर्यसरोजरागैः ।
श्रीखण्डखण्डैरभितः प्रवाललतान्वितः शुक्तिशिलातलः स्यात् ॥
ब्रह्माथ विष्णुर्भगवान् पुरारिर्दिवाकरोऽप्यत्र हिरण्मयः स्यात् ।
मूर्धव्यवस्था गतमत्सरेण कार्याः सुवर्णेन तथा द्विजौघाः ॥
चत्वारि शृङ्गाणि च राजतानि नितम्बभागेष्वपि राजतः स्यात् ।
आर्द्रेक्षुवंशावृतकन्दरस्तु घृतोदकः प्रस्रवणश्च दिक्षु ॥
शुक्लाम्बराण्यम्बुधरावली स्यात् पूर्वेण पीतानि च दक्षिणेन ।
वासांसि पश्चादथ कर्बुराणि रक्तानि चैवोत्तरतो घनाली ॥
रौप्यान् महेन्द्रप्रमुखानथाष्टौ संस्थाप्य लोकाधिपतीन् क्रमेण ।
नानाफलाली च समन्ततः स्यान्मनोरमं माल्यविलेपनं च ॥
वितानकं चोपरि पञ्चवर्णमम्लानपुष्पाभरणं सितं च ।

'मेरुरित्यादि' महाव्रीहियो राजान्नशालयः । 'वृक्षत्रयसंयुत इति' दक्षिणे मन्दार उत्तरे पारिजातो मध्ये कल्पतरुरिति वृक्षत्रयम् । तथा पूर्वतो हरिचन्दनं पश्चिमे सन्तान इति तरुद्वयं च कुर्यात् । एते सर्वपर्वतेषु कर्तव्या इति शर्कराचले वक्ष्यमाणत्वात् । सर्वेषां च पञ्चशाखत्वमवधेयमिति । 'वज्रं' हीरकम् । 'गारुत्मतं' मरकतम् । 'सरोजरागाः' पद्मरागाः । मुक्ताफलादीनि च यथादिशं वक्ष्यमाणराजतशृङ्गेषु निवेशनीयानि । 'पुरारिः' महेश्वरः । ब्रह्मादिलक्षणमुक्तं ब्रह्माण्डदाने । 'मूर्धव्यवस्था' उपरिदेशस्थिता । 'गतमत्सरेण' वित्तशाठ्यरहितेन । 'द्विजौघाः' पक्षिसमूहाः

टिवीशा इति क्वचित् पाठः। तत्रादित्या वसवो रुद्रा दिवीशास्तेषु वस्वादिलक्षण-मुक्तं ब्रह्माण्डदाने। रुद्रलक्षणं विश्वचक्रे। इक्षुरेव वंशः। घृतमेवोदकम्। वस्त्राण्येव मेघसमूहाः। 'कर्वुराणि' चित्राणि। लोकपाललक्षणमुक्तं ब्रह्माण्डदाने।

इत्थं निवेश्यामरशैलमग्र्यं मेरोश्च विष्कम्भगिरीन् क्रमेण।
तुरीयभागेन चतुर्दिशं तु संस्थापयेत् पुष्पविलेपनाढ्यान्॥

पूर्वेण मन्दरमनेकफलश्च युक्तं
युक्तं गणैः कनकभद्रकदम्बचिह्नम्।
कामेन काञ्चनमयेन विराजमान-
माकारयेत् कुसुमवस्त्रविलेपनाढ्यम्॥
क्षीरारुणोदसरसाथ वनेन चैव
रौप्येण शक्तिघटितेन विराजमानम्।
याम्येन गन्धमदनश्च निवेशनीयो
गोधूमसञ्चयमयः कलधौतजम्ब्वा॥
हैमेन यक्षपतिना घृतमानसेन
वस्त्रैश्च राजतवनेन च संयुतः स्यात्।
पश्चात् तिलाचलमनेकसुगन्धिपुष्प-
सौवर्णपिप्पलहिरण्मयहंसयुक्तम्॥
आकारयेद्रजतपुष्पवनेन तद्व-
द्वस्त्रान्वितं दधिसितोदसरस्तथाग्रे।
संस्थाप्य तं विपुलशैलमथोत्तरेण
शैलं सुपार्श्वमपि माषमयं सवस्त्रम्॥
पुष्पैश्च हेमवटपादपशेखरं त-
माकारयेत् कनकधेनुविराजमानम्।
माक्षीकभद्रसरसा च वनेन तद्व-
द्रौप्येण भास्करवता च युतं विधाय॥

'इत्थं निवेश्येत्यादि' एवं मेरुं निवेश्य तच्चतुर्थभागपरिमितेन पृथग्द्रव्येण एकैकं विष्कम्भगिरिं कुर्यात् । न तु चतुर्थभागेन चतुरोऽपीति । तथा च लवणाचले वक्ष्यति चतुर्थांशेन विष्कम्भपर्वतान् कारयेत् पृथगिति । 'पूर्वेण मन्दरमिति' सन्निधानान्मन्दरोऽपि व्रीहिमय एव । 'गणैर्युक्तमिति' पुरुषाकृतिगणत्रयान्वितमित्यर्थः । अनेकफलालियुक्तम् । यवैरिति क्वचित् पाठः । तस्य समूलत्वे यवानुष्ठानमपि कार्यम् । कनकघटितेन भद्रकदम्बाख्येन वृक्षेण लक्षितम् ।

## काम लक्षणमाह विश्वकर्मा ।

चापवाणधरः कामो रतिप्रेयान् सुमध्यमः ।
आलीढो नन्दनो राजी रूपवान् विश्वमोहकः—इति ॥

क्षीरपूरितेनारुणोदसंज्ञिकेन रूप्यघटितेन सरसा वनेनापि रूप्यघटितेन विराजमानमिति सम्बन्धः । 'याम्येनेत्यादि' गन्धमदनो गन्धमादनः । 'कलधौतजम्ब्वेति सुवर्णजम्बुवृक्षेण ।

## यक्षपतिरूपमुक्तं श्रीप्रश्ने ।

ह्रस्वमापिङ्गनेत्रं च गदिनं पीतविग्रहम् ।
पुष्पकस्थं धनाध्यक्षं ध्यायेच्छिवसखं सदा—इति ॥

'घृतमानसेनेति' घृतपूरितेन मानसाभिधानेन राजतेन सरसा । 'पश्चादिति' पश्चिमदेशे दधिपूरितसितोदं नाम रजतनिर्मितं सर इति । 'विपुलशैलं' विपुलं नाम पर्वतम् । 'माक्षीकभद्रसरसेति' माक्षिकं मधु मधुपूरितेन रजतमयेन भद्राभिधानेन सरसा युतमित्यर्थः ।

अत्र च कामदेवस्य प्रत्यङ्मुखत्वं हंसस्य प्राङ्मुखत्वं कनकधेनोर्दक्षिणामुखत्वं च शर्कराचलस्थितदिग्विशेषसापेक्ष्यं दैवतेषु सर्वशैलेषु वेदितव्यं चरमव्यवस्था कुतोऽपि शास्त्राद्व्यवस्थितिरिति । एते च कामदेवादयः कदम्बादीनां निजपर्वतवृक्षाणामधस्तात् कर्त्तव्याः ।

होमैश्चतुर्भिरथ वेदपुराणविद्भि-
र्दान्तैरनिन्द्यचरिताकृतिभिर्द्विजेन्द्रैः ।

पूर्वेण हस्तमितमत्र विधाय कुण्डं
कार्यस्तिलैर्यवघृतेन समित्कुशैश्च ॥
रात्रौ च जागरमनुद्धतगीततूर्यै-
रावाहनं च कथयामि शिलोच्चयानाम् ।

'पूर्वेणेत्यादि' मण्डपस्य पूर्वभागे हस्तमात्रं कुण्डं विधाय तस्य पूर्वोत्तरदिग्वि-भागे तुलापुरुषोक्तलक्षणां देवतावेदिं कृत्वा तत्र विनायकादिदेवताभ्यः पूर्ववत् पूजां विदध्यात् । अनन्तरमृत्विजोऽग्निस्थापनान्ते ग्रहाणां लोकपालानामित्यादिवक्ष्यमाण-देवताभ्यस्तल्लिङ्गमन्त्रैस्तिलादिद्रव्येण होमं कुर्युः ।

सहस्रे त्वथ होतव्ये कुर्यात् कुण्डं करात्मकम् ।

इत्युक्तेरत्र हस्तपरिमितकुण्डोपदेशादाहुतिसहस्रं होतव्यमिति दानविवेक-कारः ।

अत्र विनायकादयो द्वात्रिंशद्देवा द्वादशादित्या एकादश रुद्रा दश लोकपाला अष्टौ वसवो ब्रह्मविष्णुशिवसूर्याश्चत्वारः कामधनदहंसकामधेनवश्चत्वार इत्येवमे-काशीतिसंख्येभ्यो देवेभ्यो ग्रहाणां प्रतिदैवतं त्रयोदशाहुतिहोमे त्रिपञ्चाशदधिकमा-हुतिसहस्रं संपद्यते । अष्टशतं तु होतव्यमिति ब्रह्माण्डपुराणे वक्ष्यति । तिलादीनि-चत्वार्येव हविर्द्रव्याणि घृताक्तानीत्यवगन्तव्यम् । समिधः साधारण्यादुदुम्बरस्य । होमानन्तरं पुष्पोपहारानादाय वक्ष्यमाणमन्त्रैर्यथाक्रमं पर्वतानावाहयेत् ।

## तत्र मेरोरावाहनमन्त्रः ।

त्वं सर्वदेवगणधामनिधेर्विरुद्ध-
मस्मद्गृहेऽप्यमरपर्वत नाशयाशु ।
क्षेमं विधत्स्व कुरु शान्तिमनुत्तमां नः
संपूजितः परमभक्तिमता मया हि ॥
त्वमेव भगवानीशो ब्रह्मा विष्णुर्दिवाकरः ।
मूर्त्तामूर्त्तपरं बीजमतः पाहि सनातनः ॥

यस्मात् त्वं लोकपालानां विश्वमूर्त्तेश्च मन्दिरम् ।
रुद्रादित्यवसूनां च तस्माच्छान्तिं प्रयच्छ मे ॥
यस्मादशून्यममरैर्नारीभिश्च समस्तथा ।
तस्मान्मामुद्धराशेषदुःखसंसारसागरात् ॥
एवमभ्यर्च्य तं मेरुं मन्दरं चाभिपूजयेत् ।

अथ मन्दरस्य ।

यस्माच्चैत्ररथेन त्वं भद्राश्वेन वर्षेण च ।
शोभसे मन्दर क्षिप्रमलं पुष्टिकरो भव ॥

अथ गन्धमादनस्य ।

यस्माच्चूडामणिर्जम्बुद्वीपे त्वं गन्धमादन ।
गन्धर्ववनशोभावानतः कीर्त्तिर्दृढास्तु मे ॥

अथ विपुलपर्वतस्य ।

यस्मात् त्वं केतुमालेन वैभ्राजेन वनेन च ।
हिरण्मयाश्वत्थशिखस्तस्मात् पुष्टिर्ध्रुवास्तु मे ॥

अथ सुपार्श्वस्य ।

उत्तरैः कुरुभिर्यस्मात् सावित्रेण वनेन च ।
सुपार्श्व राजसे नित्यमतः श्रीरक्षयास्तु मे ॥
एवमामन्त्र्य तान् सर्वान् प्रभाते विमले पुनः ।
स्नात्वाऽथ गुरवे दद्यान्मध्यमं पर्वतोत्तमम् ॥
विष्कम्भपर्वतान् दद्यादृत्विग्भ्यः क्रमशो नृप ।
गावो दद्याच्चतुर्विंशदथ वा दश पार्थिव ॥
शक्तितः सप्त वाष्टौ वा पञ्च दद्यादशक्तिमान् ।
एकां वा गुरवे दद्यात् कपिलां च पयस्विनीम् ॥

'एवमामन्त्र्येति' दानदिनात् पूर्वदिवसे सर्वमिदमामन्त्रणादि विधाय गीतवादित्रादिभिर्निशामतिबाह्य ततः प्रभाते गुरुप्रभृतयो विहितस्नानादिक्रियाः पूर्णाहुतिपर्यन्तं सकलकर्मशेषं समाप्य कुण्डसमीपस्थापितकलशजलेन पूर्ववद्यजमानं स्नापयेयुः।

यजमानोऽपि शुक्लाम्बरपरिधानः प्रदक्षिणीकृत्य वक्ष्यमाणमन्त्रेण यथाक्रमं पर्वतान् प्रतिपादयेत्।

## तत्र प्रयोगः।

ॐ अद्यामुकस्मिन् कालेऽमुकसगोत्रायामुकशर्मणे ब्राह्मणाय एतममुकपर्वतं सोपस्करम[illegible]ऽहममुकशर्मामुककामस्तुभ्यमहं संप्रददे नमः। अमुकसगोत्राय अमुकशर्मणे ब्राह्मणाय एतत्पर्वतदानप्रतिष्ठार्थमिमां दक्षिणां तुभ्यमहं संप्रददे। अत्र च दक्षिणापेक्षायामश्रुतदक्षिणान्तरक[illegible]गावो दद्यादितिश्रुतमेव दक्षिणात्वेन सम्बध्यते। विनापि दक्षिणासंशब्दनमस्त्येव दक्षिणात्वमिति केचित्। सहस्रदक्षिणां कृत्वेत्यादिब्रह्माण्डपुराणे वक्ष्यमाणदक्षिणाग्रहणं तु युक्तमिति।

पर्वतानामशेषाणामेष एव विधिः स्मृतः।
त एव पूजने मन्त्रास्त एवोपस्कराः स्मृताः॥
ग्रहाणां लोकपालानां ब्रह्मादीनां च सर्वशः।
स्वमन्त्रेणैव सर्वेषु होमः शैलेषु पठ्यते॥
उपवासो भवेन्नित्यमशक्तो नक्तमिष्यते।

सर्वत्राक्षारलवणमश्नीयादिति वक्ष्यमाणत्वादक्षारलवणं नक्तं वेदितव्यम्

विधानं सर्वशैलानां क्रमशः शृणु पार्थिव।
दानकालेषु ये मन्त्राः पर्वतेषु च यत्फलम्॥

## अथ मन्त्रः।

अन्नं ब्रह्म यतः प्रोक्तमन्ने प्राणाः प्रतिष्ठिताः।
अन्नाद्भवन्ति भूतानि जगदन्नेन वर्त्तते॥

अन्नमेव यवो लक्ष्मीरन्नमेव जनार्दनः ।
धान्यपर्वतरूपेण पाहि तस्मान्नमोनमः ॥

एवमाचार्यादीन् संपूज्य तदनुज्ञयान्येभ्योऽपि दद्यात् । ततो यजमानो वेद्यां पूर्ववद्देवताः संपूज्य नमस्कुर्यात् । गुरुस्तान्विसर्जयेत् । ततो यथाशक्ति ब्राह्मणभोजनम् । कृतोपवासस्य यजमानस्य दानदिने क्षारलवणवर्ज्जनं सर्वपर्वतोपस्कराणां च ब्राह्मणगृहप्रापणं शर्कराचलोक्तं सर्वत्र द्रष्टव्यम् ।

अनेन विधिना यस्तु दद्याद्धान्यमयं गिरिम् ।
मन्वन्तरशतं सार्धं देवलोके महीयते ॥
अप्सरोगणगन्धर्वैराकीर्णेन विराजितः ।
विमानेन दिवः पृष्ठमायाति सुरसेवितः ॥
कर्मक्षयाद्राजराज्यं प्राप्नोतीह न संशयः ।

## ब्रह्माण्डपुराणे । श्रीभगवानुवाच ।

अतः परं प्रवक्ष्यामि धान्यपर्वतमुत्तमम् ।
यं दत्त्वा सर्वदानानां फलं प्राप्नोति मानवः ॥
नद्यास्तीरे गृहे वापि देवतायतने तथा ।
मण्डपं कारयित्वा च विधानं परिकल्पयेत् ॥
कार्त्तिक्यामयने चैव ग्रहणे वापि कृत्स्नशः ।
अन्येष्वपि च कालेषु यदा श्रद्धाभिजायते ॥
महाप्रीतिकरं कुर्यात् पर्वतं शुभलक्षणम् ।
साहस्रिको भवेच्छ्रेष्ठस्तदर्धेन तु मध्यमः ॥
त्रिभिः शतैः कनिष्ठस्तु द्रोणानां नृपसत्तम ।
अलाभे वा यथाशक्त्या कारयेच्छ्रद्धयान्वितः ॥
मध्ये प्रकल्पयेन्मेरुं महाव्रीहिमयं शुभम् ।
विष्कम्भपर्वतं चैव यवैः कुर्यात् तु पूर्वतः ॥

दक्षिणेनाथ गोधूमैस्तिलैः पश्चिमतस्तथा ।
माषैश्चैवोत्तरं कुर्यात् तुरीयांशेन पर्वतान् ॥
सौवर्णशिखरोपेताँस्तान् सर्वान् कारयेद्बुधः ।
सर्वरत्नविचित्राङ्गान् केतुवृक्षैरलङ्कृतान् ॥
नानाद्रुमलतोपेतान् सुरभीँश्चाप्यलङ्कृतान् ।
वस्त्रैः प्रच्छादितान् कृत्वा गन्धैर्माल्यैस्तु पूजयेत् ॥
एवं विधं गिरिं कृत्वा नानाभक्ष्यैः समन्ततः ।
पूजयेत् फलमूलैश्च रसैर्नानाविधैस्तथा ॥
ग्राम्यारण्यैस्तथा धान्यैः पूरयेत् सर्वतस्तथा ।
ब्रह्मविष्णुशिवाँस्तत्र सौवर्णान् विनियोजयेत् ॥
पूर्वतः कारयेत् कुण्डं हस्तमात्रं सुशोभनम् ।
ब्राह्मणास्तत्र होतारो अष्टौ चत्वार एव च ॥
गृहस्थाः साधवो दान्ताः संपूर्णावयवास्तथा ।
आधौतवाससश्चैव कटकादिभिरन्विताः ॥
चन्दनादिग्धगात्राश्च तथा पुष्पैरलङ्कृताः ।
एवं विधास्तथा विप्रा होमं कुर्युरतन्द्रिताः ॥
इन्द्राद्या लोकपालाश्च तेषां होमो विधीयते ।
तल्लिङ्गश्चैव मन्त्रैश्च समिद्भिरथ वा तिलैः ॥
पौरुषेण तु सूक्तेन ब्रह्मादीनां विधीयते ।
तथा व्याहृतिभिर्होमं तिलैराज्येन चैव हि ॥
अष्टशतं तु होतव्यं सर्वकामसमृद्धये ।
पूजयेत् पर्वतं पश्चाद्यजमानः प्रसन्नधीः ॥
स्नात्वा शुक्लाम्बरो भूत्वा कामक्रोधविवर्जितः ।
अन्नं प्राणा हि भूतानां बलं तेजस्तथैव च ॥

जङ्गमाजङ्गमं सर्वं जगदन्ने प्रतिष्ठितम् ।
अन्नाद्भवन्ति भूतानि अन्नाद्वर्धन्ति चैव हि ॥
तच्च धान्याधिकारेण अन्नं बहुविधं भवेत् ।
अतो धान्यगतो मेरुः करोत्वभिमतं मम ॥
नमस्ते सर्वलोकानामाधारः सुरपूजितः ।
वित्तहीनो मम कुले मा भवत्विह कश्च न ॥
अत्युच्छिन्नं तथैवान्नं मम जन्मनि जन्मनि ।
मा यातु संक्षयं चैव दीयमानमहर्निशम् ॥
एवं संपूज्य पूर्वेद्यू रात्रौ कुर्यान्महोत्सवम् ।
शङ्खतूर्यनिनादैश्च गेयमङ्गलपाठकैः ॥
ततः सर्वसमीपे तु ब्राह्मणाय निवेदयेत् ।
सहस्रदक्षिणं कृत्वा शक्त्या च विभवस्य च ॥
दक्षिणारहितो यज्ञः शत्रुत्वायाभिजायते ।
तस्मात् सदक्षिणं देयं यत् किञ्चिद्दानसंज्ञितम् ॥
होतारस्तत्र ये तेषां दद्याद्विष्कम्भवान् बुधः ।
आचार्यं पूजयेत् पश्चाद्गोभिरश्वैर्गजैस्तथा ॥
अलङ्कारैस्तथा मुख्यैर्वस्त्रैः पुष्पानुलेपनैः ।
आचार्यं पूजयेत् तं च भोजयित्वा यथाविधि ॥
गावश्चालङ्कृता देया बहुक्षीरा गुणान्विताः ।
रूपवत्यस्तरुण्यश्च तुष्ट्यर्थं जुह्वतां नृप ॥
अनेन विधिना यस्तु दद्याद्धान्यमयं गिरिम् ।
उद्धृत्य चात्मना सार्धं स्वर्गमारोपयेत् परम् ॥
मन्वन्तराणि षड्विंशन्मोदते विबुधैः सह ।
दिव्यं विमानमारुह्य नारी वा पुरुषोऽपि वा ॥

पुण्यक्षयादिहाप्येत्य सप्तद्वीपपतिर्भवेत् ।
दशजन्मानि राजेन्द्र द्वापरे जायते युगे ॥
दशवर्षसहस्रायुः पुत्रपौत्रसमन्वितः ।
यश्चेदं शृणुयाद्दानं कीर्त्यमानं समाहितः ॥
दरिद्रः परया भक्त्या योऽपि सद्गतिमाप्नुयात् ।

**भविष्योत्तरे ।**

अतः परं प्रवक्ष्यामि धान्यपर्वतमुत्तमम् ।
व्रीहिभिः कारयेत् तं तु गोधूमैरथ वा यवैः ॥
सहस्रेणोत्तमं कुर्यात् तदर्धेन तु मध्यमम् ।
तस्याप्यर्धात् कनिष्ठं तु कुर्याद्विभवसारतः ॥
तेषां पूर्वविधानेन सर्वं कुर्याद्यथाक्रमम् ।
फलं वापि तदा राजन् पूर्वमेव समश्नुते ॥
धान्याचलं कनकवृक्षविराजमानं
विष्कम्भपर्वतयुतं सुरसिद्धजुष्टम् ।
यच्छन्ति ये सुमतयः प्रणिपत्य विप्रं
ते प्राप्नुवन्ति परमेष्ठिपदाब्जयुग्मम् ॥

इति धान्यपर्वतदानविधिः ।

## अथ लवणाचलदानविधिः ।

**पुलस्त्य उवाच ।**

अथातः संप्रवक्ष्यामि लवणाचलमुत्तमम् ।
यत्प्रदानान्नरो लोके प्राप्नोति शिवसंयुतम् ॥
उत्तमः षोडशद्रोणः कर्त्तव्यो लवणाचलः ।
मध्यमः स्यात् तदर्धेन चतुर्भिरधमः स्मृतः ॥
वित्तहीनो यथा शक्त्या द्रोणादर्धं तु कारयेत् ।

चतुर्थांशेन विष्कम्भपर्वतान् कारयेत् पृथक् ॥

द्रोणलक्षणमुक्तम् । 'चतुर्थांशेनेति' मुख्यशैललवणात् पृथक् प्रत्येकं चतुर्थांशप-रिमितेन लवणेनेत्यर्थः ।

विधानं पूर्ववत् कुर्याद्ब्रह्मादीनां च सर्वदा ।
तद्वद्धेमतरून् सर्वान् लोकपालन्निवेशनम् ॥
सरांसि कामदेवादीन् स्तद्वच्चात्र निवेशयेत् ।

'तद्वदिति' धान्यपर्वतवदित्यर्थः ।

कुर्याज्जागरमत्रापि दानमन्त्रान् निबोधत ।
सौभाग्यरससंभूतो यतोऽयं लवणो रसः ॥
तदात्मकत्वेन च मां पाहि पापान्नगोत्तम ।
यस्मादन्नरसाः सर्वे नोत्कटा लवणं विना ॥
प्रियं च शिवयोर्नित्यं तस्माच्छान्तिं प्रयच्छ मे
विष्णुदेहसमुद्भूतं [illegible] वर्धनम् ॥
तस्मात् पर्वतरूपेण पाहि संसारसागरात् ।
अनेन विधिना यस्तु दद्याल्लवणपर्वतम् ॥
उमालोके वसेत् कल्पं ततो याति परां गतिम्

इति पद्मपुराणोक्तो लवणाचलदानविधिः ।

## अथ गुडपर्वतदानविधिः ।

## पुलस्त्य उवाच ।

अथातः संप्रवक्ष्यामि गुडपर्वतमुत्तमम् ।
यत्प्रदानान्नरः स्वर्गमाप्नोति सुरपूजितम् ॥
उत्तमो दशभिर्भारैर्मध्यमः पञ्चभिर्मतः ।
त्रिभिर्भारैः कनिष्ठः स्यात् तदर्धेन ल्पवित्तवान् ॥

'भारः' परिभाषायां व्याख्यातः ।

तद्वदामन्त्रणं पूजा होमवृक्षसुरार्चनम् ।
विष्कम्भपर्वतास्तद्वत् सरांसि वनदेवताः ॥
होमं जागरणं तद्वल्लोकपालाधिवासनम् ।
धान्यपर्वतवत् कुर्यादिमं मन्त्रमुदीरयेत् ॥
यथा देवेषु विश्वात्मा प्रवरोऽयं जनार्दनः ।
सामवेदस्तु वेदानां महादेवस्तु योगिनाम् ॥
प्रणवः सर्वमन्त्राणां नारीणां पार्वती यथा ।
तथा रसानां प्रवरः सदैवेक्षुरसो मतः ॥
मम तस्मात् परां लक्ष्मीं ददस्व गुडपर्वत ।
यस्मात् सौभाग्यदायिन्या भ्राता त्वं गुडपर्वत ॥
निवासश्चापि पार्वत्यास्तस्मान्मां पाहि सर्वदा ।
अनेन विधिना यस्तु दद्याद्गुडमयं गिरिम् ॥
पूज्यमानः स गन्धर्वैर्गौरीलोके महीयते ।
पुनः कल्पशतान्ते तु सप्तद्वीपाधिपो भवेत् ॥
आयुरारोग्यसम्पन्नः शत्रुभिश्चापराजितः ।

इति पद्मपुराणोक्तो गुडपर्वतदानविधिः ।

**श्रीभगवानुवाच ।**

अतः परं प्रवक्ष्यामि गुडपर्वतमुत्तमम् ।
सर्वपापहरं पुण्यं सौभाग्यजननं परम् ॥
पुष्टिदं शान्तिदं चैव सुखदं दिव्यभोगदम् ।
भारैस्तं दशभिः कुर्याद्यथाशक्त्यापि वा भवेत् ॥
पूर्ववन्मण्डपं कृत्वा सर्वोपकरणानि च ।

'पूर्ववदिति' ब्रह्माण्डदानोक्तधान्यपर्वतवदित्यर्थः ।

लोकपालसमोपेतं तथा काञ्चनशृङ्गिणम् ।

मुक्ताफलविचित्राङ्गं वस्त्रालङ्कृतविग्रहम् ॥
प्रवालकलसोपेतमिक्षुखण्डोपवेणुकम् ।
नितम्बं राजतं तस्य मेखलाकारसंस्कृतम् ॥
कुर्यात् ताम्रमयं स्कन्धं नानाधातुविभूषितम् ।
कृत्वा तमीदृशं शैलं सर्वधान्यसमावृतम् ॥
सर्वौषधिसमोपेतं सशृङ्गं समहाद्रुमम् ।
कल्पयित्वा विधानेन सवितानं विचक्षणैः ॥
कुण्डमेकं ततः कृत्वा चतुष्कोणं स्वलङ्कृतम् ।
नियोज्यास्तत्र विद्वांसो ब्राह्मणाः शंसितव्रताः ॥
पञ्चमो गुरुरत्रोक्तस्तान् सर्वान् पूजयेत् ततः ।
पूजितास्ते यथान्यायं होमं कुर्युरतन्द्रिताः ॥
लोकपालान् ग्रहाँश्चैव ब्रह्मादीँश्च विधानतः ।
स्वलिङ्गोक्तैश्च मन्त्रैश्च होमयेयुर्द्विजोत्तमाः ॥
महाव्याहृतिभिश्चैव अयुतं तत्र होमयेत् ।
आचार्यः सह विप्रैस्तैर्मौनेन सुसमाहितः ॥
ब्रह्मघोषरतस्तस्मिन् कारयित्वा महोत्सवम् ।
एवं विधिं तदा कृत्वा पूर्वेद्युः श्रद्धयान्वितः ॥
दद्यात् तं माघमासस्य तृतीयायां विशेषतः ।
चैत्रस्य वा विधानेन तृतीयायां प्रदापयेत् ॥
अन्येष्वपि च कालेषु ग्रहणादिषु कारयेत् ।
त्वं रसानां वरो नित्यं देवानां च सदा प्रियः ॥
सुखं प्रयच्छ मे नित्यं नमस्ते पर्वतोत्तम ।
यावद्भूः सागरा नद्यो यावच्चन्द्रार्कतारकाः ॥
तावन्मे त्वं सुखं यच्छ सौभाग्यमतुलं तथा ।

एवं संपूजयित्वा तं ब्राह्मणानां निवेदयेत् ॥
आचार्यं पूजयेत् पश्चाद्दीनान्धकृपणानपि ।
विसृज्य ब्राह्मणाँस्ताँस्तु कृत्वा चैव प्रदक्षिणम् ॥
तस्मिन् दिने च भोक्तव्यं मधुरं क्षारवर्जितम् ।
अनम्लालेपनं चैव कृतकृत्यो भवेन्नरः ॥
तस्माद्देयमिदं दानं फलमुत्तममिच्छता ।
गतिं च शास्वतीं लोके सौभाग्यं रूपमेव च ॥
अनेन विधिना चैव दातव्यो गुडपर्वतः ।
विंशद्भारस्तु कर्त्तव्यः शेषं पूर्ववदाचरेत् ॥
दानमेतत् प्रशस्तं स्यात् स्त्रीणां राजन् विशेषतः ।
सौभाग्यराजकामाय सर्वस्यापि विधीयते ॥
पूर्वोक्तं च फलं प्राप्य कृतकृत्यो हि जायते ।

इति ब्रह्माण्डपुराणोक्तो गुडपर्वतदानविधिः ।

## अथ सुवर्णाचलदानविधिः ।

पुलस्त्य उवाच ।

अथ पापहरं वक्ष्ये सुवर्णाचलमुत्तमम् ।
यस्य प्रदानाद्भवनं वैरिञ्चिं याति मानवः ॥
उत्तमः पलसाहस्रो मध्यमः पञ्चभिः शतैः ।
तदर्धेनाधमस्तद्वदल्पवित्तोऽपि शक्तितः ॥
दद्यादेकपलादूर्ध्वं यथाशक्त्या विमत्सरः ।
धान्यपर्वतवत् सर्वं विदध्याद्राजसत्तम ॥
विष्कम्भशैलास्तद्वच्च ऋत्विग्भ्यः प्रतिपादयेत् ।
नमस्ते ब्रह्मबीजाय ब्रह्मगर्भाय वै नमः ॥
यस्मादनन्तफलदस्तस्मात् पाहि शिलोच्चयः ।

यस्मादग्नेरपत्यं त्वं यस्मात् पुण्यं जगत्पतेः ॥
हैमपर्वतरूपेण तस्मात् पाहि नगोत्तमः ।
अनेन विधिना यस्तु दद्यात् कनकपर्वतम् ॥
स याति परमं ब्रह्मलोकमानन्दकारकम् ।
तत्र कल्पशतं तिष्ठेत् ततो याति परां गतिम् ॥

अत्र यद्यपि गुरवे मध्यशैलं दद्यादृत्विग्भ्यो विष्कम्भाचलानीत्युक्तम् । नापि तुलापुरुषवदित्यादि श्रूयते । तथापि पलसहस्रादिपरिमितसुवर्णदानार्हस्य एकस्यासुलभत्वादन्येष्वपि च बहुसुवर्णकेषु बहुभ्यो दानदर्शनात् । अत्रापि तुलापुरुषवदर्धचतुर्थभागादि गुरवे प्रदाय तदनुज्ञयाऽन्येभ्योऽपि दद्यादिति गम्यते । प्रकृतावदर्शनाच्चैवमिति चेन्मा भूत् प्रकृतौ तुलापुरुषादिस्थितमेव गृह्यत इति को विरोधः । एकश्च विध्यन्तो भवतीत्येकस्य प्रकृतिद्वयानुपपत्तिरिति चेदथ प्रकृतावप्येवमेव व्यवस्थेति ब्रूमः । लवणाचलादिसकलशैलदानप्रकृतिभूतस्य धान्यपर्वतस्य कथमन्यधर्मसंग्रह इति चेन्न प्रकृतेरप्यङ्गाङ्गिसापेक्षतया धान्यपर्वतेऽपि कुण्डमण्डपाचार्यलक्षणादितुलापुरुषधर्मग्रहणादर्शनात् । ततश्च द्रव्यबहुत्वे बहुभ्यो द्रव्याल्पत्वे ब्राह्मणपञ्चकाय स्वल्पतमत्वे आचार्यायैव देयमितिसिद्धम् ।

इति पद्मपुराणोक्तः सुवर्णाचलदानविधिः ।

## अथ तिलशैलदानविधिः ।

## पद्मपुराणे । पुलस्त्य उवाच ।

अथातः संप्रवक्ष्यामि तिलशैलं विधानतः ।
यत्प्रदानान्नरो याति विष्णुलोकमनुत्तमम् ॥
उत्तमो दशभिर्द्रोणैः पञ्चभिर्मध्यमो मतः ।
त्रिभिः कनिष्ठो विप्रेन्द्र तिलशैलः प्रकीर्त्तितः ॥
पूर्ववच्चापरं सर्वं वृक्षविष्कम्भकादिकम् ।
दानमन्त्रान् प्रवक्ष्यामि यथावद्राजसत्तम ॥

यस्मान्मधुवने विष्णोर्देहस्वेदसमुद्भवाः ।
तिलाः कुशाश्च माषाश्च तस्माच्छं नो भवन्त्विह ॥
हव्यकव्येषु यस्माच्च तिलैरेवाभिलक्षणम् ।
भवादुद्धर शैलेन्द्र तिलाचल नमोऽस्तु ते ॥
इत्यामन्त्र्य च यो दद्यात् तिलाचलमनुत्तमम् ।
स वैष्णवं पदं याति पुनरावृत्तिदुर्लभम् ॥
दीर्घायुष्यमवाप्नोति इह चामुत्र मानवः ।
पितृभिर्देवगन्धर्वैः पूज्यमानो दिवं व्रजेत् ॥

ब्रह्माण्डपुराणे । भगवानुवाच ।

अतः परं प्रवक्ष्यामि तिलपर्वतमुत्तमम् ।
यद्दानं सर्वदानानां परत्र फलदायि च ॥
तिलाः पवित्रमतुलं पवित्राणां च पावनाः ।
विष्णोर्देहसमुद्भूतास्तस्मादुत्तमतां गताः ॥
तिला भवन्ति रक्षार्थं जगतां त्रिसृणामपि ।
शुक्लपक्षे तु देवानां प्रदद्याद्यस्तिलोदकम् ॥
कृष्णपक्षे पितॄणां तु स्नात्वा श्रद्धासमन्वितः ।
तिलैः सप्ताष्टभिर्वापि समवेतं तिलाञ्जलिम् ॥
तस्य देवाः सपितरः तृप्ता यच्छन्ति वाञ्छितम् ।
श्वकाकोपहतं यत् तु पतितादिभिरेव च ॥
तिलैरभ्युक्षितं सर्वं पवित्रं स्यान्न संशयः ।
एवं विधैस्तिलैर्यस्तु कृत्वा पर्वतमुत्तमम् ॥
प्रदद्याद्द्विजमुख्याय पुण्यं तस्याक्षयं भवेत् ।
विधानं तस्य वक्ष्यामि माहात्म्यमपि चोत्तमम् ॥
व्यतीपातेऽयने चैव ग्रहणे शशिसूर्ययोः ।

जन्मर्क्षे विषुवे चैव देयं माघे विशेषतः ॥
तिलैर्यत् क्रियते माघे दानहोमादिकं तथा ।
तदक्षयं भवेल्लोके तर्पणादिकमेव च ॥
तथा नद्यां गृहे वाऽपि कृत्वा मण्डपमुत्तमम् ।
पूर्वोक्तेन विधानेन कुर्यात् सर्वमशेषतः ॥

'पूर्वोक्तेनेति' ब्रह्माण्डपुराणोक्तधान्यपर्वतस्थितेनेत्यर्थः ।

शतत्रयेण द्रोणानां शक्त्या वाऽपि प्रकल्पयेत् ।
पर्वतस्य चतुर्थेन भागेन परिकल्पयेत् ॥
दिशाचलात् मन्दरादींस्तिलैरेव विचक्षणः ।
ब्रह्मादिलोकपालाँश्च सौवर्णान् कारयेत् तथा ॥
इक्षुदण्डैः समन्तात् तु भूषयेद्यागमण्डपम् ।
कुण्डमेकं चतुष्कोणं पूर्वतः कारयेद्बुधः ॥
हस्तमात्रप्रमाणेन मेखलानाभिसंयुतम् ।
संस्थापयेद्द्विजाँस्तत्र चातुश्चरणिकान् शुचीन् ॥
पूर्वोक्तेन विधानेन तत्र होमो विधीयते ।
पूजयेत् पर्वतं चैव माल्यवस्त्रविभूषणैः ॥
मणिरत्नप्रवालैश्च प्रथमेऽहनि यत्नतः ।
विष्णुदेहसमुद्भूतैस्तिलैस्त्वं कारितो मया ॥
देवालय महामेरो नमस्ते भूभृतां वर ।
सप्त जन्मानि यत् किञ्चिन्मया पापमनुष्ठितम् ॥
क्षयं प्रयातु तत् सर्वं त्वत्प्रसादान्नगोत्तम ।
एवं संपूजयित्वा तु प्राप्य चैवाशिषं शुभाम् ॥
रात्रौ महोत्सवं कृत्वा पर्वतस्य समीपतः ।
पूजयित्वा द्विजान् सम्यक् सोपाध्यायान् समाहितः ॥

सहस्रं दक्षिणां दद्याच्छक्त्या वाऽपि प्रदापयेत् ।
अत्रापि गावो दातव्या अष्टौ चतस्र एव च ॥
प्रदक्षिणं ततः कृत्वा पर्वतं ब्राह्मणाँस्तथा ।
शिरसा प्रणिपत्याथ श्रद्धावाँस्तमनुव्रजेत् ॥
अनेन विधिना यस्तु दानमेतत् प्रयच्छति ।
स गच्छेत् पितृभिः सार्धं विष्णुलोकमनौपमम् ॥
विमानवरमारुह्य किङ्किणीजालमण्डितम् ।
अप्सरोगणसंवीतं गन्धर्वैरतिशोभितम् ॥
दशकोट्यस्तु वर्षाणां भुङ्क्ते भोगान् यथेप्सितान् ।
पुण्यक्षयादिहागत्य राजा भवति धार्मिकः ॥
नारी वा तस्य पत्नी वा सुभगा रूपसंयुता ।
दक्षा कुलोद्वहा चैव पुत्रपौत्रसमन्विता ॥
कृते युगेऽभिजायेत पश्चान्मोक्षमवाप्नुयात् ।
सगरेण ककुत्स्थेन धुन्धुमारेण वै पुरा ॥
मान्धात्रा यौवनाश्वेन कार्त्तवीर्येण चैव हि ।
दानमेतत् पुरा दत्तं तत्पत्नीभिस्तथैव च ॥
प्राप्तमैश्वर्यमतुलं कीर्त्तिर्लोके च शाश्वती ।
तस्माद्देयं सदा दानमेतद्राजवरोत्तमाः ॥
विधानमिदमाकर्ण्य निर्धनः श्रद्धयान्वितः ।
कपिलादानपुण्यस्य समं फलमवाप्नुयात् ॥

इति तिलपर्वतदानविधिः ।

**सनत्कुमार उवाच ।**

अथातः संप्रवक्ष्यामि तिलपर्वतमुत्तमम् ।
पूर्वोक्तस्थानकाले तु कृत्वा संपूजयेत् ततः ॥

अत्र पूर्वशब्देन लिङ्गपुराणोक्ततुलापुरुषदानमवगन्तव्यम् ।

सुसमे भूतले रम्ये वल्मीकादिविवर्जिते ।
दशतालप्रमाणेन दण्डं संस्थाप्य वै मुने ॥
अद्भिः संप्रोक्ष्य पश्चाद्धि तिलाँस्तस्मिन् विनिक्षिपेत् ।
तालः स्मृतो मध्यमया गोकर्णश्चाप्यनामया ॥

इत्यादिना तालमानमुक्तं परिभाषायाम् ।

प्रोक्षयेत् पञ्चगव्येन तं देशं ब्राह्मणोत्तमः ।
मण्डलं कल्पयेद्विद्वान् पूर्ववत् सुसमाहितः ॥
नववस्त्रैश्च संस्थाप्य द्रोणपुष्पं विकीर्य च ।
तस्मिँस्तु पर्वतं कुर्यात् तिलभारैर्विशेषतः ॥
दण्डात् प्रादेशमुत्सेध उत्तमे परिकीर्त्तितः ।
चतुरङ्गुलहीनस्तु मध्यमे परिकीर्त्तितः ॥
दण्डतुल्यः कनिष्ठे स्याद्दण्डहीने न कारयेत् ।
वेष्टयित्वा नवैर्वस्त्रैः परितः पूजयेत् क्रमात् ॥
सद्यादीनि प्रतिन्यस्य पूजयेद्विधिपूर्वकम् ।
अष्टदिक्षु च कर्त्तव्या देवानां मूर्त्तयः क्रमात् ॥
त्रिनिष्केण सुवर्णेन प्रत्येकं कारयेत् ततः ।

'सद्यादीनि' सद्योजातप्रभृतीनि । 'देवानां' लोकपालानाम् ।

दक्षिणा विधिना कार्या तुलापुरुषदानवत् ।
होमश्च पूर्ववत् प्रोक्तो यथावन्मुनिसत्तम ॥

तुलापुरुषोऽत्र लिङ्गपुराणोक्त एवेति विज्ञेयः ।

अर्चयेद्देवदेवेशं लोकपालसमावृतम् ।
तिलपर्वतमध्यस्थं तिलपर्वतरूपिणम् ॥
शिवार्चना च कर्त्तव्या सहस्रकलशादिभिः ।
दर्शयेत् तिलमध्यस्थं देवदेवमुमापतिम् ॥

पूजयित्वा विधानेन क्रमेण च विसर्जयेत् ।
श्रोत्रियाय दरिद्राय दापयेत् तिलपर्वतम् ॥
एवं तिलमयं प्रोक्तं दानं सर्वाधिकं परम् ।
यत् कृत्वा मानवो नूनं स्वर्गं मोक्षं च विन्दति ॥

अत्रैवं कृतिः प्रागुक्तमण्डपवेदीमण्डले गव्यैः प्रोक्ष्य दर्भान् द्रोणपुष्पादि चावकीर्य वस्त्रैराच्छाद्य यजमानो दशतालमितं दण्डं निधाय यवाक्षतशुद्धतिलैर्दण्डमाच्छादयन् शैलाकृतिं कुर्यात् । उत्तमे दण्डात् प्रादेशाधिक्यं मध्यमेऽष्टाङ्गुलाधिक्यं कनिष्ठपक्षे तु दण्डसाम्यं तिलराशेरिति । ततो वस्त्रैराच्छाद्य तं मेरुरूपं ध्यात्वा तदुपरि शिवं पलत्रयावरस्वर्णनिर्मितं संस्थाप्य सद्यादीनि न्यसेत् । तत्र प्रथमावरणे पञ्च ब्रह्माणि तद्बाह्ये सर्वादिमूर्त्तिं संस्थाप्य तद्बाह्ये भूम्यादिमूर्तीस्तद्बाह्ये लोकपालानिति । एते च सर्वे निष्कत्रयपरिमितेन हिरण्येन विधाय तत्तन्मन्त्रैः पूज्याः ।

तत्र शिवलक्षणमुक्तं ब्रह्माण्डदाने ।

## सद्योजातादिलक्षणमुक्तं मयदीपिकायाम् ।

सद्योजातं सितं कुर्याद्वरदाभयहस्तकम् ।
सौम्यं मौलीन्दुसम्पन्नं बालाकारं त्रिलोचनम् ॥
वामदेवं सुरक्ताङ्गं माल्यवस्त्रोपवीतकम् ।
तुङ्गनासं च खट्वाङ्गं खड्गखेटकपाणिनम् ॥
बभ्रुभ्रूश्मश्रुमौलीन्दुं दंष्ट्रालम्बिकृताननम् ।
पाशखेटेषुखट्वाङ्गकाययुक्तं चतुष्टये ॥
शूलदण्डकुठारासीन् दद्याद्दक्षेषु पाणिषु ।
पीताम्बरं सुसौम्यं च नरंकुङ्कुमसन्निभम् ॥
कुर्यान्मौलीन्दुसम्पन्नं पाशशूलधरं द्वयोः ।
स्फटिकाभं जगद्धेतुं त्रिनेत्रं चन्द्रमौलिनम् ॥
ईशानं पञ्चमं कुर्यात् त्रिशूलाभयपाणिनम्—इति ॥

## सर्वादिलक्षणमाह विश्वकर्मा ।

सर्वो भीमो महादेवो रुद्रः पशुपतिर्भवः ।
उग्रेशानाविति ह्यष्टौ मूर्त्यो ते शिवसन्निभाः ॥
मृगाङ्कचूडामणयो जटामण्डलमण्डिताः ।
त्रिनेत्रा वरखट्वाङ्गत्रिशूलाभयपाणयः—इति ॥

मूर्त्यष्टकमध्ये तु पृथिव्यप्तेजोवाय्वाकाशानां रूपाणि पञ्चमहाभूतघटदाने-निरूपितानि । चन्द्रार्कयोस्तु वरदानप्रकरणे वक्ष्यन्ते । यजमानमूर्त्तिस्तु विशेषानुक्तेरितरपुरुषतुल्यैव वेदितव्या । लोकपाललक्षणमुक्तं ब्रह्माण्डदाने । ततः पूजानन्तरं तत्तन्मन्त्रैः समिदादि हुत्वा पृथक्स्थस्य शिवस्य सहस्रकलशाभिषेकं कृत्वा यजमानाय तिलपर्वतागस्थं शिवं प्रदर्शयेदाचार्यः । यजमानस्तु शिवादीनभ्यर्च्य तं शैलं श्रोत्रियाय प्रदापयेत् । आचार्यादिदक्षिणादि पूर्ववत् ।

अत्राद्ये यजमानमधिकृत्य—

## कालोत्तरतन्त्रेषु ।

अथ वा परमेशानमष्टोत्तरशतैरपि ।
कलशैः स्नापयित्वा तु समभ्यर्च्य यथाविधि ॥
कुर्यात् प्रदानमन्त्रेण गुरुरष्टोत्तरं सुधीः ।
महादेवो महारुद्रः शङ्करो नीललोहितः ॥
ईशानो विजयो भीमो देवदेवो भवोद्भवः ।
कपालीशश्च विज्ञेयो रुद्रा एकादश त्विमे ॥
समन्तात् सकलेशस्य पूजनीया यथाक्रमम् ।
कृष्णाजिने संप्रपूज्य तिलानां षोडशाधिकैः ॥
सुवर्णत्रयसंयुक्तं वस्त्रयुग्मेन वेष्टितम् ।
शोभितं पुष्पमालाभिः फलैश्च समलङ्कृतम् ॥
रुद्रानेकादश ध्यात्वा क्रमेण परिदापयेत् ।
शिवभक्ताय शान्ताय श्रोत्रियाय द्विजन्मने ॥

एवं यः कुरुते भक्त्या विधिनानेन संयुतः ।
आयुः श्रियं जयं कीर्त्तिमनुभूय शिवं व्रजेत् ॥

इति लिङ्गपुराणोक्तस्तिलपर्वतदानविधिः ।

अथातः संप्रवक्ष्यामि तिलपर्वतमुत्तमम् ।
यस्य प्रदानात् सकलं क्षयमेष्यति पातकम् ॥
सप्तजन्मान्तरे यत् स्यात् पापं भ्रूणवधादिकम् ।
तत्सर्वं क्षयमभ्येति तिलपर्वतदानतः ॥
पुण्यकालेषु सर्वेषु उपरागे विशेषतः ।
पुण्यदेशे प्रयत्नेन दातव्यं तिलपर्वतम् ॥
देवालयस्य पुरतो मण्डपं कारयेद्बुधः ।
प्रविभक्तचतुर्द्वारं चतुस्तोरणसंयुतम् ॥
दशद्वादशहस्तं वा चतुरस्रं सुसंस्थितम् ।
वितानोपरिसंच्छन्नं दिग्वितीर्णवितानकम् ॥
द्वारेषु पूर्णकलशान् स्थापयित्वा द्वयं द्वयम् ।
पूर्वस्मिन् दिवसे प्रातः कुर्यात् पुण्याहवाचनम् ॥
ततः संकल्पयित्वा तु गुरुं वेदाङ्गपारगम् ।
वशिनं पुण्यचरितं युवानं कृतलक्षणम् ॥
ऋत्विजश्चाष्ट संग्राह्या वेदवेदाङ्गपारगाः ।
तेषां निवेदयेत् कार्यं श्वः प्रदास्ये तिलाचलम् ॥
ततो गुरुं महादेवं पूजयित्वा विधानतः ।
विनायकमुमां चैव ततः सूत्रं प्रपातयेत् ॥
मण्डपे नवकोष्ठानि कल्पयित्वा समन्ततः ।
अष्टौ कुण्डानि कार्याणि ईशाने नवमं भवेत् ॥
मध्यकोष्ठं प्रविस्तीर्य सितवस्त्राणि सर्वतः ।

तिलैः शुद्धैर्महामेरुं मध्ये कार्य्यं प्रयत्नतः ॥
उत्तमस्त्रिपलैर्भारैर्द्वयेकाभ्यां मध्यमाधमौ ।
षड्भागेन ततः कार्य्याः समन्ताद्वर्षपर्वताः ॥
माल्यवान्निषधश्चैव हिमवान् हेमकूटकः ।
गन्धमादनशैलश्च शृङ्गवच्छ्वेतशैलकौ ॥
ऐन्द्रादिषु निधातव्या वासोभि*श्छादयेद्बहिः ।
कल्पद्रुमस्तु सौवर्णः सर्वरत्नोपशोभितः ॥
सर्वपुष्पफलोपेतो न्यस्तव्यो मेरुमूर्धनि ।
हैमान् मृगान् खगाँश्चापि द्रुमाँश्चापि विनिर्दिशेत् ॥
सर्वशैलेषु मन्दारमृगपक्ष्यादिकं च यत् ।
निधातव्यं प्रयत्नेन तुरीयांशेन मेरुतः ॥
सुमेरोर्द्वादशपलं दशाष्टौ वाप्यनुक्रमात् ।
सुवर्णस्य प्रमाणं स्यादुत्तमाधममध्यमम् ॥
अधस्तात् कल्पवृक्षाणां सौवर्णकमले हरम् ।
सुखासीनं चतुर्बाहुं जटामुकुटमण्डितम् ॥
त्रिनेत्रं सौम्यवदनं सौवर्णं न्यस्य पूजयेत् ।
शिवनामा तु मध्ये स्याद्भवः शम्भुस्त्रिलोचनः ॥
स्थाणुरीशो महादेवः शङ्करश्चन्द्रशेखरः ।
पूर्वादिषु महादेवमेभिर्नामभिरर्चयेत् ॥
दिवा हविष्यभोजी स्यात् सगुरुस्ते च ऋत्विजः ।
स्वेन स्वेन विधानेन गृह्योक्तेन विशेषतः† ॥
हुत्वाज्यभागौ जुहुयाद्यथोक्तं सर्वमाचरेत् ।
वस्त्रैः प्रपूजयेत् सर्वानृत्विजो गुरुमेव च ॥

---

* वासोद इति प्र॰ न॰ पु॰ पाठः ।
† विपश्चित इति वा पाठः ।

द्विगुणं गुरवे दद्यात् कुण्डलैरङ्गुलीयकैः ।
उपानच्छत्रशय्याभिरासनैः पादुकेन च ॥
ततो विमल आदित्ये पुण्यकाल उपस्थिते ।
अनुज्ञातस्तु तैर्विप्रैर्यजमानः प्रसन्नधीः ॥
सर्वौषधिजलस्नातः क्षौमवासाः स्वलङ्कृतः ।
प्रदक्षिणं गिरिं कृत्वा विप्रानाहूय यत्नतः ॥
ज्ञानिनो गुणसम्पन्नानात्मनिष्ठानलोलुपान् ।
वेदवेदाङ्गविदुषस्तं च देवं प्रकल्प्य च ॥
तस्य तस्य गिरेः पार्श्वे तत्तन्नाम्ना प्रपूजयेत् ।
मेरुं तत्प्रथमं दद्याच्छिवः संप्रीयतामिति ॥
गुणोत्कृष्टाय विप्राय भावयित्वा तु तं शिवम् ।
एवं पूर्वादिशैलाँस्तु तत्तन्नाम्ना प्रदापयेत् ॥
प्रीयतामिति तान् विप्राँस्तत्तद्देवं प्रकल्प्य च ।
सर्वं क्रियाकलापं च निवेद्य परमेष्ठिनम् ॥
पूजयित्वा द्विजानग्रे दीनान्धकृपणाँस्ततः ।
आशीर्मङ्गलसंयुक्तस्ततो बन्धुसमन्वितः ॥
अनेन विधिना यस्तु दद्यात् तिलमयं गिरिम् ।
न तस्य विद्यते किञ्चित् पापं सप्तजनोद्भवम् ॥
विधानेन शिवं गच्छेन्निष्कामो यः समाचरेत् ।
सकामो लभते कामान् यं यमिच्छति चेतसा ॥

इति प्रश्नोत्तरतन्त्रोक्तस्तिलशैलदानविधिः ।

## अथ कार्पासपर्वतदानविधिः ।

**पद्मपुराणे ।**

कार्पासपर्वतस्तद्वद्विंशद्भारैरिहोत्तमः ।

दशभिर्मध्यमः प्रोक्तः कनिष्ठः पञ्चभिः स्मृतः ॥
भारेणाल्पधनो दद्याद्वित्तशाठ्यविवर्जितः ।
धान्यपर्वतवत् सर्वमासाद्यं राजसत्तम ॥
प्रभातायां तु शर्वर्यां दद्यादिदमुदीरयेत् ।
त्वमेवाचरणं यस्माल्लोकानामिह सर्वदा ॥
कार्पासाचल तस्मात् त्वमघौघध्वंसनो भव ।
एवं कर्पासशैलेन्द्रं यो दद्यात् पर्वसन्निधौ ॥
रुद्रलोके वसेत् कल्पं ततो राजा भवेदिह ।

ब्रह्माण्डपुराणे । भगवानुवाच ।

अतः परं प्रवक्ष्यामि कर्पासाचलमुत्तमम् ।
परमं सर्वदानानां प्रियं सर्वदिवौकसाम् ॥
देशकालौ समासाद्य धनं श्रद्धां च यत्नतः ।
देयमेतन्महादानं तारणार्थं कुलस्य च ॥
पर्वतं कल्पयेत् तत्र कार्पासेन विधानतः ।
पूर्वोक्तेन विधानेन कृत्वा सर्वं विधानतः ॥
विंशद्भारस्तु कर्त्तव्य उत्तमः पर्वतो बुधैः ।
मध्यमो दशभिः कुर्याज्जघन्यं पञ्चभिस्तथा ॥
सर्वधान्यसमूहस्य मध्ये ह्योषधिभिर्वृतम् ।
रसै रत्नैश्च संयुक्तं लोकपालावृतं तथा ॥
ब्रह्मादयस्तथा शृङ्गे काञ्चनेन विनिर्मिताः ।
कुलाकुलाँश्च चतुरश्चतुर्भागेन कल्पयेत् ॥
सौवर्णशिखरान् सर्वान् सर्वरत्नोपशोभितान् ।
नानाधातुविचित्राङ्गान् भक्ष्यभोज्यसमावृतान् ॥
कुण्डे वा स्थण्डिले वापि तत्र होमो विधीयते ।

ऋत्विजश्च तथा चाष्टौ कारयेद्वेदवित्तमान् ॥
होमो व्याहृतिभिश्चैव अग्नौ तद्दैवतैरपि ।
गन्धेन सर्पिषा तत्र तथा कृष्णतिलैरपि ॥
अयुतं होमसंख्या च पालाशसमिधस्तथा ।
शङ्खतूर्यनिनादैश्च तथा मङ्गलपाठकैः ॥
उत्सवं कारयेत् तत्र दिनमेकमतन्द्रितः ।
पर्वकाले ततो दद्यात् पूजयित्वा विधानतः ॥
नमः सर्वामरावास भूतसङ्घैरभिष्टुत ।
ब्रह्मादयो मे वरदा भवन्तु विबुधाः सदा ॥
इत्युच्चार्य नरो दद्यान्नारी वा विधिपूर्वकम् ।
पूजयित्वा द्विजान् सम्यक् वासोभिर्भूषणैस्तथा ॥
अनेन विधिना यस्तु दानमेतत् प्रयच्छति ।
स गच्छेत्त्रिदशावासं विमानोपरि संस्थितः ॥
अप्सरोगणसंवीतो गन्धर्वैरभिसंस्थितः ।
तत्र मन्वन्तरं यावदुषित्वा विबुधालये ॥
पुण्यक्षयादिहाभ्येत्य महीं भुङ्क्ते ससागराम् ।
रूपवान् सुभगो वाग्मी श्रीमानतुलविक्रमः ॥
पञ्चजन्मानि नारी वा जायते नात्रसंशयः ।
भूयश्च शृणु राजेन्द्र दिव्यं कार्पासपर्वतम् ॥
तं च भारशतेनैव कुर्यादर्धेन वा पुनः ।
शेषं पूर्वविधानेन सर्वं कुर्याद्यथाक्रमम् ॥
फलं पूर्वोदितं चैव जायते नृपसत्तम ।

इति कर्पासपर्वतदानविधिः ।

## अथ घृताचलदानविधिः ।

## पुलस्त्य उवाच ।

अथातः संप्रवक्ष्यामि घृतशैलमनुत्तमम् ।
तेजोऽमृतमयं दिव्यं महापातकनाशनम् ॥
विंशत्या घृतकुम्भानामुत्तमः स्याद्घृताचलः ।
दशभिर्मध्यमः प्रोक्तः पञ्चभिरधमः स्मृतः ॥
अल्पवित्तः प्रकुर्वीत द्वाभ्यां मेरुविधानतः ।
विष्कम्भपर्वतांस्तद्वच्चतुर्भागेन कल्पयेत् ॥
शालितण्डुलपात्राणि कुम्भोपरि निवेशयेत् ।
कारयेत् संहतान् सर्वान् यथाशोभं विधानतः ॥
वेष्टयेच्छुक्लवासोभिरिक्षुदण्डफलादिकैः ।
धान्यपर्वतवच्छेषविधानमिह पठ्यते ॥
अधिवासं च कुर्वीत तद्वद्धोमं सुरार्चनम् ।

अत्र पलसहस्रपरिमितं घृतं घृतकुम्भः प्रसिद्धः । कुम्भग्रहणे तस्यानियतपरिमाणत्वादनवस्थितशास्त्रार्थप्रसङ्गात् तच्च द्रवद्रव्यत्वादाधारमपेक्षत इति ।

शालितण्डुलपात्राणि कुम्भोपरि निवेशयेत् ।

इत्यनेन तस्य कलशाधारत्वं प्रतिपाद्यते । 'तण्डुलपात्राणीति' पर्वतपञ्चकापेक्षया बहुवचनम् ।

प्रभातायां तु शर्वर्यां गुरवे विनिवेदयेत् ।
विष्कम्भपर्वतांस्तद्वदृत्विग्भ्यः शान्तमानसः ॥
संयोगाद्घृतमुत्पन्नं यस्मादमृततेजसः ।
तस्माद्घृतार्चिर्विश्वात्मा प्रीयतामत्र शङ्करः ॥
यस्तु तेजोमयं ब्रह्म घृते तच्च व्यवस्थितम् ।
घृतपर्वतरूपेण तस्मान्नः पाहि भूधर ॥

अनेन विधिना दद्याद्घृताचलमनुत्तमम् ।
महापातकयुक्तोऽपि लोकमायाति शाङ्करम् ॥
हंससारसयुक्तेन किङ्किणीजालमालिना ।
विमानेनाप्सरोभिश्च सिद्धविद्याधरैर्वृतः ॥
विहरेत् पितृभिः सार्धं यावदाभूतसंप्लवम् ।

इति पद्मपुराणोक्तो घृतपर्वतदानविधिः ।

## अथ रत्नाचलदानविधिः ।

## पुलस्त्य उवाच ।

अतः परं प्रवक्ष्यामि रत्नाचलमनुत्तमम् ।
मुक्ताफलसहस्रेण पर्वतः स्याद्द्विजोत्तमः ॥
मध्यमः पञ्चशतिकस्त्रिशतेनाधमः स्मृतः ।
चतुर्थांशेन विष्कम्भपर्वताः स्युः समन्ततः ॥
पूर्वेण वज्रगोमेदैर्दक्षिणे इन्द्रनीलकैः ।
पुष्परागयुतैः कार्यो विद्वद्भिर्गन्धमादनः ॥
वैदूर्यविद्रुमैः पश्चात् सन्मिश्रो विपुलाचलः ।
पद्मरागैः ससौपर्णैरुत्तरेण तु विन्यसेत् ॥

'वज्रगोमेदैः' समसंख्यैः समं स्यादश्रुतत्वादिति न्यायादेवमुत्तरत्रापि विज्ञेयम् ।
'सौपर्णैः' गरुडात्मजैः । सौवर्णैरिति क्वचित् पाठः ।

धान्यपर्वतवत् सर्वमत्रापि परिकल्पयेत् ।
तद्वदावाहनं कुर्याद्वृक्षान् देवांश्च काञ्चनान् ॥
पूजयेत् पुष्पपानीयैः प्रभाते च विसर्जनम् ।
पूर्ववद्गुरुऋत्विग्भ्य इमान् मन्त्रानुदीरयेत् ॥
यथा देवगणाः सर्वे सर्वरत्नेष्वपि स्थिताः ।
त्वं च रत्नमयो नित्यमतः पाहि महाचल ॥

यस्माद्रत्नप्रदानेन वृष्टिं प्रकुरुते हरिः ।
महारत्नप्रदानेन तस्मान्नः पाहि पर्वत ॥
अनेन विधिना यस्तु दद्याद्रत्नमयं गिरिम् ।
स याति वैष्णवं लोकममरेश्वरपूजितः ॥
यावत्कल्पशतं साग्रं वसेदिह नराधिप ।
रूपारोग्यगुणोपेतः सप्तद्वीपाधिपो भवेत् ॥
ब्रह्महत्यादिकं किञ्चिद्यदत्रामुत्र वा कृतम्
तत् सर्वं नाशमायाति गिरिर्वज्रहतो यथा

इति पद्मपुराणोक्तो रत्नपर्वतदानविधिः ।

## अथ रूप्याचलदानविधिः ।

## पुलस्त्य उवाच ।

अतः परं प्रवक्ष्यामि रूप्याचलमनुत्तमम् ।
यत्प्रदानान्नरो याति सोमलोकं द्विजोत्तमः ॥
दशभिः पलसाहस्रैरुत्तमो राजताचलः ।
पञ्चभिर्मध्यमः प्रोक्तस्तदर्धेनाधरः स्मृतः ॥
अशक्तो विंशतेरूर्ध्वं कारयेच्छक्तितः सदा ।
विष्कम्भपर्वताँस्तद्वत् तुरीयांशेन कल्पयेत् ॥
पूर्ववद्राजतान् कुर्यात् मन्दरादीन् विधानतः ।
कलधौतमयाँस्तत्र लोकेशानर्चयेद्बुधः ॥

'कलधौतं' काञ्चनम् ।

ब्रह्मविष्ण्वर्कवान् कार्यो नितम्बोऽत्र हिरण्मयः ।
राजतं स्याद्यदन्येषां सर्वं तदिह काञ्चनम् ॥
शेषं च पूर्ववत् कुर्याद्धोमजागरणादिकम् ।
दद्यात् तद्वत् प्रभाते तु गुरवे रौप्यपर्वतम् ॥

विष्कम्भशैलान् ऋत्विग्भ्यः पूज्य वस्त्रविभूषणैः ।
इमं मन्त्रं पठन् दद्याद्दर्भपाणिर्विमत्सरः ॥
पितॄणां वल्लभं यस्माद्धरेस्य शङ्करस्य च ।
रजतं पाहि तस्मान्नः शोकसंसारसागरात् ॥
इत्थं निवेश्य यो दद्याद्राजताचलमुत्तमम् ।
गवायुतसहस्रस्य फलं प्राप्नोति मानवः ॥
सोमलोके स गन्धर्वैः किन्नरोऽप्सरसां गणैः ।
पूज्यमानो वसेद्विद्वान् यावदाभूतसंप्लवम् ॥

इति पद्मपुराणोक्तो रूप्याचलदानविधिः ।

## अथ शर्कराचलदानविधिः ।

### पुलस्त्य उवाच ।

अथातः संप्रवक्ष्यामि शर्कराचलमुत्तमम् ।
यस्य प्रदानाद्विष्णवर्करुद्रास्तुष्यन्ति सर्वदा ॥
अष्टभिः शर्कराभारैरुत्तमः स्यान्महाचलः ।
चतुर्भिर्मध्यमः प्रोक्तो भाराभ्यामधरः स्मृतः ॥
भारेण वाऽर्धभारेण कुर्याद्यः स्वल्पवित्तवान् ।
विष्कम्भपर्वतान् कुर्यात् तुरीयांशेन मानवः ॥
धान्यपर्वतवत् सर्वमासाद्यामरसंयुतम् ।
मेरोरुपरि तद्वच्च स्थाप्यं हेमतरुत्रयम् ॥
मन्दारः पारिजातश्च तृतीयः कल्पपादपः ।
एतद्वृक्षत्रयं मूर्ध्नि सर्वेष्वपि निवेशयेत् ॥
हरिचन्दनसन्तानौ पूर्वपश्चिमभागयोः ।
निवेश्यौ सर्वशैलेषु विशेषाच्छर्कराचले ॥
मन्दारे कामदेवश्च प्रत्यग्वक्त्रः सदा भवेत् ।

गन्धमादनशृङ्गे च धनदः स्यादुदङ्मुखः ॥
प्राङ्मुखो वेदमूर्त्तिश्च हंसः स्याद्विपुलाचले ।
हैमी सुपार्श्वे सुरभी दक्षिणाभिमुखी भवेत् ॥
धान्यपर्वतवत् सर्वमावाहनमखादिकम् ।
कृत्वाथ गुरवे दद्यान्मध्यमं पर्वतोत्तमम् ॥
ऋत्विग्भ्यश्चतुरः शैलानिमान्मन्त्रानुदीरयेत् ।
सौभाग्यामृतसारोऽयं परमं शर्करा यतः ॥
तन्ममानन्दकारी त्वं भव शैलेन्द्र सर्वदा ।
अमृतं पिवतां ये तु निपेतुर्भुवि सीकराः ॥
देवानां तत्समं सोमं पाहि नः शर्कराचल ।
मम भवतु मध्या यदुद्भूताशर्करा यतः ॥
तन्मयोऽसि महाशैल पाहि संसारसागरात् ।
यो दद्याच्छर्कराशैलमनेन विधिना नरः ॥
सर्वपापविनिर्मुक्तः प्रयाति शिवमन्दिरम् ।
चन्द्रादित्यप्रतीकाशमधिरुह्यानुजीविभिः ॥
सहैव यानमातिष्ठेत् स तु विष्णुप्रचोदितः ।
ततः कल्पशतान्ते तु सप्तद्वीपाधिपो भवेत् ॥
आयुरारोग्यसंपन्नो यावज्जन्मायुतत्रयम् ।
भोजनं शक्तितः कुर्यात् सर्वशैले विमत्सरः ॥
सर्वत्राक्षारलवणमश्नीयात् तदनुज्ञया ।

'भोजनं कुर्यादिति' दानानन्तरं यथाशक्ति ब्राह्मणेभ्यो भोजनदानं कुर्यादित्यर्थः । स्वयमप्यक्षारलवणमश्नीयादिति ।

पर्वतोपस्करान् सर्वान् प्रापयेद्ब्राह्मणालयम् ।
पश्येदिमानप्यधनोऽपि भक्त्या स्पृशेन्मनुष्यैरिह दीयमानान् ।

शृणोति भक्त्याऽथ मतिं ददाति निष्कल्मषः सोऽपि दिवं प्रयाति ॥

दुःस्वप्नप्रशममुपैति पठ्यमानैः
शैलेन्द्रैर्भवभयभेदनैर्मनुष्यः ।
यः कुर्यात् किमु मुनिपुङ्गवेह सम्यक्
सत्त्वात्मा सकलगिरीन्द्रसंप्रदानम् ॥

इति पद्मपुराणोक्तः शर्कराचलदानविधिः ।

## अथ शैवानि द्वादशमेरुदानानि निरूप्यन्ते ।

## तत्र कालोत्तरशैवशास्त्रे ।

अथातः संप्रवक्ष्यामि मेरुदानं यथाक्रमम् ।
आकार्त्तिकात् समारभ्य मेरुव्रतं समाचरेत् ॥
कार्त्तिक्यां रत्नमेरुश्च दातव्यस्तु शिवाग्रतः ।
सर्वेषां चैव मेरूणां प्रमाणं क्रमशः शृणु ॥
वज्रपद्ममहानीलनीलस्फटिकसंज्ञकाः ।
पुष्पं मरकतं मुक्ता ग्राह्याः स्वविभवेन तु ॥
प्रस्थमात्रास्तु संग्राह्याः प्रस्थादर्धार्धमेव वा ।
यथाशक्त्याऽथ वा देया वित्तशाठ्यं विना सुत ॥
मेरोर्विभागं वक्ष्यामि शिवस्याग्रे यथार्चयेत् ।
कर्णिकायां न्यसेन्मेरुं ब्रह्मविष्ण्वशभूषितम् ॥
तत्सर्वे माल्यवान् नाम पर्वतं पूजयेत् तदा ।
तत्पूर्वे भद्रसंज्ञं तु अश्ववृक्षास्ततः परम् ॥
मेरुतः पूर्वदिग्भागे पूर्वपूर्वोत्तरत्रयम् ।
कथितं स विशेषेण दक्षिणस्यां ततः परम् ॥
निषधो हेमकूटश्च हिमवाँश्च तथा त्रयम् ।
एवमुत्तरभागे तु नीलः श्वेतश्च शृङ्गवान् ॥

पश्चिमे गन्धमादाख्यं केतुं वै केतुमाल्यकम् ।
एवं द्वादशसंयुक्तं मेरुं पर्वतनायकम् ॥
सोपवासः शुचिर्भूत्वा विशेषात् पूजयेच्छिवम् ।
महास्नानं प्रकर्त्तव्यं महापूजाऽथ वा सुत* ॥
पूजान्ते देवदेवाग्रे रत्नमेरुं प्रकल्पयेत् ।
प्रदद्याच्छिवविप्राय शिवमन्त्रमनुस्मरेत् ॥

## महास्नानं महापूजा च लिङ्गपुराणे ।

महास्नानं च यः कुर्याद्घृतेन विधिनैव तु ।
स याति मम सायुज्यं स्थानेष्वेतेषु सुव्रते ॥
स्नानं पलशतं ज्ञेयमभ्यङ्गं पञ्चविंशतिः ।
पलानां द्वे सहस्रे तु महास्नानं प्रकीर्त्तितम् ॥
स्नाप्यं लिङ्गं मदीयं च गव्येनैव घृतेन च ।
विशोध्य सर्वद्रव्यैस्तु यावद्भिरभिषिञ्चति ॥
महास्नाने प्रसक्ते तु स्नानमष्टगुणं स्मृतम् ।
जलेन केवलेनैव गन्धतोयेन शक्तितः ॥
अनुलेपनं च तत्सर्वं पञ्चविंशत्पलेन वै ।
शमीपत्रं च विधिना विल्वपत्रं च पङ्कजम् ॥
अथान्यानि च पत्राणि विल्वपत्रं न संत्यजेत् ।
दशद्रोणैस्तु नैवेद्यमष्टद्रोणैरथापि वा ॥
दशद्रोणसमं पुण्यमाढके तु विधीयते† ।
वित्तहीनस्य भक्तस्य नात्र कार्या विचारणा ॥
भेरीमृदङ्गमुरजतिमिला(?)पटहादिभिः ।

---

* पुनरिति पाठान्तरम् ।

† विलीयते इति न· प्र· पु· पाठः ।

वादित्रैर्विविधैश्चान्यैरान्दोलैर्विविधैरपि ॥
जागरं कारयेत् तत्र प्रार्थयेत् तु तथाक्रमम् ।
स्वभृत्यपुत्रदारैश्च तथा सम्बन्धिबान्धवैः ॥
सार्धं प्रदक्षिणं कृत्वा प्रार्थयेल्लिङ्गमैश्वरम् ।
द्रव्यहीनैः क्रियाहीनैः श्रद्धाहीनैः सुरेश्वर ॥
कृतं वाप्यकृतं वाऽपि क्षन्तुमर्हसि शङ्कर ।
इत्युक्त्वा चैव रुद्रं च त्वरितं शान्तिमेव च ॥
म इत्येव* महावीजं तथा पञ्चाक्षरस्य वै ।

मेरोरनुमन्त्रणमन्त्रास्तु कालोत्तर एवोक्ताः ।

नमः काञ्चनदेहाय धराधराय वै नमः ।
ब्रह्मविष्ण्वीशशृङ्गाय धरानाभिस्थिताय च ॥
नगद्वादशनाथाय सर्वपापापहारिणे ।
शिवभक्ताय शुद्धाय त्राणं मे कुरु सर्वदा ॥
निष्पापः पितृभिः सार्धं शिवं गच्छामि हूँ नमः ।
त्वं शिवस्तु शिवस्याग्रे शिवोऽहं च शिवाय च ॥
निवेदयामि भक्त्या तु पितॄणां तारणाय च–इति ।

तथा ।

वस्त्राश्वसहितो मेरुस्तत्र पुण्यफलं शृणु ।
लक्षयोजनमानस्य मेरोर्ये परमाणवः ॥
तावत्कल्पसहस्राणि शिवलोके महीयते ।
उद्धरेन्नरकात् सोऽपि त्रिसप्तकुलसन्ततिम् ॥
तदन्वयगता ये तु डिम्भाडिम्भहता नराः ।
महापातकिनश्चान्ये तथा विश्वासघातकाः ॥

---

* मन्त्राद्यं च महावीजमिति प्र॰ न॰ पु॰ पाठः ।

गुरुद्रोहकृता ये तु भ्रूणहाः पितृघातकाः ।
प्रसवे तु मृता नारी कुमारी शीलदूषिता ॥
तां वा रुद्रस्य सामीप्यं स नयेन्मेरुदानकृत् ।
मेरुदानं च मनसा यः स्मरेत् तु शिवाग्रतः ॥
यात्यसौ शिवलोकं तु देहान्ते धौतकिल्बिषः ।
हेममेरुप्रमाणं तु फलं चैव शृणुष्व तत् ॥
पलानां तु सहस्रेण मध्ये मेरुं प्रकल्पयेत् ।
शृङ्गत्रयसमायुक्तं ब्रह्मविष्णुहरान्वितम् ॥
एकैकं पर्वतं तस्य शतैकैकेन कारयेत् ।
मेरुणा सह पूर्वेण विख्यातास्तु त्रयोदश ॥
एवं शिवाग्रतो मेरुर्दातव्यस्तु प्रयत्नतः ।
अयनेषु च सर्वेषु ग्रहणेषु विशेषतः ॥
आचार्याय प्रदातव्यः संहितापारगाय च ।
पूर्वोक्तस्य महामेरोः सनगस्य महात्मनः ॥
शिवलोके वसेत् सोऽपि यावत् तत्परमाणवः ।
पितॄन् पितामहाँश्चैव तथैव प्रपितामहान् ॥
पुत्रान् पौत्रान् प्रपौत्राँश्च तारयेत् किमतः परम् ।
भोगान् भुक्त्वा महीं कृत्स्नां भुङ्क्ते च शिवभाविनः ॥
दरिद्रो रूप्यमेरुं तु हेममानेन कारयेत् ।
पर्वता द्वादश तथा संकल्प्यारचनान्विताः ॥
उत्तरे ह्ययने देयं देयं वा ग्रहणद्वये ।
प्रागुक्तं तु फलं तस्य भवत्यत्र न संशयः ॥
भूमिमेरुप्रमाणं तु कथ्यमानं शृणुष्व तत् ।
विषयं मण्डलं चाऽथ ग्रामं वा पर्वतं स्मरेत् ॥

शेषास्तदष्टमांशेन नगाः स्यू रविसंख्यया ।
भूमिपर्वतपुण्यं तु को वा वर्णयितुं क्षमः ॥
परमाणुव्रजो यावत् क्षितीशो भवति ध्रुवम् ।
तावत्कोटिसहस्राणि शिवलोके महीयते ॥
भोगान् भुक्त्वा ततो राजा जायते योगिनां कुले ।
ज्ञानं प्राप्य तदा तस्य पुनर्जन्म न विद्यते ॥
हस्तिमेरुं ततो वक्ष्ये संक्षेपात् पार्वतीसुत ।
न वृद्धं न तथा बालं रक्तपुच्छसुशोभितम् ॥
शूरं सर्वगुणोपेतं घण्टाचामरभूषितम् ।
नक्षत्रमालासंयुक्तं शस्त्रध्वजविभूषितम् ॥
दिव्यवस्त्रसमायुक्तं सुवर्णरचनायुतम् ।
सूर्यस्य ग्रहणे देयं गुरवे तं शिवाग्रतः ॥
तेन दत्तेन दत्तं तु लक्षयोजनपर्वतम् ।
पुरुषत्रयसमायुक्तं पर्वतद्वादशान्वितम् ॥
मुच्यते सर्वपापेभ्यः शिवसायुज्यतां व्रजेत् ।
पितरस्तस्य मोदन्ते रुद्रलोके समन्ततः ॥
एतत् तव समाख्यातं हस्तिदानं समासतः ।
अथाश्वमेरुर्वा देयो यो दत्तो रविणा पुरा ॥
श्वेतैर्विनीतैः सुवर्णैः प्रत्यग्रैः पञ्चसंख्यया ।
मध्ये मेरुः कल्पितव्यो रविसंख्यास्तु पर्वताः ॥
सवस्त्रहेमदारैश्च सप्त वा ध्वजभूषिताः ।
वैशाख्यां वाऽथ कार्त्तिक्यां दातव्यस्तु शिवाग्रतः ॥
विप्राय शिवभक्ताय संहितापारगाय च ।
तस्मै देयो यथोक्तस्तु हयमेरुर्विधानतः ॥

संपूज्य परया भक्त्या हेमकङ्कणकुण्डलैः ।
रसनामुकुटेनैव अङ्गुलीयद्वयेन च ॥
सर्वेषां चैव दाने तु भूषणैर्भूषयेत् तदा ।
अकृत्रिमैर्भूषणैस्तु राजा मेरुं विभूषयेत् ॥
अश्वमेरुप्रदानेन रुद्रलोके महीयते ।
यावन्त्यश्वेषु रोमाणि तावद्वर्षायुतानि च ॥
महाकल्पसहस्राणि रुद्रलोके महीयते ।
अश्वालाभे दरिद्रस्तु गोमेरुं वा प्रकल्पयेत् ॥
अश्वसंख्याप्रमाणेन फलं चैतत् समं भवेत् ।
अथ वा वस्त्रमेरुश्च दातव्यस्तु शिवाग्रतः ॥
भारमात्रेण पञ्चैस्तु नानावर्णैः सुपर्वतः ।
मध्ये मेरुः कल्पनीयो वस्त्रैः शेषांस्तु कल्पयेत् ॥
मेरवस्तस्य मानेन नानावर्णैः सुशोभितैः ।
प्रत्येकं पर्वताः कल्प्या हेमशृङ्गाः सुवर्णकाः ॥
शिवभक्ताय विप्राय दातव्यास्तु शिवाग्रतः ।
दिव्यैश्वर्य्यपदं याति सहस्रक्रतुसंभवम् ॥
दिव्यं वर्षशतं सम्यक् कुर्याद्भोगं यथेप्सया ।
चक्रवर्त्तित्वमभ्येति ज्ञानवान् जायते तदा ॥
शिवालयं ततो याति न भूयो जन्म चाप्नुयात् ।
अथ वा घृतमेरुस्तु दातव्यः कथ्यते मया ॥
मेरुः पलानां मध्ये तु सहस्रैः पञ्चभिर्हितः ।
शतैः पञ्चभिरेकैकं पर्वतं तत्र कल्पयेत् ॥
त्रिशृङ्गं त्रिपलं मेरोः काञ्चनं देवतार्चनम् ।
एकैकपलिकं शेषपर्वते वस्त्रभूषिते ॥

कृत्वा पूजां विशेषेण शिवस्याग्रे प्रकल्पयेत् ।
शिवभक्ताय विप्राय दातव्यः शिवमिच्छता ॥
कुलमुद्धरते सोऽपि पैतृकं मातृकं तथा ।
दिव्यं वर्षशतं सार्धं* रुद्रलोके महीयते ॥
भारते पृथिवीखण्डे पतिर्भवति नान्यथा ।
एवं वै खण्डमेरुं तु सितखण्डेन कल्पयेत् ॥
रुद्रलोकपदं याति पितृभिः सह मोदते ।
अथ वा धान्यमेरुं तु शिवस्याग्रे प्रकल्पयेत् ॥
पञ्चखारीमितं मध्ये मेरुं धान्येन कल्पयेत् ।
एकैकं खारिमात्रेण पर्वतं शेषमादिशेत् ॥
पूर्ववद्धेमशृङ्गं तु सवस्त्रं परिकल्पयेत् ।
शिवपूजावसाने तु शिवविप्राय दापयेत् ॥
कल्पकोटिसहस्राणि शिवलोके महीयते ।
पितरस्तस्य मोदन्ते ब्रह्मलोके तथा चिरम् ॥
एतदष्टांशमानेन तिलमेरुं प्रकल्पयेत् ।
शृङ्गाणि पूर्ववत् तस्य तथा चान्यनगेषु च ॥
तिलमेरुः प्रदातव्यः शिवस्याग्रे गुरोः सदा ।
प्रयाति शिवसायुज्यं बन्धुभिः सहितो नरः ॥
दशकोटिसहस्राणि भुक्त्वा भोगान् यथेच्छया ।
समस्तमेदिनीं भुङ्क्ते शिवे पश्चात् प्रलीयते ॥
इति द्वादश संख्याताः पर्वताः कथितास्तव ।
अथ मन्त्रं तथा कालं ज्ञात्वा मेरुं प्रदापयेत् ॥

---

* सार्धमिति क्वचित् पाठः ।

अयनेषु च सर्वेषु ग्रहणेषु विशेषतः ।
मेरुप्रदानं कर्त्तव्यमुपोष्य सुचिरं सदा ॥

इति शैवद्वादशमेरुदानानि ।

## हंस उवाच ।

भूय एव महाबाहो शृणु दानं महाफलम् ।
यद्दत्त्वा पुरुषो राजन् नेह संजायते पुनः ॥
मेरुर्हेममयश्चैव त्रिशृङ्गो राजतोऽपि वा ।
पलत्रयेण सौवर्णो विंशत्या राजतैः पलैः ॥
ताम्रैः पञ्चाशता प्रोक्ता पलानां कांस्यकस्तथा ।
लोहश्च भारमात्रस्तु सीसकस्य तदा स्मृतः ॥
लवणस्याप्येवमेव व्रीहीणामेवमेव च ।
भारद्वयेन खाण्डस्तु गौडः स्यात् पञ्चभारकः ॥
कास्तूरिकः पञ्चपलः कार्पूरः पलविंशतेः ।
कौङ्कुमः स्याच्छतपलः कार्पासः षड्त्रिंशभारकः ॥
एभ्र द्रव्यविशेषैस्तु मेरुः कार्यो विजानता ।
यथागमं तथा कार्यं नात्र कार्या विचारणा ॥
विचारे क्रियमाणे च हेतुकत्वं प्रसज्यते ।
हेतुप्रतिष्ठो विज्ञेयः पुरुषो रागदूषितः ॥
रागादिदोषदुष्टस्तु पुरुषो नात्र संशयः ।
तस्मान्मेरोः प्रमाणं तु भाषितं ब्रह्मणा स्वयम् ॥
आस्तिकाय विनीताय प्रोच्यते कृपया विभो ।
नास्तिकाय न वक्तव्यं वाक्यं धर्मं विजानता ॥
कृत्वा मेरुं त्रिशृङ्गं तु सौवर्णं राजतादिकम् ।

अर्चयेत्* पीतकुसुमैर्जागरं कल्पयेत् ततः ॥
ब्राह्मणं पात्रभूतं तु काले तु ग्रहणादिके ।
आहूय प्रक्षाल्य पादावासने तूपवेशयेत् ॥
मेरुं पर्वतराजं तु गृहाण त्वं द्विजोत्तम ।
ममानुकम्पया ब्रह्मन् वराहः प्रीयतामिति ॥
कोदादिति तु मन्त्रेण ग्रहः कार्यो विजानता ।
मेरुं समर्प्य विप्राय द्रव्येण स्वेच्छया कृतम् ॥
तावद्वर्षसहस्राणि कोटिं वाऽपि महीयते ।
वसन्ति स्वर्गलोकेषु यावदिन्द्राश्चतुर्दश ॥

इति विष्णुधर्मोक्तो मेरुदानविधिः ।

## अथ पञ्चपर्वतदानविधिः ।

तिलपर्वतदानं च तथा लवणपर्वतः ।
कार्पासगुडयोश्चैव तथा सर्षपपर्वतः ॥
धान्यपर्वतदानस्य विधिरत्रापि कीर्त्तितः ।
फलं पुण्यं प्रमाणं च तत् प्रवक्ष्याम्यशेषतः ॥
आषाढे कार्त्तिके चैव माघवैशाखयोरपि ।
पूर्णमास्यां तु दातव्यं दानमेतद्युधिष्ठिर ॥
भूप्रदेशे तु लिप्ते तु पुष्पकीर्णे सुशोभिते ।
तिलानां बहुवर्णानां कुम्भं कुम्भार्धमेव वा ॥
विंशतिद्रोणमथ वा षोडशद्रोणमेव वा ।
तिलद्रोणाष्टकैर्वापि चतुर्भिरथ वा पुनः ॥
त्रिभिर्द्रोणैरलाभे तु कुर्वीत तिलपर्वतम् ।

कुम्भोऽत्र विंशतिद्रोणपरिमाणः ।

---

* दीपकुसुमैरिति पुस्तकान्तरे ।

स च-

द्रोणैः षोडशभिः खारी विंशत्या कुम्भ उच्यते ।

इत्यादिना परिभाषायामुपदर्शितम् । कुम्भो द्रोणद्वयमिति गृह्यमाणे विंशतिद्रोणादिकम् । प्रथमकल्पा*दनुकल्पमनुकल्प्य न समञ्जसं स्यात् । इतरत्र तु सार्धकुम्भेन प्रथमकल्पः । विंशतिद्रोणादिरनुकल्प इति युक्तं स्यात् ।

सुवर्णैरजतैस्ताम्रैः कांस्यैः शौक्तैश्च मौक्तिकैः ।
इक्षुदण्डसमाकीर्णान् वनखण्डाँश्च कारयेत् ॥
गुडेन विविधान् कुर्यात् पाषाणशिखराँस्तथा ।
ताम्बूलफलपुष्पाद्यैरलङ्काराद्यनेकधाः ॥
कुर्यान्मृगपशुपक्षिणस्ताम्रसौवर्णराजतान् ।
द्वादश पूर्णकुम्भाँश्च फलशाखादिशोभितान् ॥
स्थापयित्वा तु सर्वत्र पूजां कृत्वा विधानतः ।
कृत्वा प्रदक्षिणं चैव जानुभ्यां धरणीं व्रजेत् ॥
लवणस्य सर्षपाणां तत्प्रमाणं तथैव च ।
कार्पासपर्वतं चापि तुल्यसंख्यं तथैव च ॥
पुण्यकालेषु लभते नात्र कार्या विचारणा ।
पर्वतस्योत्तरे पार्श्वे ब्रह्मविष्णुमहेश्वरान् ॥
स्थापयेल्लोकपालाँश्च दिशासु विदिशासु च ।
अर्चयेदर्घपाद्यैश्च गन्धपुष्पादिभिः क्रमात् ॥
तोरणैश्च पताकाभिः शोभयित्वा चतुर्दिशम् ।
अग्निकार्यं च कुर्वीत तिलाद्यैः पञ्चवारुणैः ॥
एवं यः कुरुते भक्त्या शैलदानमनुत्तमम् ।
क्रीडाशैले महारम्ये क्रीडित्वा कालमीप्सितम् ॥

---

* दनल्पमनुकल्प्य इति पुस्तकान्तरे ।

धर्मेण पूज्यमानोऽथ शक्रलोकं स गच्छति ।
शक्रलोकं नयेदन्ते कुलकोटिशतत्रयम् ॥
पश्चान्महोदये रम्ये सोमराजपुरोत्तमे ।
रमित्वा वर्षकोटिं तु द्विगुणं परिसंख्यया ॥
भूयो जन्मत्रयं राज्यं भुङ्क्ते निहतकण्टकम् ।

इति विष्णुधर्मोक्तः पञ्चपर्वतदानविधिः ।

## अथ शिखरदानविधिः ।

### राम उवाच ।

शिखराणां ममाचक्ष्व दानं त्रिपुरनाशन ।
यानि दत्त्वा तु दौर्भाग्यं दौर्गत्यं न प्रजायते ॥

### शङ्कर उवाच ।

शृणु राम प्रवक्ष्यामि शिखराणां यथाक्रमम् ।
दानं देयं यथा येन तच्छृणुष्व सनातनम् ॥
माघशुक्लतृतीयायां मार्गशीर्षस्य वा पुनः ।
तृतीया वाऽथ वैशाखे शुक्ला या रोहिणीयुता ॥
प्रौष्ठपद्यां तृतीयायां विशेषेण तु भार्गव ।
गुडेक्षुवस्त्रलवणधान्यकाजाजिशर्कराः ॥
खर्जूरतण्डुलद्राक्षाक्षौद्रैर्मलयजेन च ।
फलैर्मनोहरैः रम्यैः शिखराणि प्रदापयेत् ॥
एषामन्यतमं दद्याद्यथाश्रद्धं विधानतः ।
आत्मप्रमाणं कुर्वीत प्रादेशाभ्यधिकं शुभम् ॥
भुवि गोमयलिप्तायामिक्षुपत्राणि संस्तरेत् ।
ततः कुर्वीत शिखरं गौरीस्थानमनुत्तमम् ॥

द्विहस्तं मूलं कर्त्तव्यं हस्तमात्रं शिरस्तथा ।
भित्तिरिक्षुदलैः कार्या वेष्टयेद्रक्तवाससा ॥
दानद्रव्येण तन्मध्यं पूरयेद्भृगुनन्दन ।
इक्षुपत्रकटे गौरीं तस्योपरि निवेदयेत् ॥
चतुर्भुजां हेममयीं पूजयेत् कुङ्कुमेन तु ।

गौरीरूपमुक्तं ब्रह्माण्डदाने ।

वेष्टयेत् सूक्ष्मवस्त्रेण देवीं शिखरमेव च ।
अष्टाङ्गां पूजयेद्गौरीं मन्त्रैरेतैस्तु भक्तितः ॥
नमो भवान्यै पादौ तु कामिन्यै जानुनी ततः ।
वामदेव्यै तथा चोरू नाभिं चैव जगत्प्रिये ॥
आनन्दायै तु हृदयं नन्दायै पूजयेत् स्तनौ ।
सुभद्रायै मुखं पूज्यं ललितायै नमः शिरः ॥
एवं पूज्य महादेवीं शिखरानभिमन्त्रयेत् ।
यस्मान्निवासः पार्वत्याः शिखर त्वं सुरैर्वृतः ॥
तस्मान्मां पाहि भगवँस्त्वं गौरीशिखरः सदा ।
एवमामन्त्र्य शिखरं तृतीयायां यतव्रतः ॥
ततः स्नात्वा प्रभाते तु दद्यान्मन्त्रेण भक्तितः ।
यस्मात् त्वं सर्वभूतानामुपरिष्टादवस्थितः ॥
तस्माच्छिवः प्रीयतां मे तव दानात् सदाऽनघः ।
अर्धभागं चतुर्थं वा पञ्चमं वा ततो गुरोः ॥
दत्त्वा शेषं तु बन्धूनां शिष्टानां स्वजनस्य च ।
अनुजीविस्वभृत्यानां दुर्गतानां च कामतः ॥
एवं दत्त्वा तु शिखरं गौर्या भुञ्जीत वाग्यतः ।
स मुक्तकेशः संप्राश्य क्षीरं घृतमथापि वा ॥

विधिनानेन यो दद्याद्गौर्याः शिखरमुत्तमम् ।
स वसेद्भवने देव्याः कल्पकोटिशतत्रयम् ॥
पुण्यक्षयादिहागत्य जायते पृथिवीपतिः ।
अनेन विधिना देयं विधिहीनं न कारयेत् ॥
विधिहीनं कृतं सर्वं न दातुः फलदं भवेत् ।

इति विष्णुधर्मोत्तरे शिखरदानविधिः ।

इति श्रीमहाराजाधिराजश्रीमहादेवस्य समस्तकरणाधीश्वरसकलविद्या-
विशारदश्रीहेमाद्रिविरचिते चतुर्वर्गचिन्तामणौ दानखण्डे
पर्वतदानप्रकरणम् ॥ ६ ॥